important part in the fourth Act and the principal trait of his character painted there is his parental affection for his adopted daughter. Though himself an old hermit he is so deeply affected by this feeling, that he is moved to tears on the occasion of his separation from his daughter. He shows much practical wisdom in the counsel he gives to her and the message he sends to the King. He is described as possessed of superhuman power, the result of his ripened asceticism. In him Kálidása has drawn a perfect picture of the sage patriarch.

---

## Important Abbreviations.

*A. G.*—Apte's Guide to Sanskrit composition.
*Ak.*—Amarakos'a.
*Amaru.*—Amarus'ataka.
*Bg.*—Bhagavadgîtâ.
*Bh.*—Bhartṛihari's S'atakas.*
*Bhaṭṭi.*—Bhaṭṭikâvya.*
*Bhav.-P.*—Bhavishya-Purâṇa.
*Cf.*—Compare.
*Com.*—Commentary; commentator.
*D.-K.*—Das'akumâracharita.*
*D.-R.*—Das'arûpaka.
*Gît.*—Gîtagovinda.
*H.-Ch.*—Harshacharita.
*Hitop.*—Hitopades'a.*
*Kâd.*—Kâdambarî.*
*Kâṭ.*—Kâṭayavema (commentator).
*Kathâ.*—Kathâsaritsâgara.
*Kâv.*—Kâvyâdars'a of Daṇḍin.
*Kâv. S.*—Vâmanâ's Kâvyâlaṇkâra Sûtras.
*Kir.*—Kirâtârjunîya.*
*K. P.*—Kâvyaprakâs'a.
*Kum.*—Kumârasaṃbhava.*
*Madhyam.*—Bhâsa's Madhyamavyâyoga.*
*Mah.-Bh.*—Mahâbhârata.
*Mâlav.*—Mâlavikâgnimitra.*
*Malli.*—Mallinâtha.
*Mâl.-Mâdh.*—Mâlatî-Mâdhava.*
*Megh.*—Meghadûta.*
*Mṛich.*—Mṛichchhakaṭika.
*M.-S.*—Manusmṛiti.
*Mudrâ.*—Mudrârâkshasa.*
*M.-W.*—Sir M. Monier-Williams.
*Nâg.*—Nâgânanda.*
*N.-Ch.*—Naishadhîyacharita.
*Pâṇ.*—Pâṇini's Ashṭâdhyâyî.
*Pañchar.*—Bhâsa's Pañcharâtra.*
*Pt.*—Pañchatantra.*
*Ragh.*—Raghuvaṃs'a.*
*Râghav.*—Râghavabhaṭṭa.
*Râm.*—Râmâyaṇa.
*Ratn.*—Ratnâvalî.
*Ṛig.-V.*—Ṛig-Veda.
*Ṛitus.*—Ṛitusaṃhâra.*
*S'.*—The commentator S'aṃkara.
*S'âk.*—Sâkuntala.*
*S.-D.*—Sâhityadarpaṇa.
*S'is'.*—S'is'upâlavadha.
*Sid.-K.*—Siddhânta-Kaumudî.
*Up.*—Upanishad.
*Uttar.*—Uttararâmacharita.*
*Vârt.*—Vârtika.
*Veṇî.*—Veṇîsaṃhâra.*
*Vikr.*—Vikramorvas'îya.*
*Vish.-P.*—Vishṇu-Purâṇa.

* Annotated by the Editor.

# DRAMATIS PERSONÆ.

## MALES.

सूत्रधार—The Manager of the play.
दुष्यन्त—King of Hastinápura, the Hero of the play.
सूत—The King's charioteer.
सेनापति (भद्रसेन)—The King's general.
विदूषक (माधव्य)—The King's confidential companion.
भरत (सर्वदमन)—The King's son.
सोमरात—The King's spiritual guide.
रैवतक (दौवारिक), करभक, कञ्चुकी (पार्वतायन) } The King's servants.
वैतालिकौ—The king's bards.
कण्व (काश्यप)—The foster-father of S'akuntalá.
वैखानस, शार्ङ्गरव, शारद्वत, हारीत, गौतम } Disciples of Kaṇva.
श्याल—The King's brother-in-law, head of the Police-officers.
धीवर—The fisherman.
सूचक, जानुक—Two policemen.
मातलि—Indra's charioteer.
मारीच (कश्यप)—A sage, one of the Prajápatis.

## FEMALES.

नटी—Wife of the Su'tradhâra.
शकुन्तला—Kaṇva's adopted daughter; Dushyanta's Queen and Heroine of the play.
अनसूया, प्रियंवदा—S'akuntalá's friends.
गौतमी—A female ascetic.
चतुरिका, परभृतिका, मधुकरिका } Maids in the king's service.
प्रतीहारी, यवनी—Attendants on the King.
सानुमती—A nymph, friend of Menaká.
अदिति—wife of Kas'yapa.

## OTHER PERSONS MENTIONED.

मघवन् (इन्द्र)—the king of the gods.
जयन्त—Indra's son.
कौशिक—The sage Vis'vámitra, the natural father of S'akuntalá.
मेनका—A heavenly nymph, mother of S'akuntalá.
दुर्वासस्, नारद—Sages.

# भूमिका ।

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥

—वाणस्य ।

साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥

—आचार्यगोवर्धनस्य ।

इह खलु सकलविद्याकलाकलापादिपीठेऽस्मिन्भारते वर्षे निजयशःसुरभीकृत-दिगन्तराला एकरसामृतलाभवृथागर्वितनिर्जरेर्ष्ययेव साहित्यपाथोनिधिमन्थनेन नवरसमपूर्वं कर्णामृतमुत्पाद्य रसिकमनांसि तोषयन्तो वैदर्भीरीतिकृतादराः प्रतिभाशालिनः परःशता महाकविपदमारूढाः कवीश्वराः स्वकृतिमण्डनैर्वाग्वधूं यथायथं मण्डयन्ति स्म । तेषामपि कीर्तिशालिनां सुधांशुरिवोडुपुञ्जमध्यगतः कालिदासोऽग्र्यपदमारोहतीति सर्वेषां प्राचीनार्वाक्तनानां पण्डितानामभ्युपगमः । " पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका साऽर्थवती वभूव ॥ " इति सुभाषितमेवात्र निदर्शनम् । अयं च कविचक्रचूडामणिः मालविकाग्निमित्र–विक्रमोर्वशीय– शाकुन्तलाख्यानि उत्कृष्टानि परस्परापेक्षयावरमध्यमोत्तमगुणानि त्रीणि रूपकाणि, मेघदूत–कुमारसंभव–रघुवंशाभिधानि च त्रीणि-सुललितपदविन्यासानि काव्यानि निवबन्ध । ऋतुसंहाराख्यं खण्डकाव्यमप्येतदीयमेवेति प्रायोवादः । नलोदय-श्रुतवोधशृङ्गारतिलकादयश्च वह्वोऽन्ये प्रवन्धाः कालिदासकृततया प्रसिद्धा अपि न कालिदासीयकाव्यगुणविशेषकक्षामवगाहन्त इति परकर्तृत्वमेवैतेषां पण्डितैः प्रस्थापितम् । कालिदासीया अन्येऽपि केचित्प्रवन्धाः कालवशमित्वाधुना विनष्टाः स्युरित्येतदपि कल्पयितुं शक्यम् ।

एवं सत्यप्ययं महाकविः कं देशं स्वजन्मनालंचकार, कौ वास्य धन्यौ पितरौ, कस्मात्क वाऽसौ विद्याधिगमं कृतवानित्यादि याथातथ्येन नैवैतर्हि ज्ञातुं शक्यते । केवलमयं कृतविद्यो लब्धमहाकवियशाः श्रीमतो विक्रमादित्यस्य राज्ञः सदसमलंचकारेति किंवदन्त्या उपलब्धम् । उक्तं च केनापि—" धन्वन्तरिक्षपणकामरसिंहशङ्कु-वेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥" इति । विक्रमादित्यश्च शालिवाहनशकात्प्राक् १३५ मितेऽब्दे राज्यपदमारूढ इति तद्विदुषां निर्णयः । अयमेवास्य कवेः समय इति प्रमाणान्तरेभ्योपि ज्ञायते । प्रतिपादितं चैतत्सविस्तरमाङ्ग्लभाषाप्रस्तावनायामस्माभिः । केचित्तु यूरोपीया ऊरीकृतसंशोधनकर्माणः संख्यावन्तः कविरयं क्रिस्तीयशकस्य प्रथमशतकादूर्ध्वमित्यपरे चतुर्थपञ्चमशतकयोरन्तरालेऽभवदिति तर्कयन्ति तदहो संशयगहनविनष्टः कोऽपि कालाभ्यूहः ।

# DRAMATIS PERSONÆ.

## MALES.

सूत्रधार—The Manager of the play.
दुष्यन्त—King of Hastinápura, the Hero of the play.
सूत—The King's charioteer.
सेनापति (भद्रसेन)—The King's general.
विदूषक ( माधव्य )—The King's confidential companion.
भरत ( सर्वदमन )—The King's son.
सोमरात—The King's spiritual guide.
रैवतक ( दौवारिक ), करभक, कञ्चुकी ( पार्वतायन ) } The King's servants.
वैतालिकौ—The king's bards.
कण्व ( काश्यप )—The foster-father of S'akuntalá.
वैखानस, शार्ङ्गरव, शारद्वत, हारीत, गौतम } Disciples of Kaṇva.
श्याल—The King's brother-in-law, head of the Police-officers.
धीवर—The fisherman.
सूचक, जानुक—Two policemen.
मातलि—Indra's charioteer.
मारीच ( कश्यप )—A sage, one of the Prajápatis.

## FEMALES.

नटी—Wife of the Su'tradhâra.
शकुन्तला—Kaṇva's adopted daughter; Dushyanta's Queen and Heroine of the play.
अनसूया, प्रियंवदा—S'akuntalá's friends.
गौतमी—A female ascetic.
चतुरिका, परभृतिका, मधुकरिका } Maids in the king's service.
प्रतीहारी, यवनी—Attendants on the King.
सानुमती—A nymph, friend of Menaká.
अदिति—wife of Kas'yapa.

## OTHER PERSONS MENTIONED.

मघवन् ( इन्द्र )—the king of the gods.
जयन्त—Indra's son.
कौशिक—The sage Vis'vámitra, the natural father of S'akuntalá.
मेनका—A heavenly nymph, mother of S'akuntalá.
दुर्वासस्, नारद—Sages.

# भूमिका ।

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥

—बाणस्य ।

साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥

—आचार्यगोवर्धनस्य ।

इह खलु सकलविद्याकलाकलापादिपीठेऽस्मिन्भारते वर्षे निजयशःसुरभीकृत-दिगन्तराला एकरसामृतलाभवृथागर्वितनिर्जरेर्ष्ययेव साहित्यपाथोनिधिमन्थनेन नवरससमपूर्वं कर्णामृतमुत्पाद्य रसिकमनांसि तोषयन्तो वैदर्भीरीतिकृतादराः प्रति-आशालिनः परःशता महाकविपदमारूढाः कवीश्वराः स्वकृतिमण्डनैर्वाग्वधूं यथायथं मण्डयन्ति स्म । तेषामपि कीर्तिशालिनां सुधांशुरिवोडुपुञ्जमध्यगतः कालिदासोऽग्र्यपदमारोहतीति सर्वेषां प्राचीनार्वाचीनानां पण्डितानामभ्युपगमः । “ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाऽधिष्ठितकालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका साऽर्थवती बभूव ॥ ” इति सुभाषितमेवात्र निदर्शनम् । अयं च कविचक्रचूडामणिः मालविकाग्निमित्र–विक्रमोर्वशीय– शाकुन्तलाख्यानि उत्कृष्टानि परस्परापेक्षयावरमध्यमोत्तमगुणानि त्रीणि रूपकाणि, मेघदूत–कुमारसंभव–रघुवंशाभिधानि च त्रीणि-सुललितपदविन्यासानि काव्यानि निबबन्ध । ऋतुसंहाराख्यं खण्डकाव्यमप्येतदीय-मेवेति प्रायोवादः । नलोदय-श्रुतबोधशृङ्गारतिलकादयश्च बहवोऽन्ये प्रबन्धाः कालिदासकृततया प्रसिद्धा अपि न कालिदासीयकाव्यगुणविशेषकक्षामवगाहन्त इति परकर्तृत्वमेवैतेषां पण्डितैः प्रस्थापितम् । कालिदासीया अन्येऽपि केचित्प्रबन्धाः कालवशमित्वाधुना विनष्टाः स्युरित्येतदपि कल्पयितुं शक्यम् ।

एवं सत्यप्ययं महाकविः कं देशं स्वजन्मनालंचकार, कौ वास्य धन्यौ पितरौ, कस्मात्क वाऽसौ विद्याधिगमं कृतवानित्यादि याथातथ्येन नैवैतर्हि ज्ञातुं शक्यते । केवलमयं कृतविद्यो लब्धमहाकवियशाः श्रीमतो विक्रमादित्यस्य राज्ञः सदसमलं-चकारेति किंवदन्त्या उपलब्धम् । उक्तं च केनापि—“ धन्वन्तरिक्षपणकामरसिंहशङ्कु-वेतालभट्टघटकर्परकालिदासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य ॥ ” इति । विक्रमादित्यश्च शालिवाहनशकात्प्राक् १३५ मितेऽब्दे राज्यपदमारूढ इति तद्विदुषां निर्णयः । अयमेवास्य कवेः समय इति प्रमाणान्तरे-भ्योपि ज्ञायते । प्रतिपादितं चैतत्सविस्तरमाङ्ग्लभाषाप्रस्तावनायामस्माभिः । केचित्तु यूरोपीया ऊरीकृतसंशोधनकर्माणः संख्यावन्तः कविरयं क्रिस्तीयशकस्य प्रथमशतकादूर्ध्वमित्यपरे चतुर्थपञ्चमशतकयोरन्तरालेऽभवदिति तर्कयन्ति तदहो संशयगहननिष्ठः कविकालव्यूहः ।

श्रीमता कालिदासेन कविना सर्वत्रापि वैदर्भी रीतिरेवाश्रितात्मकृतिषु । तामिमां रीतिं श्रीबिल्हण इत्थं वर्णयति—"अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः । वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥" इति । ईदृशमस्य कवेर्वैश्यवाक्त्वं यत् "श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥" इति दण्ड्युक्ताः सर्वेऽपि काव्यगुणाः समुल्लसन्त्यस्य निबन्धेषु । तत्रापि प्रसादः शेखरीभूतः । रसश्च शृङ्गारो मूर्धन्यत्वेन कालिदासीयग्रन्थेषु समुपनिबद्धः । उपमाचातुर्येण कल्पनाविशालत्वेन पदमाधुर्येणासमासभूयस्त्वादिगुणैश्च सर्वाङ्गीणमनोज्ञतयास्य प्रबन्धानामयमितरकविभ्यः सुतरां श्लाघ्य इति सुप्रतीतमेव सुधियाम् । आहुश्च रसिकाः—"उपमा कालिदासस्य" इति ।

इदमभिज्ञानशकुन्तलं न केवलं कालिदासीयनाटकत्रय उत्कृष्टगुणं किं तु सर्वेषु रूपकग्रन्थेषु एकतमः प्रबन्धः । अस्य सप्ताङ्काः । तत्र करुणप्रधानश्चतुर्थ उत्कृष्टतमः । तदुक्तम्—'काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला । तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ॥' इति । एतत्संपूर्णनाटकगुणैरुपेतम् । अस्मिन्पदघटना तथा मधुरवर्णोपेता यथा सर्वत्र द्राक्षापाक एवोपलभ्यते न क्वचिदपि नारिकेलफलसंमितत्वं वचसाम् । तथा चेदं सर्वत्रानुप्रासैः क्वचन श्लेषादिभिस्तत्र तत्रोचितैरलंकारैश्चोद्भासितम् । अस्मिन्नाटके नायकः पुरुकुलावतंसो दुष्यन्तः । स च धीरोदात्तनायकगुणोपेतः । नायिका शकुन्तला । सा कन्यका मुग्धा च । संभोगशृङ्गारोऽङ्गी । करुणाद्भुतहास्यभयानकास्तदङ्गत्वेन वीरशान्तवीभत्सादयश्च छटामात्रेणोपलभ्यन्ते । एतत्सर्वं टीकाकारेण स्वयमेव ग्रन्थान्ते विस्तरत उक्तमिति दिग्दर्शनं कृत्वैवास्माभिर्विरम्यते । अस्येतिवृत्तं महाभारतादुद्धृतम् । किंत्वत्रोपादेयतारतम्यानुसारेण यो यः काव्यस्यापकर्षकः सहृदयानां वैरस्यापादको वा तस्मिन्नंशस्तं तं विहाय परिवर्त्य वा स्वशक्तेर्वाग्वैदग्ध्याच्च कविना तत्र तत्र विशेषः कृतः । इदं च दुष्यन्तशकुन्तलोपाख्यानं पद्मपुराणान्तर्गतस्वर्गखण्डेऽपि समुपलभ्यते । द्वे अपीमे कथे मूलादुद्धृत्य अस्या भूमिकाया अन्ते निवेशिते जिज्ञासुभिर्द्रष्टव्ये । अस्मिन्नाटके वर्णितं कथावस्त्वङ्कविभक्तं सारांशतः सुलभावगमार्थमत्रोपनिबध्यते—

**प्रथमाङ्के**—तावदादौ नान्दीपठनम् । ततः प्रस्तावनायां सूत्रधारेण नाटकीयस्य वस्तुन उपक्षेपः । मृगयाविहारी पार्थिवो दुष्यन्तः केनाप्यतिरंहसा सारङ्गेण दूरं हृतोऽनुमालिनीतीरं कुलपतेः कण्वस्याश्रमं निकषा प्राप । यावच्च बाणपथवर्तिनस्तस्य कृष्णसारस्य वधार्थं धनुषि शरं संदधाति तावत्केचित्तपस्विन उपेत्योच्चै राजानमब्रुवन् 'आश्रममृगोयं न हन्तव्यः' इति । तद्वचनानुरोधात्प्रतिसंहृतसायकस्तैश्चाभिनन्द्य 'चक्रवर्तिनं पुत्रमवाप्नुहि' इति कृताशीर्वचनस्तन्निर्दिष्टं कण्वाश्रमं प्रवेष्टुमैच्छद्राजा । तत आश्रमवासिनामुपरोधो माभूदिति रथादि दूरं स्थापयित्वा दुष्यन्तो विनीतवेषेण तपोवनं प्रविवेश । दक्षिणबाहुस्पन्दनेन पुरः प्रगुन इव गच्छन् वृक्षसेचनव्यापृत[illegible]कन्यात्रयं ददर्श । तासां

विश्रम्भालापेषु सख्योस्तन्नामग्रहणाच्छकुन्तलां ज्ञात्वा तस्या अव्याजमनोहरं रूपं दृष्ट्वा विस्मितो बभूव। अत्रान्तरे भ्रमरबाधापीडिता शकुन्तला 'राजरक्षितव्यानि तपोवनानि। अत्र दुष्यन्तमाक्रन्द' इति सखीभ्यां सनर्म भणिता। तमवसरं साधु बुद्ध्वा दुष्यन्तस्ता आत्मानमदर्शयत्। ततः संभ्रान्तां शकुन्तलां दृष्ट्वा तत्सख्यौ अनसूयाप्रियंवदे दुष्यन्तं स्वागतं व्याजह्रतुः। पश्चात्ताभ्यां कथाप्रसङ्गेन शकुन्तलाया जन्मवृत्तान्तमुपलभ्य राजा तस्याः प्राप्तिं प्रति जाताशोऽभवत्। शकुन्तलापि राजानं दृष्ट्वा तपोवनविरोधिनो विकारस्य गमनीया संवृत्ता। दुष्यन्तोऽपि सख्यौ प्रति तस्याः सासूयं भाषितं श्रुत्वा मदनसूचकांश्च तास्ताश्चेष्टा दृष्ट्वा 'किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात्' इति मनसि विभावयति स्म। अत्रान्तरे नृपस्यन्दनालोकभीतस्य वन्यगजस्य केनापि वनौकसोच्चैरुद्घोषितं वनप्रवेशं श्रुत्वा संभ्रान्ताः कन्यका उत्तस्थुः। आहतुश्च सख्यौ—'आर्य पर्याकुलाः स्मः। अनुजानीहि न उटजगमनाय। असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम्' इति। राजापि 'दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि तद्यथाश्रमबाधा न भवति तथा यतिष्ये' इत्युक्त्वा निष्क्रान्तः॥

**द्वितीयाङ्के**—मुनिकन्यकादर्शनेन स्वनगरगमनं प्रति मन्दौत्सुक्यो राजा सेनापतिमाहूय तं 'वनग्राहिणो निवर्तयस्व सैनिकांश्च यथा तपोवनोपरोधो न भवेत्तथा निषेद्धव्याः' इत्यादिशत्। अनन्तरं रहसि स्ववयस्याय माधव्याय शकुन्तलामधिकृत्यात्मनो मनोवस्थां न्यवेदयत्। तथा च तस्याः सुरयुवतिसंभवत्वमात्मनः परिणययोग्यतां चाख्याय यथा निसर्गशालीनया तयाप्यात्मनो भावस्तत्तत्प्रसंगेन काममाविष्कृतस्तथा सर्वमाख्यत्। अत्रान्तर ऋषिकुमारकौ राजानमभ्येत्याहतुः—'राजन् विदितो भवानत्रस्थस्तपस्विभिः। ते चेष्टिविघ्नवारणाय कतिपयदिवसमात्रं भवता सनाथीक्रियतामाश्रम इत्यभ्यर्थयन्ते' इति। तस्मिन्नेवावसरे देवीनामाज्ञप्तिहरो दूतः कश्चिन्नगरादेत्य महादेव्या किमपि पुत्रकृत्यमनुष्ठातुं भर्ताहूत इति विज्ञापयामास। ततः कार्यद्वयाकुलो राजा 'वयस्य त्वमम्बया पुत्र इति परिगृहीतोऽतस्त्वमेव नगरं गच्छ। अहमृषिगौरवादत्र तिष्ठामि। न खलु तापसकन्यकायां ममाभिलाषः। अतो न मद्वचः परमार्थेन गृह्यताम्' इत्याभाष्य माधव्यं सकलानुयात्रिकैः सह स्वराजधानीं प्रेषयामास। स्वयं च तत्र तस्थौ॥

**तृतीयाङ्के**—निरुपप्लवं संस्थिते कर्मणि सदस्यैरनुज्ञातः समदनावस्थो दुष्यन्तः मनोविनोदनार्थं शकुन्तलां द्रष्टुं मालिनीतीरं जगाम। तत्र लतामण्डपेऽनङ्गेन बलवद्बाध्यमानां शिलापट्टमधिशयानां सखीभ्यां कृतसंवीजनाद्युपचारां शकुन्तलां ददर्श। दूरगतमन्मथा शकुन्तला सख्युपदेशेन सोपालम्भं मदनलेखं कृत्वाऽवाचयत्। तमेवात्मदर्शनाय समीचीनमवसरं मत्वा राजा सहसोपससार। ततः सख्यौ 'महाभाग इयं नौ प्रियसखी त्वामेवोद्दिश्य भगवता मदनेन इदमवस्थान्तरं नीता। तदर्हस्यभ्यु-

पपत्त्या जीवितमस्या अवलम्बितुम् । यथा च नेयं बन्धुजनशोच्या भवति तथा करोतु महाराजः' इत्युक्त्वा केनाप्यपदेशेन लतागृहान्निर्जग्मतुः । शकुन्तलापि गन्तुमिच्छन्ती राज्ञा बलान्निवारिता । एवं मुहूर्तमात्रमेकत्र मिलितयोश्चिरप्रार्थितमन्योन्यसमागमसुखमनुभवतोस्तयोः शान्त्युदकहस्ता गौतमी शकुन्तलां द्रष्टुमाजगाम । तया निमन्त्रिता सा दुःखेनोटजं गच्छन्ती 'लतावलय संतापहारक आमन्त्रये त्वां भूयोऽपि परिभोगाय' इति च्छलेन राजानमामन्त्र्य निर्जगाम । राजापि तद्गमनेन विषण्णः सवनकर्मव्यापृतानामृषीणां रक्षोभयवारणाय गतः । ततः प्राप्तावसरो गान्धर्वेण विधिना शकुन्तलायाः पाणिं गृहीत्वा कतिपयदिवसापगमे ऋषिभिरनुज्ञातः स्वनगरं प्रस्थितस्तस्यायङ्गुलीयकं दत्वा 'अत्रैकैकं दिवसे दिवसे मम नामाक्षरं गणय । यावदन्तं गच्छसि तावद् मदवरोधगृहप्रवेशं नेता जनस्तव समीपमुपैष्यति' इत्युक्त्वा स्वपुरं निववृते दुष्यन्तः ॥

चतुर्थाङ्के—स्वपुरं निवृत्तो राजा शकुन्तलां स्मरति न वा तस्या गान्धर्वेण विधिना निर्वर्तितं विवाहमङ्गलं कण्वस्याभिमतं भवेद्वा नेति च पर्याकुलयोः कदाचित्पुष्पावचयव्यग्रयोः सख्योः सुलभकोपो महामुनिर्दुर्वासा उटजं प्राप्त आत्मानमतिथिं न्यवेदयत् । भर्तृगतचिन्तया हृदयेनासंनिहितया शकुन्तलयाऽलक्षितः स आत्मानमवज्ञातं मत्वा 'यमनन्यमनसा विचिन्तयन्ती मां न वेत्सि स बोधितोऽपि त्वां न स्मरिष्यति' इति तां शप्त्वा निर्जगाम । शकुन्तलां शप्तां श्रुत्वानसूयर्षिप्रसादनाय प्रियंवदां प्राहिणोत् । तया किमपि सानुक्रोशः कृतः सः 'न मे वचनमन्यथा भवितुमर्हति । किं त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति मन्त्रयमाण एवान्तर्हितः । शकुन्तलाया मनोव्यथां परिहरन्त्यौ सख्यौ शापवृत्तान्तं तस्यै न निवेदयामासतुः । अथ प्रवासात्प्रतिनिवृत्तः कण्वोऽशरीरिण्या वाचा शकुन्तलाया दुष्यन्तेन पाणिग्रहणमन्तरेण परिगृहीतार्थः कृतः । ततः स लज्जावनतमुखीं दुहितरं परिष्वज्य तत्कर्माभिननन्द । तां चापन्नसत्त्वां दृष्ट्वा भर्तृगृहं विसृष्टुमनास्तस्याः प्रस्थानमङ्गलविधिमादिदेश । गौतम्यादितापसीभिराशीर्वचनपूर्वं निर्वर्तितप्रस्थानकौतुका सखीकृतमङ्गलसमालम्भना च शकुन्तला स्नानोत्तीर्णं तातकण्वं ववन्दे । तस्मात्—'वत्से ययातेः शर्मिष्ठेव भर्तुर्बहुमता भव' इति चाशिषं लेभे । ततस्तातवचनेन हुतान्वैतानानग्नीन् प्रदक्षिणीकृत्य वनदेवताश्च प्रणम्यर्षिरक्षिता स्नेहविक्लवेन तातेन रुदतीभ्यां सखीभ्यां चानुगता पदे पदे स्खलन्ती प्रतस्थे । काश्यपोऽप्युदकान्तं स्निग्धो जनोऽनुगन्तव्य इति शास्त्रानुरोधादुदकान्तं गत्वानुरूपं राज्ञे संदिश्य शकुन्तलामपि समयोचितमनुशशास । सख्यावपि 'सखि यदि स राजा प्रत्यभिज्ञानमन्थरो भवेत्तत्तस्येदमात्मनामाङ्कितमङ्गुलीयकं दर्शयिष्यसि' इति संदिदिशतुः । अनन्तरमनसूयाप्रियंवदाभ्यां सह स्वाश्रमं निवृत्ते कण्वे गौतमीशार्ङ्गरवाद्याः शकुन्तलया सह हस्तिनापुरमभिप्रतस्थिरे ॥

पञ्चमाङ्के—राजकुलं प्राप्तास्ते सर्वे राजाज्ञया पुरोधसा सोमरातेन श्रौतेन विधिना सत्कृत्य प्रवेशिता आशीर्वचनपूर्वं राज्ञे शकुन्तलामधिकृत्य कण्वसंदेशं निवेदयामासुः—'यन्मिथः समयादिमां मदीयां दुहितरं भवानुपायंस्त तन्मया प्रीतिमता युवयोरनुज्ञातम्। तदिदानीमापन्नसत्त्वेयं प्रतिगृह्यतां सहधर्मचरणाय।' इति। ततो दुर्वासःशापदोषाद्राजा तस्याः परिणयं न सस्मार। आह च—'भो तपस्विनः निपुणं विचारयन्नपि न स्मरामि पाणिग्रहणमस्याः। तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणं मन्यमानः प्रतिपत्स्ये।' इति। यदा च कुपितकण्वशिष्याभ्यां साधिक्षेपमुक्तोऽप्यवगुण्ठनापनयनानन्तरं प्रत्यक्षं दृष्ट्वापि स तां नाङ्गीचकार तदाभिज्ञानेन तस्याशङ्कामपनेतुं प्रववृते शकुन्तला। किं त्वङ्गुलीयकशून्यामङ्गुलिं दृष्ट्वा विषण्णमानसा तस्मै प्रत्ययवचनं दत्तवती। तस्मिन्नपि विफलीभूते कोपशोकावेगाद्वेपमानगात्रयष्टिमनुगन्तुमीहमानां तां निराकृत्य शार्ङ्गरवाद्याः 'पतिकुले तव दास्यमपि क्षमम्' इत्युक्त्वा प्रस्थिताः। ततो राज्ञा पृष्ट उपाध्याय आह—'अत्रभवत्याप्रसवादस्मद्गृह एव तिष्ठतु। त्वं प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति सिद्धादेशः। तद्यदि स मुनिदौहित्रस्तल्लक्षणोपपन्नस्तदिमामभिनन्द्य शुद्धान्तं प्रवेशयिष्यसि। विपर्ययेऽस्याः पितुः समीपनयनमवस्थितमेव' इति। राज्ञानुमतश्च तां गृहीत्वा स्वगृहं गन्तुं प्रवृत्तः। ततः—'भगवति वसुधे देहि मे विवरम्' इति रुदतीं तमनु प्रस्थितां स्वानि भाग्यानि निन्दन्तीं तां बालां स्त्रीसंस्थानमेकं ज्योतिरुत्क्षिप्य जगाम। पुरोधसा प्रतिनिवृत्याख्याते तस्मिन्नाश्चर्ये पर्याकुलो दुष्यन्तः शयनगृहं प्रविवेश॥

षष्ठाङ्के—वहति काल एकदा शक्रावताराभ्यन्तरवर्ती कश्चिद्धीवरो महामूल्यरत्नोपेतमङ्गुलीयकं विक्रयाय दर्शयन्नगररक्षिभ्यां गृहीतो नागरिकसमीपं नीतोऽकथयत्—'खण्डशः कल्पितस्य रोहितमत्स्यस्योदरान्मयेदं लब्धम्' इति। तच्छ्रुत्वा नागरिको राजकुलं गत्वा राजशासनं प्रतीक्ष्य प्रत्यागतो रक्षिणावाह—'मुच्यतामेष जालोपजीवी। उपपन्नोऽस्याङ्गुलीयकागमवृत्तान्तः। एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दत्तः।' इति। अथाङ्गुलीयकदर्शनादनुस्मृतशकुन्तलावृत्तान्तः पश्चात्तापमुपगतो राजा न क्वचिदपि निवृतिं लेभे। केवलं वयस्यमाधव्यद्वितीयः शकुन्तलावृत्तान्तं स्मरन्मुहुर्मुहुरात्मचेष्टितं निन्दन् शकुन्तलाप्रतिकृतिलेखनादिना तद्गतैरालापैश्च दिवसं निन्ये। स्वप्नसमागमोऽप्यस्य प्रजागरात्खिलीभूतः। बाष्पप्रवृत्तिश्चित्रगताया अपि दर्शनं नाददात्। एकदा तु पौरकार्यावेक्षणनियुक्तेनामात्येन पत्रिकान्तरे लिखितमनपत्यस्य सार्थवाहस्य धनमित्रस्य नौव्यसने निधनं श्रुत्वा राजगामी तस्यार्थ इति चामात्येन लिखितं पठित्वात्मनोऽनपत्यतां स्मरन् मदन्ते पुरुवंशश्रिय एष एव वृत्तान्त इति मनसि भावयन् द्विगुणीकृतोद्वेगो मोहमुपागमत्। एतं सर्वं वृत्तान्तं मेनकानियुक्ता सानुमती नाम काचिदप्सराः तिरस्करिणीप्रच्छन्ना प्रत्यक्षीकृत्य स्वसख्ये प्रियं निवेदयितुं जगाम। अत्रान्तरेऽदृष्टरूपेण केनापि सत्त्वेन

गृहीतो माधव्योऽब्रह्मण्यमुद्घोषितवान् । प्रत्यागतो राजा तमार्तस्वरं श्रुत्वा स्ववयस्यपरिभाविनस्तस्य वधार्थं धनुष्यस्त्रं संदधे । तदा माधव्यमुत्सृज्येन्द्रसारथिर्मातलिराविर्भूय 'हरिणा तवासुराः शरव्यं कृतास्तेष्विदं धनुर्विकृष्यतां न मादृशेषु' इत्युवाच । राज्ञा स्वागतेनाभिनन्दितश्च तस्मा आगमनकारणमाह—'कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणस्ते सख्युरिन्द्रस्याजय्योऽस्ति । तस्य त्वं निहन्ता स्थितः । अत आत्तशस्त्रो भवानिममैन्द्रं रथमारुह्य विजयाय प्रतिष्ठताम्' इति । तच्छ्रुत्वा दुष्यन्तः 'अनुगृहीतोऽहममुया मघोनः संभावनया' इत्युक्त्वा माधव्यमात्मगमनमन्तरेणामात्यमार्यपिशुनं परिगृहीतार्थं कर्तुं नियुज्य स्वयमैन्द्रं रथमारुह्य दिवं जगाम ॥

**सप्तमाङ्के**—कृतदेवकार्यो मघोना सत्क्रियाविशेषेण संभावितो दुष्यन्तो दिवः पृथिवीं निवर्तमानो हेमकूटं नाम किंपुरुषपर्वतं दृष्ट्वा तत्र तपस्यतो भगवतो मारीचस्य दर्शनलालसो मातलिना संयन्त्रिताद्रथादवततार । ततो राजागमनं कश्यपाय निवेदयितुं गते मातलावशोकमूलमध्यासीनो नरपतिः शुभसूचकं निमित्तमनुभवन् तापसीभ्यां निषिध्यमानमपि प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षन्तं कमपि बालमपश्यत् । तदौरस इव पुत्रे तस्मिन्राज्ञो मनोऽस्निह्यत् । महतस्तेजसो बीजं कस्यायमात्मजः स्यादिति विमृशन् प्रसारिते तस्य करे चक्रवर्तिलक्षणमप्यपश्यत् । तच्चास्य प्रथममाशाजननमभूत् । वाङ्मात्रेण विरमयितुमशक्योऽयमिति मत्वैका तापसी तं प्रलोभयितुं मृत्तिकामयूरमानेतुमाश्रमं जगाम । अथान्या राजानं दृष्ट्वाह—'भद्रमुख मोचयानेन दुर्मोचहस्तग्रहेण बाध्यमानं बालमृगेन्द्रम् ।' इति । ततस्तद्वचनमनुतिष्ठन् बालस्पर्शमुपलभ्य कामपि निर्वृतिं गतः स तां तस्य व्यपदेशं पप्रच्छ । सा च तस्य पुरुवंशप्रभवमप्सरःसंभूतिं चाख्यत् । एतद्द्वितीयमाशाजननमभूत् । अथ तत्तद्व्यतिकरेण आत्मन एवायं पुत्र इति जातप्रत्ययस्तं बालं परिष्वज्य तापसीभ्यां तमुदन्तमुपलभ्य तत्रागतां शकुन्तलामभिननन्द । पादप्रणामादिना च तस्या विषादशल्यमपानयत् । तादृशं तं दृष्ट्वा तत्रोपस्थितो मातली राजानं दिष्ट्याऽवर्धयत् । अनन्तरं सदारपुत्रो दुष्यन्तो भगवन्तं कश्यपमदितिं च द्रष्टुमगच्छत् । मारीचोऽपि तावुभावाशिषानुगृह्य 'दुर्वाससः शापदोषादियं तपस्विनी त्वया प्रत्यादिष्टा नान्यथा । स चायं शापोऽङ्गुलीयकदर्शनावसानः' इति कथयित्वा प्रत्यादेशविषये उभावपि निर्वृतचित्तावकरोत् । मेनकापि तत्रैव परिचरन्ती भर्तृसमागतां शकुन्तलां दृष्ट्वा सुखिता बभूव । दुष्यन्तोऽपि मारीचेन विसृष्टः सदारकया शकुन्तलया सह पुरं निवृत्तः पौरैरभिनन्दे ॥

अथ

# शकुन्तलोपाख्यानम् ।

## ( १ )

### श्रीमहाभारते आदिपर्वणि

**जनमेजय उवाच—**

संभवं भरतस्याहं चरितं च महामतेः । शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ॥
दुष्यन्तेन च वीरेण यथा प्राप्ता शकुन्तला । श्रोतुमिच्छामि तत्त्वज्ञ सर्वं मतिमतां वर ॥

**वैशंपायन उवाच—**

स कदाचिन्महाबाहुः प्रभूतबलवाहनः । वनं जगाम गहनं हयनागशतैर्वृतः ॥
बलेन चतुरङ्गेण वृतः परमवल्गुना । निर्ययौ परमप्रीत्या वनं मृगजिघांसया ॥
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः । महीमापूरयामास घोषेण त्रिदिवं तथा ॥
स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् । तद्वनं मनुजव्याघ्र सभृत्यबलवाहनः ॥
लोडयामास दुष्यन्तः सूदयन्विविधान्मृगान् । चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान्
तत्र विद्रुतयूथानि हतयूथपतीनि च । मृगयूथान्यथौत्सुक्याच्छन्दांश्चक्रुस्ततस्ततः ॥
तद्वनं बलमेघेन शरधारेण संवृतम् । व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥
ततो मृगसहस्राणि हत्वा सबलवाहनः । राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् । विपुलं मधुरारावैर्नादितं विहगैस्तथा ॥
एवंगुणसमायुक्तं ददर्श स वनं नृपः । नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसंनिभम् ॥
प्रेक्षमाणो वनं तत्तु संप्रहृष्टविहंगमम् । आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥
नानावृक्षसमाकीर्णं संप्रज्वलितपावकम् । मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम् ॥
पुण्यस्वाध्यायसंघुष्टां तापसैरुपशोभिताम् । तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ॥
आश्रमप्रवरं रम्यं महर्षिगणसेवितम् । नदीमाश्रमसंबद्धां दृष्ट्वाश्रमपदं तथा ॥
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा । महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः । मुनिं विरजसं द्रष्टुं गमिष्यामि तपोवनम् ॥
काश्यपं स्थीयतामत्र यावदागमनं मम । सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः ॥
पुरोहितसहायश्च जगामाश्रममुत्तमम् । तत्र तत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ॥
जपहोमपरान्सिद्धान्ददर्श परवीरहा । नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तमाश्रमम् । उवाच क इहेत्युच्चैर्वनं संनादयन्निव ॥

---

1 In these extracts lines giving unnecessary and lengthy details have been omitted, but care has been taken to preserve the thread of the narrative intact.

श्रुत्वाथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी । निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी ॥
सा तं दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा । स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ॥
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि । पप्रच्छानामयं राजन्कुशलं च नराधिपम् ॥
उवाच स्मयमानेव किं कार्यं क्रियतामिति । तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ॥
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् । क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ॥

**शकुन्तलोवाच—**

गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात् । मुहूर्तं संप्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥

**वैशंपायन उवाच—**

अपश्यमानस्तमृषिं तया चोक्तस्तथा च सः । तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥
विभ्राजमानां वपुषा तपसा च दमेन च । रूपयौवनसंपन्नामित्युवाच महीपतिः ॥
कासि कस्यासि सुश्रोणि किमर्थं चागता वनम् । एवं रूपगुणोपेता कुतस्त्वमसि शोभने ॥
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः । इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥
एवमुक्ता तु सा कन्या तेन राज्ञा तदाश्रमे । उवाच हसती वाक्यमिदं सुमधुराक्षरम् ॥
कण्वस्याहं भगवतो दुष्यन्त दुहिता मता । तपस्विनो धृतिमतो धर्मज्ञस्य मनीषिणः ॥

**दुष्यन्त उवाच—**

ऊर्ध्वरेता महाभागो भगवाँल्लोकपूजितः । चलेद्धि वृत्ताद्धर्मोऽपि न चलेत्संशितव्रतः ॥
कथं त्वं तस्य दुहिता संभूता वरवर्णिनि । संशयो मे महानत्र तं मे छेत्तुमिहार्हसि ॥

**शकुन्तलोवाच—**

यथायमागमो मह्यं यथा चेदमभूत्पुरा । शृणु राजन्यथातत्त्वं यथास्मि दुहिता मुनेः ॥
ऋषिः कश्चिदिहागम्य मम जन्माभ्यनोदयत् । तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव ॥

**कण्व उवाच—**

तप्यमानः किल पुरा विश्वामित्रो महत्तपः । सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥
तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति । भीतः पुरंदरस्तस्मान्मेनकामिदमब्रवीत् ॥
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु । असावादित्यसंकाशो विश्वामित्रो महातपाः
तप्यमानस्तपो घोरं मम कम्पयते मनः । चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् ॥
लोभयित्वा वरारोहे तपसस्तं निवर्तय ॥

**मेनकोवाच—**

त्वयैवमुक्ता च कथं समीपमृषेर्न गच्छेयमहं सुरेन्द्र ।
कामं तु मे मारुतस्तत्र वासः प्रक्रीडिताया विवृणोतु देव ॥
भवेच्च मे मन्मथस्तत्र कार्ये सहायभूतश्च तव प्रसादात् ॥

**कण्व उवाच—**

एवमुक्तस्तया शक्रः संदिदेश सदागतिम् । प्रातिष्ठत तदा काले मेनका वायुना सह ॥

अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम् । विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥

अभिवाद्य ततः सा तं प्राक्रीडदृषिसंनिधौ ।अपोवाह च वासोऽस्या मारुतः शशिसंनिभम् ॥
तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा । चकार भावसंसर्गं तया कामवशं गतः ॥
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता । तौ तत्र सुचिरं कालमुभौ व्याहरतां तदा ॥
स मुनिर्जनयामास मेनकायां शकुन्तलाम् । जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ॥
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् । पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् । निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ॥
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते । क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता । शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥
एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् । शकुन्तला च पितरं मन्यते मामनिन्दिता ॥

**शकुन्तलोवाच—**

सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप । इति ते कथितं राजन्यथावृत्तं श्रुतं मया ॥

**दुष्यन्त उवाच—**

सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे । भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने । गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ॥

**शकुन्तलोवाच—**

फलाहारी गतो राजन्पिता म इत आश्रमात् ।
मुहूर्तं त्वं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥

**दुष्यन्त उवाच—**

इच्छामि त्वां वरारोहे भजमानामनिन्दिते । आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ॥
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः । अष्टावेव समासेन विवाहा धर्मतः स्मृताः ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ॥
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ॥
सा त्वं मम सकामस्य सकामा वरवर्णिनि । गान्धर्वेण विवाहेन भार्या भवितुमर्हसि ॥

**शकुन्तलोवाच—**

यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम । प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥
सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः । मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरम् ॥
युवराजो महाराज सत्यमेतद्ब्रवीमि ते । यद्येतदेवं दुष्यन्त अस्तु मे संगमस्त्वया ॥

**वैशंपायन उवाच—**

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते॥
यथा त्वमर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते । एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ॥
जग्राह विधिवत्पाणावुवास च तया सह । विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ॥
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् । तया त्वां नाययिष्यामि निवासं स्वं शुचिस्मिते ॥
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय । मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिवः ॥

भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति । एवं संचिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥
मुहूर्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत् । शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः । उवाच भगवान्प्रीतः पश्यन्दिव्येन चक्षुषा ॥
त्वयाद्य भद्रे रहसि मामनादृत्य यः कृतः । पुंसा सह समायोगो न स धर्मोपघातकः ॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते । सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥
धर्मात्मा च महात्मा च दुष्यन्तः पुरुषेश्वरः । अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले ॥
महात्मा जनिता लोके पुत्रस्तव महाबलः । य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीम् ॥

**शकुन्तलोवाच—**

मया पतिर्वृतो योऽसौ दुष्यन्तः पुरुषोत्तमः । तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ॥

**कण्व उवाच—**

प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि । गृहाण च वरं मत्तस्त्वं शुभे यदभीप्सितम् ॥

**वैशंपायन उवाच—**

ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तदा । शकुन्तला पौरवाणां दुष्यन्तहितकाम्यया ॥
प्रतिज्ञाय तु दुष्यन्ते प्रतियाते शकुन्तला । असूयत च वामोरूः कुमारममितौजसम् ॥
त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम् । रूपौदार्यगुणोपेतं दौष्यन्तिं जनमेजय ॥
जातकर्मादिसंस्कारं कण्वः पुण्यकृतां वरः । विधिवत्कारयामास वर्धमानस्य धीमतः ॥
दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान् । चक्राङ्कितकरः श्रीमान्महामूर्धा महाबलः ॥
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत । षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ॥
सिंहान्व्याघ्रान्वराहांश्च महिषांश्च गजांस्तथा । बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥
आरोहन्दमयंश्चैव क्रीडंश्च परिधावति । ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ॥
अस्त्वयं सर्वदमनः सर्वान्हि दमयत्यसौ । स सर्वदमनो नाम कुमारः समपद्यत ॥
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् । समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ॥
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह । शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात् ॥
भर्तुः प्रापयतागारं सर्वलक्षणपूजितम् । नारीणां चिरवासो हि बान्धवेषु न रोचते ॥
कीर्तिचारित्रधर्मघ्नस्तस्मान्नयत मा चिरम् । तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः ॥
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् । गृहीत्वामरगर्भाभं पुत्रं कमलोचनम् ॥
आजगाम ततः शुभ्रूर्दुष्यन्तं विदिताद्वनात् । आभिसृत्य च राजानं विदिता च प्रवेशिता ॥
सह तेनैव पुत्रेण बालार्कसमतेजसा । निवेदयित्वा ते सर्वे स्वाश्रमं पुनरागताः ॥
पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला । अयं पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् ॥
यथा मत्संगमे पूर्वं कृतो यः समयस्त्वया । सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि
अब्रवीन्न स्मरामीति कस्य त्वं दुष्टतापसि । धर्मकामार्थसंबन्धं न स्मरामि त्वया सह ॥
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु । सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी ॥
निःसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला । संरम्भामर्षताम्राक्षी स्फुरमाणौष्ठसंपुटा ॥

कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत । आकारं गूहमाना च मन्युना च समीरिता ॥

तपसा संभृतं तेजो धारयामास वै तदा । सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ॥
भर्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् । जानन्नपि महाराज कस्मादेवं प्रभाषसे ॥
न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः ॥
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥
किं नु कर्माशुभं पूर्वं कृतवत्यस्मि जन्मनि । यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति च त्वया ॥
कामं त्वया परित्यक्ता गमिष्यामि स्वमाश्रमम् । इमं तु बालं संत्यक्तुं नार्हस्यात्मजमात्मना

**दुष्यन्त उवाच—**

न पुत्रमभिजानामि त्वयि जातं शकुन्तले । असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे । विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥
सर्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि । नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥

**शकुन्तलोवाच—**

आत्मानं सत्यधर्मौ च पालयन्पृथिवीपते । नरेन्द्रसिंह कपटं न वोढुं त्वमिहार्हसि ॥
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् । न हि तीव्रतरं किंचिदनृतादिह विद्यते ॥
राजन्सत्यं परं ब्रह्म सत्यं च समयः परः । मा त्याक्षीः समयं राजन्सत्यं संगतमस्तु ते ॥
अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् । आत्मना हन्त गच्छामि त्वादृशे नास्ति संगत॥
त्वामृतेऽपि हि दुष्यन्त शैलराजावतंसिकाम् । चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥

**वैशंपायन उवाच—**

एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला । अथान्तरीक्षाद्दुष्यन्तं वागुवाचाशरीरिणी ॥
भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम् । त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला
शाकुन्तलं महात्मानं दौष्यन्तिं भर पौरवम् । भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ॥
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः । तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम्
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् । शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम् ॥
अहं चाप्येवमेवैनं जानामि स्वयमात्मजम् । यद्यहं वचनादेव गृह्णीयामेवमात्मजम् ॥
भवेद्धि शङ्क्यो लोकस्य नैव शुद्धो भवेदयम् ॥

**वैशंपायन उवाच—**

तं विशोध्य तदा राजा देवदूतेन भारत । हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥
मूर्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे । तां चैव भार्यां दुष्यन्तः पूजयामास धर्मतः ॥
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः । कृतो लोकपरोक्षोऽयं संबन्धो वै त्वया सह ॥
तस्मादेतन्मया देवि तच्छुद्ध्यर्थं विचारितम् । मन्यते चैव लोकस्ते स्त्रीभावान्मयि संगतम्
पुत्रश्चायं वृतो राज्ये मया तस्माद्विचारितम् । यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये
प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे । दुष्यन्तस्तु ततो राजा पुत्रं शाकुन्तलं तदा
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् । स विजित्य महीपालांश्चकार वशवर्तिनः ॥
चचार च सतां धर्मं प्राप चानुत्तमं यशः । स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान् ॥

( २ )

## श्रीपद्मपुराणे स्वर्गखण्डे ।

**शेष उवाच—**

दुष्यन्तो नाम राजर्षिश्चन्द्रवंशविभूषणः । पौरवः सुमहातेजा वेदवेदाङ्गपारगः ॥
धनुर्विद्यासुनिपुणः सर्वराजगुणान्वितः । स प्रजाः पालयामास नृपः पुत्रानिवौरसान् ॥
कदाचिन्मृगयां राजा स जगाम बलैर्वृतः । रम्यं स्यन्दनमारुह्य नानामणिगणाचितम् ॥
अथारण्ये ददर्शासौ मृगमत्यन्तमूर्जितम् । तमन्वधावद्राजर्षिर्मृगमात्तशरासनः ॥
मृगोऽपि बलवांस्तस्मिन्नुत्प्लवेन महायशाः । धावत्येव ततो राजा बद्धामर्षोऽनुधावति ॥
ततः कण्वाश्रमाभ्यासे मृगं प्रति महाबलः । संदधे शरमत्युग्रं शब्दभेदिनमाशु वै ॥
तं तथा संहितशरं कण्वशिष्याः सुदूरतः । अब्रुवन्नाश्रममृगो न हन्तव्यो महीपते ॥
तदाश्रममृगेत्येवं कर्णार्धमागते शरे । संजहार महाबाणं पौरवः पौरुषान्वितः ॥
प्रत्याख्यातसमुद्योगस्तृषार्तः स महीपतिः । तोयमन्वेषयन्कन्या ददर्शाप्सरसां समाः ॥
स्वानुरूपघटैः कक्षविन्यस्तैः सरसः पयः । आहृत्य सिञ्चतीर्बाला वन्यानाश्रमपादपान् ॥
तासां मध्येऽतिरम्याङ्गी कन्या नाम्ना शकुन्तला । राजानं प्रेक्ष्य सुस्निग्धमुवाच वचनं द्विज
त्वमद्यातिथिरायातः सत्कृतो यास्यसि ध्रुवम् । इदमासनमेतत्ते पाद्यमर्घ्यं च गृह्यताम् ॥
तद्वागमृतसंतुष्टो गृहीत्वातिथिसत्क्रियाम् । मदनाशुगसंपातकिंचित्स्पृष्टमनोरथः ॥
उवाच राजा दुष्यन्तः कासि कस्यासि भाविनि । पश्यामि त्वां वरारोहे देवीमिव दिवश्च्युताम्
राजन्योऽहं पुरुकुले दुष्यन्तो नाम भूपतिः । तच्छ्रुत्वा सा सखीं प्राह कथय त्वं ममोद्भवम्

**सख्युवाच—**

राजन्यो गाधितनयो विश्वामित्रो महामनाः । ब्रह्मण्यार्थी तपस्तेपे बहुवर्षसहस्रकम् ॥
तद्दृष्ट्वा भयमापन्नः शक्रः संमन्त्र्य दैवतैः । मेनकां प्रेषयामास तपोविघ्नाय पार्थिव ॥
सागत्य पुरतस्तस्य स्वर्गाभरणभूषिता । प्रलोभयामास मुनिं विश्वामित्रं सुविभ्रमैः ॥
जितेन्द्रियोऽपि कामेन तदपाङ्गधनुश्च्युतैः । कटाक्षबाणै राजेन्द्र विव्यधे गाधिनन्दनः ॥
धैर्यच्युतोऽथ बाहुभ्यामाश्लिष्यन्मेनकां मुहुः । रेमे च मदनाविष्टः क्षणात्संज्ञामवाप सः
व्रीडितस्तां विसृज्याथ वनेऽस्मिन्प्रययौ द्रुतम् । मेनकापि च तं गर्भं विमुच्य गहने वने
शक्रलोकं समापेदे न प्रैक्षत पुनर्नृप । शकुन्तैरथ गर्भोऽसौ ररक्षे पृथिवीपते ॥
अतः शकुन्तला नाम नृपेयं वरवर्णिनी । कण्वस्तु सुमहातेजाः कन्यां वीक्ष्य वने स्थिताम्
अनुकम्प्य स्वसुतात्वे कल्पयामास सुन्दरीम् । मुनिना संभृता कन्या तं तातं मन्यते सदा
सुतां कण्वस्य विद्धीमां मुनिवर्यस्य भूपते ॥

**दुष्यन्त उवाच—**

सुव्यक्तं राजपुत्रीयं यथा कल्याणि भाषसे । अन्यथा पौरवाणां हि मनो नैवानुरज्यति ॥
भार्या भवतु सुश्रोणी ममेयं मृगलोचना । सर्वं राज्यं प्रदास्यामि भार्या भवतु ते सखी ॥
गान्धर्वेण च मां वीरविवाहेन वृणोतु च । विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥

शकुन्तलोवाच—

फलाहारगतो राजन्पिता म इत आश्रमात् । मुहूर्तं तु प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥

दुष्यन्त उवाच—

इच्छामि त्वां वरारोहे भजमानामनिन्दिते । आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ॥
आत्मनैवात्मनो दानं कर्तुमर्हसि सुव्रते । अष्टावेव महाभागे विवाहा वेदसंमताः ॥
ब्राह्मो दैवस्तथार्षश्च प्राजापत्यस्तथासुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ॥
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः । सा त्वं मम सकामस्य सकामा वरवर्णिनि
गान्धर्वेणैव धर्मेण भार्या भवितुमर्हसि ॥

शकुन्तलोवाच—

यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥

प्रतिजानीहि सत्यं मे यथा वक्ष्यामि तेऽनघ । मम जायेत यः पुत्रः स भवेत्त्वदनन्तरम् ॥
युवराजो महाराज सत्यमेतद्ब्रवीमि ते । अभिज्ञानं च राजेन्द्र देहि स्वमङ्गुलीयकम् ॥
यद्येतदेवं राजेन्द्र अस्तु मे संगमस्त्वया ।

शेष उवाच—

एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥

यथा त्वमर्हा सुश्रोणि सत्यमेतद्ब्रवीमि ते । एवमुक्त्वा स राजर्षिस्तामनिन्दितविग्रहाम् ॥
जग्राह विधिवत्पाणावुवास च तया सह । विश्वास्य चैतां स प्रायादब्रवीच्च पुनः पुनः ॥
प्रेषयिष्ये च नेतुं त्वां वाहिनीं मन्त्रिभिः सह । विभूत्या परयोपेतां नाययिष्यामि सुव्रते ॥

सूत उवाच—

इति तस्याः प्रतिज्ञाय स नृपो मुनिसत्तम । मनसा चिन्तयन्प्रायाद्दत्वा चाप्यङ्गुलीयकम् ॥
काश्यपस्तपसा युक्तः श्रुत्वा किं नु करिष्यति । एवं विचिन्तयन्नेव प्राविशन्नगरं नृपः ॥

शेष उवाच—

एतस्मिन्नन्तरे विप्र कण्वोऽप्याश्रममागमत् । शकुन्तला तु पितरं ह्रिया नोपजगाम तम् ॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानेन मारिष । उवाच भगवान्प्रीतो व्रीडमानां शकुन्तलाम् ॥

कण्व उवाच—

त्वयाद्य भद्रे रहसि मामनाभाष्य यः कृतः । पुंसा सह समायोगो नासौ धर्मोपघातकः ॥

क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायां सकामस्य निर्मन्त्रो रहसि स्मृतः ॥

महात्मासौ महाराजः पुरुवंशप्रदीपनः । यं पतिं प्रतिपन्ना त्वं भजमानं शकुन्तले ॥
महात्मा भविता पुत्रस्तव सुभ्रु महाबलः । य इमां भोक्ष्यते कृत्स्नां भूमिं सागरमेखलाम् ॥
स्वनाम्ना ख्यातिमप्यत्र वंशे संजनयिष्यति ॥

शकुन्तलोवाच—

यो मयासौ वृतो राजा पौरवः पुरुषोत्तमः । स त्वयानुमतो यस्मात्कृतार्थास्मि पितः प्रभो॥
प्रसादं कुरु तस्यापि सामात्यस्य महीपतेः ॥

कण्व उवाच—

प्रसन्न एव तस्याहं पूर्वमेव शुचिस्मिते । ब्रह्मण्यः पौरवो राजा धर्मात्मा च विशेषतः॥
कं ददामि वरं तस्मै ब्रूहि कल्याणि मा चिरम् ॥

शेष उवाच—

ततो धर्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा । शकुन्तला पौरवाणां दुष्यन्तहितकाम्यया ॥

सूत उवाच—

परेऽहनि मुनौ याते विरहेण शकुन्तला । न लेभे मनसः शान्तिं चिन्तयन्ती महीपतिम् ॥
क्षणं निःश्वासबहुला सुष्वाप धरणीतले। लिलेख च नखेन क्ष्मां नाललाप सखीजनैः॥
क्षणं विलोकयामास दिगन्ताँल्लोललोचना । ध्यायन्ती जगतीनाथं क्षणं प्राप्तमनोरथा
आस्ते स्म धरणीपृष्ठे ध्यानस्तिमितलोचना । एतस्मिन्नन्तरे विप्र दुर्वासास्तपसा ज्वलन् ॥
आजगामाश्रमपदं कण्वस्य द्विजसत्तम । दूरादुच्चैर्बभाषेऽथ केयं पर्णोटजे स्थिता ॥
विलोकयतु मां प्राप्तमतिथिं भोजनार्थिनम् ॥

शेष उवाच—

इत्युच्चैर्मुहुराभाष्य न प्राप्यातिथिसत्क्रियाम् । तपोधनश्चुकोपाशु शशाप क्रोधनो मुनिः ॥

दुर्वासा उवाच—

यं त्वं चिन्तयसे बाले मनसानन्यवृत्तिना ।
विस्मरिष्यति स त्वां वै अतिथौ मौनशालिनीम् ॥

शेष उवाच—

इत्येवमुक्ते वचने क्रोधाद्दुर्वाससा तदा । सखी प्रियंवदा नाम शुश्राव क्रोधभाषितम् ॥
त्वरयाथ समागम्य पाद्यादिकृतसंचया । प्रसादयामास मुनिं मूर्ध्ना तच्चरणं गता ॥
पौरवस्य इयं राज्ञी दुष्यन्तस्य महीभृतः । चिन्तयन्ती पतिं मुग्धा विरहेण सुविह्वला ॥
न किंचिदंभिजानाति न भवांस्तेन सत्कृतः । नावज्ञानाच्च गर्वाच्च तद्भवान्क्षन्तुमर्हति ॥
यथा न विस्मरेद्राजा शापान्तं कुरु तापस । ततः प्रसन्नो दुर्वासाः प्राह शापान्तकारणम् ॥
विस्मृतिस्तस्य राजर्षेस्तावदेव भविष्यति । प्रियंवदे नृपो यावदभिज्ञानं न पश्यति ॥
इति कृत्वा स शापान्तं गृहीत्वा सत्क्रियां ययौ ॥
अथ तस्यास्तदा गर्भो राजर्षेस्तेजसा भृतः। शशीव विशदे पक्षे वर्धते स्म दिने दिने ॥
अथ तां सप्तमे मासि गर्भे स्फूर्तिमुपेयुषि । उवाच भगवान्कण्वो मुनिमण्डलमध्यगाम् ॥

कण्व उवाच—

कन्या पितृगृहे नैव सुचिरं वासमर्हति । लोकापवादः सुमहांस्तस्मात् पितृवेश्मनि ॥

अतस्त्वां प्रेषयिष्यामि निकटं तस्य भूभृतः । पत्युः प्रेमा हि नारीणां परं सौभाग्यमुच्यते ॥

**शकुन्तलोवाच—**

पितस्तेऽनुगृहीतास्मि प्रतिदर्शनवार्त्तया । तदद्यैव गमिष्यामि राजर्षेस्तस्य चान्तिकम् ॥
अनुज्ञां देहि मे तात कृपया तापसोत्तम ॥

**शेष उवाच—**

तच्छ्रुत्वा भगवान्कण्वः स्नेहप्रसरविप्लुतः । अनुज्ञाप्य मुनीनन्यान्मुनिपत्नीश्च सुव्रताः ॥
उवाच परया प्रीत्या प्रेषयामि शकुन्तलाम् । भर्तुर्गृहाय कल्याण्यः कल्याणं कुरुत ध्रुवम् ॥
ताश्च वाक्यं मुनेः श्रुत्वा प्रेमाश्रुक्लिन्नलोचनाः । आशीर्भिरनुकूलाभिः प्रायुञ्जत शकुन्तलाम् ।
विचित्रैरप्याभरणैः केशबन्धादिभिस्तथा । गात्रोद्वर्तनसंमार्ष्टिहरिद्रातैलसंगतैः ॥
भूषयामासुरव्यग्रा मुनिपत्न्यः शकुन्तलाम् । अथ गुल्मलतावृक्षान्हरिणान्हरिणाङ्गनाः ॥
उवाच कण्वः प्रेमार्द्रो मुञ्चन्नश्रुकला मुहुः । युष्माकं परमप्रेम्णा वासितेयं सुता मम ॥
सर्वे कुरुत कल्याणं सुखं यातु शकुन्तला । इति सर्वाननुज्ञाप्य कण्वो मतिमतां वरः ॥

आहूय गौतमीं वृद्धां सखीं चास्याः प्रियंवदाम् ।
उवाच श्लक्ष्णया वाचा शिष्यौ चापि महाव्रतौ ॥

यात यूयं महीभर्तुर्दुष्यन्तस्य पुरं प्रति । इमां शकुन्तलां राज्ञि समर्प्य पुनरेष्यथ ॥
इति तस्य वचः श्रुत्वा गौतमी च प्रियंवदा । मुनिः शार्ङ्गरवः शिष्यस्तथा शारद्वतो मुनिः ॥
शकुन्तलां पुरस्कृत्य पन्थानं प्रतिपेदिरे । अथ मध्याह्नसमये प्राप्य प्राचीं सरस्वतीम् ॥
मुनेः शिष्यौ च मध्याह्नक्रियां चक्रतुरेव तौ । शकुन्तलापि तत्रैव स्नानार्थमुपचक्रमे ॥
प्रियंवदाकरे न्यस्य अभिज्ञानाङ्गुलीयकम् । स्नातुं सरस्वतीतोयमगाहत सुलोचना ॥
प्रियंवदा तु तद्गृह्य वसनाञ्चलमध्यतः । यावन्न्यस्तवती तावत्पपात सलिले द्विज ॥
प्रियंवदा भिया तस्यै वृत्तान्तं न न्यवेदयत् । शकुन्तलापि तत्सख्यै पप्रच्छापि न विस्मृता
ततः स्नात्वा च ते सर्वे समाप्य विधिवत्क्रियाम् । दुष्यन्तपुरमासेदुस्तास्त्रियस्तौ च तापसौ
राजद्वारं समासाद्य कण्वशिष्यौ महामते । ऊचतुस्तौ प्रतीहारं तूर्णं राज्ञे निवेदय ॥
प्रतीहारस्ततो गत्वा राज्ञे सर्वं न्यवेदयत् । राजा पुरोधसं प्राह गौतमं हृदि चिन्तयन् ॥
कथमेतौ मुनेः शिष्यौ स्त्रीभिरेताभिरावृतौ । आगताविह संप्राप्तौ भवानेव हि पृच्छतु ॥
पाद्यादीनि पुरस्कृत्य विधायातिथिसत्क्रियाम् । वासयस्व मुनी विप्र स्वगृहे ताःस्त्रियस्तथा ॥
चेद्विशेषविवक्षापि तयोरस्ति विबुध्य तत् । विज्ञापयिष्यसि पुनस्तद्विचार्य करोम्यहम् ॥

**शेष उवाच—**

इति तद्वाक्यमादाय पुरोधाः स तपोधनः । पाद्यादीनि पुरस्कृत्य द्वारमागतवान्द्विज ॥
राज्ञोक्तं सर्वमाचष्ट ददर्श च शकुन्तलाम् । पप्रच्छ च मुनी केयं सुन्दरी जगदुद्भवा ॥
अन्तः सत्त्वेव कल्याणी लज्जयाधोमुखी स्थिता ॥

**शिष्यावूचतुः—**


विश्वामित्रसुता चेयं मेनकागर्भसंभवा । कण्वेन पालिता राज्ञी दुष्यन्तस्य महीपतेः ॥
सेयं संप्रेषिता ब्रह्मन्कण्वेन नृपमन्दिरम् । अस्यैव भूपतेस्तेजो बिभ्रती मृगलोचना ॥

राज्ञे निवेदयत्वद्य तद्भवांस्त्वरया द्विज । पुरोधास्तदुपाकर्ण्य संभ्रमेण महीपतिम् ॥
गत्वा निवेदयामास वृत्तान्तं मुनिभाषितम् । दुष्यन्तस्तदुपश्रुत्य विस्मृतिं परमां गतः ॥
उवाच ब्राह्मणं ब्रह्मन्वचसा कटुना नृपः । नैवं स्मरति मच्चेतः कुत्र का मे विवाहिता ॥
गणिका कापि विप्रेन्द्र च्छलेन समुपागता ॥

पुरोधा उवाच—

न तथा दृश्यते राजन्नन्तःसत्त्वा वराङ्गना । अनुजानीहि राजेन्द्र त्वदन्तिकमुपानय ॥
विलोकय परं रूपं यदि ते स्मृतिरुद्भवेत् । प्रवेशनीया शुद्धान्ते नारी श्रीरिव रूपिणी ॥
इति राज्ञानुनीतेनाभ्यनुज्ञातो द्विजोत्तमः । आनाययामास मुनी ताः स्त्रियश्च सुलक्षणाः॥
आशीर्भिरनुयोज्याथ कण्वशिष्यौ महामती । ऊचतुः कण्वसंदेशं निषण्णौ जगतीपतिम् ॥
त्वामाशिषा वर्धयित्वा प्राह त्वामावयोर्गुरुः । इयं शकुन्तला नाम विश्वामित्रसुतानघ ॥
मृगयाचारिणारण्ये गान्धर्वेण महीपते । विधिना यद्गृहीताभून्ममानुज्ञां विनापि हि ॥
तत्साधुरिति तं मन्ये क्षत्रियाणामयं विधिः । तव सा बिभ्रती तेजो वस्तुं नार्हेऽटजे मम ॥
सेयं प्रगृह्यतां राजन्कल्याणी महिषी तव ॥

राजोवाच—

कति सन्तीह गणिका भ्रमन्त्यः कामसेवया । राजराजस्य महिषी का नो भवितुमिच्छति॥
ब्राह्मणा विविधाः सन्ति तापसाश्छद्मरूपिणः । तासामनुग्रहेणैव समं ताभिर्भ्रमन्ति च ॥
भुञ्जते विपुलान्भोगान्गणिकाभिरुपार्जितान्। निशम्य नृपतेर्वाक्यं शिष्यौ कण्वस्य तापसौ।
शेपतुर्विरहेणास्याः पश्चात्तापमवाप्स्यसि ॥

शेष उवाच—

इत्युक्त्वा तौ गतौ क्रुद्धौ तापसौ ब्रह्मवादिनौ । गौतमस्तौ प्रसाद्याथावासयत्स्वे च वेश्मनि
अथ सा गौतमी वृद्धा जगाद जगतीपतिम् । नैवमर्हसि भो राजन् विश्वामित्रसुतां प्रति ॥
एवं लावण्यमापन्ना क्व दृष्टा गणिका त्वया । अन्तःसत्त्वा महाभागा त्वया राजन्विवाहिता
समाहितेन मनसा स्मर पश्य च सुन्दरीम् । इत्युक्त्वा मोचयामास शिरश्छादनमम्बरम् ॥

राजोवाच—

पौरवाणां कुले जाताः सतां मार्गे कृतासनाः । न वयं रूपमात्रेण गणिकानां भ्रमामहे ॥
एवं वदति भूपाले व्रीडितेव मनस्विनी । निःसख्येन च दुःखेन तस्थौ स्थूणेव निश्चला ॥
संरम्भामर्षताम्राक्षी स्फुरमाणौष्ठसंपुटा । सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ॥
भर्तारमभिसंप्रेक्ष्य क्रुद्धा राजानमब्रवीत् । कथं न स्मरसे राजन्मृगयामधिगच्छता ॥
गान्धर्वेण गृहीतो यत्पाणिर्मे विधिना नृप । इति श्रुत्वा स वचनं शापेनास्तमितस्मृतिः ॥
अब्रवीन्न स्मरामि त्वां कस्य त्वं दुष्टतापसि । धर्मकामार्थसंबन्धं न स्मरामि त्वया सह ॥
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥

शकुन्तलोवाच—

कुतः प्रियंवदे साध्वि अभिज्ञानमिहानय । धूर्तमेनं सभामध्ये हेपयामि नराधिपम् ॥
प्रियंवदा तु नीचैस्तां जगाद मृगलोचनाम् । कर्णान्तिकं समासाद्य पतितं ते तदम्भसि ॥

तदुपश्रुत्य कल्याणी रम्भेव मरुता हता। पपात भूमौ निश्चेष्टा हा हतास्मीति वादिनी ॥
अथ तां गौतमी वृद्धा बाहुभ्यां मृगलोचनाम् ।आश्लिष्य सान्त्वयामास लेभे संज्ञां ततःपुनः
अथ क्रुद्धा महाभागा सख्यै राज्ञे च भामिनी। उवाचाश्रूणि संमार्ज्य स्मरन्ती पितरं मुनिम्
जानन्नपि महाराज कस्मादेवं प्रभाषसे। न जानामीति निःशङ्कं यथान्यः प्राकृतो जनः ।
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥
किं नु कर्माशुभं पूर्वं कृतवत्यस्मि जन्मनि । यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति च त्वया ॥

राजोवाच—

न गर्भमभिजानामि त्वयि मत्तेजसार्जितम् । असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे । विशेषतो मत्सकाशे दुष्टतापसि गम्यताम् ॥
सर्वमेतत्परोक्षं मे यत्त्वं वदसि तापसि। नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥

शकुन्तलोवाच—

राजन्सत्यं परं ब्रह्म सत्यं च समयः परम् । मा त्याक्षीः समयं राजन्सत्यं संगतमस्तु ते ॥
अनृते चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् । कण्वस्यैवाश्रमं गच्छे त्वादृशे नास्ति संगतम् ॥
ऋतेऽपि त्वां महाराज शैलराजावतंसकाम् । चतुर्वर्णामिमामुर्वीं पुत्रो मे पालयिष्यति ॥
मुनेः कण्वस्य वै वाक्यं भविता कथमन्यथा ।

राजोवाच—

किं नालपन्ति पुंश्चल्य एवमेव सुदुर्वचः। याहि त्वं गच्छ वाचाटे दूषयिष्यन्ति मां जनाः ॥

पुरोधा उवाच—

अत्र वक्ष्यामि ते मन्त्रं श्रृणु राजन्महामते । यावत्प्रसवमत्रैव नारी तिष्ठतु ते गृहे ॥
यदि ते सदृशं पुत्रं कामिन्येषा प्रसोष्यति। ततस्तवैव भार्येति नेत्स्यामस्तदनन्तरम् ॥
शालिबीजाद्विजायेत न कदाचिद्यवाङ्कुरः ।

राजोवाच—

नैषा शुद्धान्तमध्येऽपि मम वासमिहार्हति। संसर्गादपि पुंश्चल्यो दूषयन्ति कुलस्त्रियः ॥

पुरोधा उवाच—

अदृष्टतनयास्योऽसि राजराजोऽपि भूतले। अतस्त्वत्संततौ श्रद्धा राजन्मे जायतेऽधिका ॥
इयं साध्वी वरारोहा कण्वेन परिपालिता । व्यभिचारमतो राजन्नाहं मन्ये मनागपि ॥
यावत्प्रसवमेतां तु वासयेऽहं निजालये। प्रसवे सति कल्याणीं स्वयमेव ग्रहीष्यसि ॥

शेष उवाच—

इत्युक्त्वा गौतमो ब्रह्मन्सान्त्वयित्वा शकुन्तलाम्। स्वगृहायैव तां नेतुं विमना उपचक्रमे ॥
सा चापि मुक्तकण्ठं वै रुदती मृगलोचना। शनैः शनैर्गौतमं तमनुगन्तुं प्रचक्रमे ॥
एतस्मिन्नन्तरे विप्र मेनकाप्सरसां वरा । तेजोरूपा व्योममध्यात्तडित्पातं पपात सा ॥
किमिदं किमिदं चित्रमिति जल्पत्सु सर्वतः। सभास्थेषु च सर्वेषु तेजसा धर्षितेषु च ॥
आलोकने ऽप्यशक्तेषु दुष्यन्ते भयविह्वले। शकुन्तलां समादाय अङ्कमारोप्य सत्वरा ॥
क्षमवां निजगृहे सा तत्केनापि न लक्षितम्। एवं गते तु दुष्यन्तः खेदमाप ततो भृशम् ॥

देवेन चरितां मायामबुध्यत तदा नृपः ॥

**शेष उवाच—**

एकदा स महीपालो मन्त्रिभिर्ब्राह्मणैः सह। प्रजानां वेदितुं वृत्तं बभ्राम नगरे द्विज॥
तत्र राजभटः कश्चिद्दृढमाबध्य धीवरम्। दण्डेन ताडयन्नुग्रैर्वचोभिः समतर्जयत्॥
राजाभरणमेतद्वै यत्त्वया चोरितं छलात्। अतो वध्यत्वमापन्नं त्वां नयामि नृपान्तिके॥
इत्युक्त्वा तं करे गृह्य ताडयन्बहु मूर्धनि। राजान्तिकमुपानीय राजानमिदमब्रवीत्॥
एष धीवरको राजंश्चोराथित्वाङ्गुलीयकम्।
त्वन्नामचिह्नितं लोके विदितं रत्ननिर्मितम्। विक्रेतुमुद्यतः पापो मया दृष्टो महीपते॥
राजा तं प्राह दाशेदं कुतो लब्धमिह त्वया। कथयाभयमेतत्ते दत्तं जानीहि सांप्रतम्॥

**धीवर उवाच—**

जात्याहं धीवरो राजन्मत्स्यमात्रोपजीवकः। जालेन मत्स्यान्बध्नामि सरस्वत्या हि रोधसि॥
एकदा जालमातत्य सरस्वत्यामहं नृप। स्थितः प्रत्याशया तत्र तीरस्थं तरुमास्थितः॥
रोहितः कोऽपि सुमहाञ्जाले बद्धो बभूव ह। ततोऽहं जालमुत्तार्य दृष्ट्वा रोहितमुद्धृतम्॥
खड्गेन कृत्तवान्सद्यः परमानन्दनिर्वृतः। ततस्तदुदरे लब्धमेतद्रूपाङ्गुलीयकम्॥
कस्येति न विजानामि तदहं नगरे तव। विक्रेतुमागतो बद्धो भटेनानेन भूमिप॥

**राजोवाच—**

देहि पश्यामि कस्यैतत्किंरूपमङ्गुलीयकम्॥

**शेष उवाच—**

इत्युक्त्वा पाणिनादाय यावद्राजा स पश्यति। निपतन्ति स्म नेत्राभ्यां तावदेवाश्रुबिन्दवः॥
प्रेयसीं तामनुस्मृत्य तथा गान्धर्वकर्म च। गर्भाधानं च सर्वं तन्मूर्च्छितो निपपात ह॥
तदा पुरोहितामात्या भृशमुद्विग्नचेतसः। उत्थाप्य तं महीपालं निवेश्य च वरासने॥
लब्धसंज्ञं शनैर्बह्मन्पप्रच्छुः किमिदं तव। दुष्यन्तोऽपि समाश्वस्य प्रेयसीं तामनुस्मरन्॥
निःश्वस्य दीर्घमुष्णं च अश्रुमिश्रमभाषत। प्रत्याख्याता वरारोहा मन्दभाग्येन यन्मया॥
तदद्य मां दुनोत्येव अङ्गुलीयस्य दर्शनात्। तया यदुक्तं मां प्राप्य मम तेजो दधानया॥
नानृतं तत्र वै किंचिन्मयैवानृतकं कृतम्। केनापि दैवयोगेन सर्वं तद्विस्मृतं मया॥
हन्त पापं कृतं भूरि मया निष्करुणात्मना॥

**शेष उवाच—**

एवं विलपमानं तं राजानं गौतमोऽब्रवीत्। तद्यातं नानुशोचस्व समाश्वस परंतप॥
भद्रं वाप्यथ वाऽभद्रं प्रियमप्रियमेव वा। यद्यातं तद्गतं राजन्नानुशोचन्ति पण्डिताः॥
विमृशत्स्वेव तेष्वेवं देशान्तरचरश्चरः। राज्ञे निवेदयामास यद्दृष्टं सागराम्भसि॥
राजन्सांयात्रिको नाम्ना धनवृद्धिर्महाधनः। विपन्नः सागरे सप्त वाहयन्संभृतास्तरीः॥
स चानपत्यस्तस्येष्टा नावो रत्नैः प्रपूरिताः। तदैव कोषमर्हन्ति गृह्यन्तामचिरेण ताः॥

**राजोवाच**

यान्तु मे मन्त्रिणः सम्यग्जानन्तु तत्परिग्रहान्। यदि काचिद्भवेद्भार्या गर्भिणी वणिजः
क्वचित्। सैव तद्धनमादद्यान्नाधिकारी तदा नृपः॥

शेष उवाच

तच्छ्रुत्वा मन्त्रिणो गत्वा विज्ञाय च विशेषतः । राज्ञे निवेदयामासुर्वृत्तान्तं ब्राह्मणर्षभ॥
अत्रैव नगरे राजन्भार्या तस्य विलासिनी । अन्तःसत्वा वणिक्पुत्री वर्तते च पतिव्रता॥
राजा प्राह तरीस्थानि यानि यानि धनानि चातानि तस्यै ददत्वद्य भटा मे यान्तु सत्वराः॥
इति प्रस्थाप्य राजेन्द्रो भटांस्तद्धनरक्षणे । द्विगुणेनैव शोकेन दह्यते स्म ततोऽब्रवीत् ॥
एवमेव ममाप्यन्ते मम राज्यस्य दुर्गतिः । कं यास्यति महीयं हि धार्मिकं वाप्यधार्मिकम्॥
अन्तःसत्त्वा महाभागा या मे भार्याप्युपस्थिता।उपेक्षिता प्रमादेन मन्दभाग्येन सा मया॥
अत ऊर्ध्वं मया दत्तं पानीयं विविधानि च। पास्यन्ति पितरः कोष्णनिश्वासेन मलीमसम्
एवं विलपमानस्य दुष्यन्तस्य महीपते। व्यतीयुस्त्रीणि वर्षाणि शोचतोऽहर्निशं द्विज ॥
अथासौ देवराजेन समाहूतो ययौ दिवम् । त्रिदिवेशैरवध्यानां निधनाय सुरद्विषाम् ॥
निर्वाह्य देवताकर्म रथं मातलिसारथिम् । आरुह्य भुवमायास्यन्मारीचाश्रममागमत् ॥
तत्र काचिज्जरानारी ब्राह्मणी बालमद्भुतम्। लालयन्ती नृपं वीक्ष्य ददावासनमन्तिके ॥
बालस्तु तावद्वेगेन प्रविश्य गहनं वनम् । निबध्य पञ्च पञ्चास्याँल्लताभिः समुपानयत् ॥
उवाच वृद्धामेतेषां कति दन्ताः समुन्नताः । निम्ना वा कति मध्या वा गणयित्वा वदाशु मे॥
दुष्यन्तस्तु तदालक्ष्य बालस्याद्भुतविक्रमम्। चिन्तयामास मेधावी भार्याविरहकातरः ॥
पौरवादप्यहो बालो धत्तेऽधिकपराक्रमम्। सर्वराजश्रिया युक्तो न विप्रस्तदयं भवेत् ॥
चेतो मे वहते स्नेहं दृष्ट्वा बालं दुरासदम्। कारणं तत्र पश्यामि यन्ममेयमपुत्रता ॥
इति चिन्तापरे राज्ञि सिंहः कोऽपि स्वबन्धनम्।छित्वा नखेन दुर्वार्यो गन्तुं प्राक्रमत द्विज।
दूरादुप्लुत्य तं बालो निगृह्य पुनरेव तम् । उवाच किं रे पञ्चास्य प्राप्तोऽसि ब्रह्मबालकम्।
पौरवोऽस्मि न जानासि क्षत्रियो रणकोविदः। तदुपश्रुत्य राजर्षेः किंचिदुच्छ्वसितं मनः ॥
बालभाषितमित्येव सम्यक्श्रद्धापि नो भवेत्। अथापश्यत्कश्यपोऽपि वनात्कुशसमिद्धरः॥

विलोक्य तत्र राजानं दुष्यन्तं मुमुदे भृशम् ।
आशीर्भिस्तमथाभर्च्य विधायातिथिसत्क्रियाम् ॥

पप्रच्छ कुशलंराज्ये देवानां च तपोधनः। राजातत्सर्वमाचष्ट मुनिवाचा गतश्रमः ।
अथोवाच विहस्येषत्कोऽयं बालस्तपोधन। महाबलो महाबाहुः पौरवोऽहमिति ब्रुवन्॥

कश्यप उवाच—

तवैव तनयो राजन्यमसूत शकुन्तला । दमनः सर्वसत्त्वानां सिंहादीनां महाबलः ॥
तत्सर्वदमनो नाम मयैवास्य निरूपितम्। भरस्वेति च वच्मि त्वां ततोऽसौ भरतो भवेत् ॥
दुर्वाससो हि शापेन त्वया या विस्मृता पुरा। त्यक्ता मेनकयानीय मयि न्यस्ता मनस्विनी
सा ते शकुन्तला राज्ञी सुषावेमं कुमारकम्। महाबलो महाप्राणो दुर्धर्षः सर्वभूभुजाम् ॥
बद्धैः क्रीडति पञ्चास्यैः प्रविभेत्यपि नान्तकात्। एष ते गृह्यतां पुत्रश्चक्रवर्ती भविष्यति ॥
इत्युक्त्वा ब्राह्मणीं प्राह वृद्धां देवगुरुर्मुनिः । शकुन्तलामिहानीय समर्पय महीपतौ ॥
तच्छ्रुत्वा ब्राह्मणी गत्वा समाहूय शकुन्तलाम्। राज्ञे समर्पयामास राजा च मुमुदे भृशम् ॥

शेष उवाच—



अथानुज्ञाप्य मारीचं सभार्यः ससुतो नृपः । हृष्टः स्वपुरमागच्छद्देवयानेन मारिष ॥

## Subháshitas occurring in the play.

### I. Sentences.

| | Page |
|---|---|
| अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते । | ४३ |
| अतिस्नेहः पापशङ्की । | १११ |
| अनतिक्रमणीयानि श्रेयांसि । | १८१ |
| अनार्यः परदारव्यवहारः । | १८९ |
| अनियन्त्रणानुयोगस्तपस्विजनो नाम । | ३२ |
| अनिर्वर्णनीयं परकलत्रम् । | १२४ |
| अर्थो हि कन्या परकीय एव । | ११३ |
| अवसरोपसर्पणीया राजानः । | १४१ |
| अविश्रमोऽयं लोकतन्त्राधिकारः । | ११६ |
| अहो कामी स्वतां पश्यति । | ४४ |
| अहो चेष्टाप्रतिरूपिका कामि( जन )मनोवृत्तिः । | ३४ |
| अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । | ८४ |
| अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् । | १४८ |
| आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यम् । | ७८ |
| इष्टप्रवासजनितान्यबलाजनस्य दुःखानि नूनमतिमात्रसुदुःसहानि । | १२ |
| उत्सर्पिणी खलु महतां प्रार्थना । | १८३ |
| उत्सवप्रियाः खलु मनुष्याः । | १४७ |
| उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी । | १३५ |
| ओदकान्तं स्निग्धो जनोऽनुगन्तव्यः । | १०६ |
| क्व इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति । | ७४ |
| क्व इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते । | ७२ |
| कदाऽपि सत्पुरुषाः शोकवास्तव्या न भवन्ति । | १५२ |
| कष्टं खल्वनपत्यता । | १६७ |
| किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते । | ७२ |
| किमिव हि मधुराणां मण्डनं नाकृतीनाम् । | २० |
| को नामोष्णोदकेन नवमालिकां सिञ्चति । | ९० |
| कोऽन्यो हुतवहाद्दग्धुं प्रभवति । | ८८ |
| गण्डस्योपरि पिटकः संवृत्तः । | ४२ |
| गुर्वपि विरहदुःखमाशाबन्धः साहयति । | १०७ |
| छाया न मूर्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा । | २०१ |
| तमस्तपति घर्मांशौ कथमाविर्भविष्यति । | १२४ |

## II. Slokas. Act. Num.

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ ६ ३

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ५ १

भानुः सकृद्युक्ततुरंग एव रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ ५ ४

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ २ ५

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ ५ २

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति ॥ २ ७

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ४ १८

सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ॥ ५ १७

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ ६ १

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ७ ४

स्त्रीणामशिक्षितपटुत्वममानुषीषु संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजातमन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ ५ २२

# Index of important words.

*( The figures refer to the pages of this edition. )*

## The animals referred to by Kâlidâsa in the play.

*The figures refer to the pages of the book.*

| | |
|---|---|
| ऋक्ष | ४८ |
| कपोत | १४५ |
| कृष्णसार | १० |
| गज | ३८, ११७, १४२, २०० |
| गृध्र | १४१ |
| गोधा | १४० |
| चक्रवाक | ८२ |
| चमरी ( चामर ) | ११ |
| चातक | १७९ |
| पन्नग | १७४ |
| परभृत | १०२, १३२, १४४ |
| पुंस्कोकिल | १४६ |
| बिडाल | १७२ |
| भ्रमर | ७, २४, २५, २६ |
| मकर | ६४ |
| मक्षिका | ५०, १५० |
| मत्स्य | १३९ |
| मयूर | १०३, १८६ |
| महिष | ४९ |
| मूषक | १७२ |
| मृग | १०, ११, १३ |
| रोहित | १४० |
| वराह | ४१, ४९ |
| वाजिन् | ११, १२, १३ |
| शकुन्त ( the blue jay; in the name of the heroine. ) | |
| शलभ | ३८ |
| शार्दूल | ४१, १७१ |
| शुक | १६, ७६ |
| श्वन् | १४१ |
| सर्प | १८२, १८७ |
| सारङ्ग | ९, १० |
| सिंह | १८४ |
| हंस | १६१, १७२ |

अथ

# अभिज्ञानशकुन्तलम् ।

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्ववीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

---

यत्रेधाजनि दशधा द्विधागतं यद्यज्जातं दशविधमेति षोडशत्वम् ।
यद्गीतं सममहदादिकस्य चाद्यं तेजस्तज्जयति हिमोष्णरूपमग्र्यम् ॥

उद्दिश्यामरनिम्नगां गतवतोः श्रुत्वा कलिं शैशवे
यः साक्षात्करवाणि तामिति जटाजूटोपकण्ठं गतः ।
पीत्वा पुष्कलपुष्करेण न किमप्यत्रेति विस्मापय-
न्पित्रोर्विग्रहवग्रहं विहितवान्पायाद्गजास्यः स वः ॥

नाट्यवेदाब्धिमालोड्य ताण्डवं यो विनिर्ममौ ।
स्वात्मनाभिनयन्तं तं प्रणमामि महानटम् ॥

या लास्यसंप्रयोगेण शिवाराधनतत्परा ।
भवतां भूतये भूयात्सा सदा सर्वमङ्गला ॥

वाचिकाद्यभिनयोपमनाट्याचार्यमत्र भरतं मुनिमीडे ।
लास्यताण्डवनियोजनलीलाकौशलेन परितोषितभर्गम् ॥

अथ नाटकादौ पूर्वरङ्गाङ्गभूतामाशीरूपां चतुरस्रतालानुसारिणीमष्टपदां सूत्रधारो नान्दीं पठति—**या सृष्टिरिति** । या तनुः स्रष्टुर्ब्रह्मण आद्या सृष्टिः । **जलम्** इत्यर्थः । 'अप एव ससर्जादौ तासु वीर्यमवासृजत् ।' इति स्मरणात् । सर्वादौ सर्गात्सर्गोत्पत्तिहेतुत्वाच्चातिशयो ध्वन्यते । या च विधिर्विधानं श्रुतिस्मृत्युक्तं तेन हुतं दत्तं हविर्हवनीयद्रव्यजातं वहत्यादत्ते । । **वह्निः** इत्यर्थः । वहतिनाधाराधेय-संबन्धेनादानं लक्ष्यते । फलपर्यन्तताप्रापणं च व्यज्यते । अविधिहुतं भस्मीभवति । अत एव विधिहुतमित्युक्तिः । अन्यथा हवनीयस्यैतदव्यभिचारादर्थपौनरुक्त्यं स्यात् । एतेनातिशयो ध्वनितः । अथ च वह्निरित्यौणादिके निप्रत्यये सिद्धम् । तदपि सूचितम् । या च **होत्री** यजमानरूपा । जुहोतीति होत्रीतीन्द्रादीनामपि तर्पकत्वादतिशयो व्यज्यते । ये च द्वे कालं रात्रिंदिवरूपं विधत्तः कुरुतः । विपूर्वो धान्

---

१ भूत. २ प्रसन्न:

करणार्थे वर्तेते। चंद्रार्कौ इत्यर्थः। नित्यस्यापि कालस्यैतौ कारणत्वेनोक्ताविति स एव। या च श्रुतिः श्रवणेन्द्रियं तस्य विषयो गोचरो. गुणः शब्दाख्यो यस्याः सा। 'श्रुतिः श्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि।' इति विश्वः। विश्वं जगद्व्याप्य स्थिता। तेन आकाशः। अत्रापि जगद्व्यापकस्थित्या स व्यज्यते अत एव श्रुतिविषयगुणेत्येतावन्मात्रं नोपात्तम्। तावत्युच्यमाने प्रक्रान्तातिशयव्यङ्ग्यभङ्गः स्यात्। यां च सर्वेषां बीजानां प्रकृतिर्योनिरित्याहुः। अनेन पृथिवी। 'प्रकृतिः सहजे योनावमात्ये परमात्मनि।' इति विश्वः। अत्रापि सर्वबीजोत्पत्तिहेतुत्वेन इतिना कर्मण उक्तत्वात्प्रकृतिरिति प्रथमा। तथा च वामनः 'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः। परिगणनस्य प्रायिकत्वात्' इति। यया (वायुरूपया) च प्राणिनः प्राणवन्त इत्यत्र प्राणिनो जन्मिन इति। 'प्राणी तु चेतनो जन्मी' इत्यमरः। रूढ्या सामान्यमुद्दिश्य प्राणवन्त इति विशिष्टस्य विधानम्। अन्यथा पर्यायोच्चारण एकस्य पौनरुक्त्यं स्यात्। प्राशस्त्ये चात्र मतुप्। 'भूमनिन्दाप्रशंसासु' इत्याद्युक्तेः। हृदि प्राणवायुर्जीवात्मन आश्रयस्तद्वन्तः। 'हंसः प्राणाश्रयो नित्यम्' इत्युक्तेः। तेन जीववन्तश्च बलवन्तश्चेत्यर्थः। एतेन सर्वातिशयो व्यज्यते। अतश्च न कथितपदाशङ्का। उद्देश्यविधेयार्थान्तरसंक्रमितवाच्यलाटानुप्रासान्परिहृत्यैव तस्याङ्गीकारात्। 'अपवादविषयं परिहृत्योत्सर्गस्य प्रवृत्तिः।' इति न्यायात्पुनरुक्तवदाभासोऽलंकारः। ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिर्मूर्तिभिः प्रपन्नो युक्त ईशो वोऽवत्वित्याशीः। 'तनुर्मूर्तौ त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे।' इति मेदिनीकारः। अत्राशिषि सभ्यानां लाभः। अत एव 'आशीर्नमस्क्रियारूपः' इति भरतेन, भामहेनापि 'आशीर्नमस्क्रियावस्तु–' इत्यादावेवाशीर्निबद्धा। तेनासौ नटः किं नमस्काररूपां तत्रापि किंविधाशीरूपां नान्दीं पठिष्यतीति सोत्कण्ठानां सभ्यानां तामपनेतुं पूर्वमवत्वित्युक्तिः। अत्र च सकलाभिलषितफलवितरणप्रवणत्वमेवावनं विवक्षितम्। पालनार्थत्वाद्धातोः। तच्च तेन विना न संभवतीति। कानित्यपेक्षायां वो युष्मान्सभ्यानित्यर्थः। तेषामेवात्र संबोधनयोग्यत्वात्संबोधनप्रदानत्वाच्च युष्मदर्थस्य। अत्र पृथिव्यादिक्रमेणाकाशादिक्रमेण वा वक्तव्ये यो व्यस्तक्रमविन्यासः स कथमिति चेत्। उच्यते। अत्र प्रथमसृष्टत्वाज्जलस्य प्रथमत उपादानम्। ततस्तदुत्पन्नस्य तेजसः। 'अद्भ्योऽग्निः' इति स्मृतेः। तत्रापि हुतं हविर्वहतीति प्रकारेणोक्तेः केन हुतमिति प्रसङ्गाद्यजमानस्य। तेजःप्रसङ्गाद्यज्ञादौ कालस्यापेक्षणीयत्वाच्च सूर्याचन्द्रमसोः। ततः 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥ नखैर्हिरण्यगर्भस्तु तदण्डमकरोद्द्विधा। ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे॥' इति स्मरणाद्यज्ञादौ च देवतास्मारकत्वेन शब्दमयस्य [illegible]

भूम्यादेरधिकरणत्वेन चापेक्ष्यमाणत्वाद्द्वयोर्भूम्योः । ततः सर्वप्राणभूतत्वात्सर्वोत्कृष्टस्य वायोः । अथ च या स्रष्टुराद्या सृष्टिः सावत्विति प्रत्येकं संबन्धः । यत्तदोर्नित्यसंबन्धादार्थेन तच्छब्देन संबन्धः । ये द्वे इत्यत्रावतामिति विभक्तिविपरिणामः । अष्टवाक्यपरिपूर्त्यर्थमेव द्वयोरेकत्रोक्तिः । ईष्ट इति ईशः । अत एव ताभिः प्रसिद्धाभिः प्रत्यक्षाभिर्मूर्तिमतीभिरष्टाभिः । तनुशब्देनाणुः तेन चाणिमा । बहुवचनमाद्यर्थम् । तेनाणिमादिभिरित्यर्थः । प्रपन्नः सेवितोऽवतु व इति । एकश्चकारः सर्वसमुच्चये । अन्त्यदीपकालंकारः । अणिमादयश्च 'अणिमा महिमा चैव लघिमा गरिमा तथा । ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च ॥' इति । अनेन चात्र कविना रीतीनां मुख्यतमा सर्वगुणाश्रया वैदर्भी रीतिरुपक्षिप्ता । यदाह वामनः—'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥' इति । तदुक्तक्रमेण च ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारतार्थव्यक्तिकान्तयो बन्धगुणाः । त एवार्थगुणा इति च । स्रग्धराच्छन्दः—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।' इति । अनेनास्य सप्ताङ्कत्वमपि सूचितम् । नान्दीश्लोकत्वादेवास्यादौ मगणः । 'क्षेमं सर्वं गुरुर्दत्ते मगणो भूमिदेवतः ।' इति भामहोक्तेः । तथा यकारोऽपि । 'यस्तु श्रीदः' इति । 'श्लोकैः काव्यार्थसूचकैः' इत्युक्तत्वादस्य तत्सूचकत्वमुच्यते । ईशः प्रभुर्दुष्यन्तो वोऽव्यादिति । ताभिः शरीरित्वात्पञ्चमहाभूतरूपाभिर्यज्ञकरणाद्धोतृरूपाभिर्लोकपालांशत्वाद्विशिष्टतेजस्वित्वाद्राज्ञश्चन्द्रसूर्यरूपाभिरष्टाभिस्तनुभिः प्रपन्नः । तथा च भृगुः—'अग्निवायुयमार्काणामिन्द्रस्य वरुणस्य च । चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ यस्मादेषां सुरेन्द्राणां मात्राभिर्निर्मितो नृपः । तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥' इति । अथ या सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता । एतावत्कालपर्यन्तं तादृशसृष्टेरजातत्वादाद्यत्वम् । या विधिना सुरतविधिना हुतं निषिक्तं हवी रेतो वहतीति तस्या गर्भः । होत्रीत्यनेन कण्वः । ये द्वे इत्यनेनानसूयाप्रियंवदे सख्यौ कालं शापान्तसमयं विधत्तो बोधयतः । पातिव्रत्यादिभिर्गुणैर्विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभिः शार्ङ्गरवशारद्वतगोतमीभिरयत एतादृशी (०गुणाया) स्थिता । एतेन सगर्भायास्तस्या दुष्यन्तद्वारदेशगमनम् । सर्वेषां बीजं मूलभूतश्चक्रवर्तित्वाद्भरतः । तस्य प्रकृतिरुत्पत्तिरिति भरतोत्पत्तिः । यया प्राणिनः प्राणवन्त इत्यनेन भरतस्य शकुन्तलया सह स्वपुरागमनम् । अष्टाभिः प्रकृत्यादिभिः प्रत्यक्षाभिः प्रपन्न इत्यनेन निर्वहणसंधिसमाप्तौ नटाशंसा 'प्रवर्ततां प्रकृतिहिताय पार्थिवः' इत्यादिका सूचिता । 'सूत्रधारः पठेन्नान्दीम्' इत्युक्तेः । सूत्रधारलक्षणं यथा मातृगुप्ताचार्यैरुक्तम्—'चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ वेश्योपचारचतुरो माधुर्यगुणलक्षणः । नानागतिप्रचारज्ञो रसभावविशारदः ॥ नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः । छन्दोविधानतत्त्वज्ञः

( नान्द्यन्ते । )

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य । ) आर्ये यदि नेपथ्यविधानमवसितमितस्तावदागम्यताम् ।

---

सर्वशास्त्रविचक्षणः ॥ तत्तद्गीतानुगलयकलातालावधारणः । अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः । एवं गुणगणोपेतः सूत्रधारोऽभिधीयते ॥ ' इति ।

**नान्द्यन्त इति** । अत्र नान्दीलक्षणमादिभरते—' आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते ' इति । नान्दीपदव्युत्पत्तिरुक्ता नाट्यप्रदीपे—' नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः । यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दी ॥ ' इति । तत्र भरतः पञ्चमाध्याये—' सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः । नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृताम् ॥ ' इति । इदं पद्यमभिनवगुप्तपादाचार्यैर्भरतटीकायामभिनवभारत्यां व्याख्यातम् । अनेन त्र्यस्रतालानुगता त्रिपदा षट्पदा द्वादशपदेति चतुरस्रतालानुगता चतुष्पदा अष्टपदा षोडशपदेति पृथक्त्रिविधैव । नातःपरमपि भूयस्त्वादाद्दतेति । पदानि श्लोकावयवभूतानि तिङन्तानि सुबन्तानि वा श्लोकतुरीयांशरूपाणि वावान्तररूपाणि वेति व्याख्याय पुनरुक्तम् । आचार्यस्वरसस्त्ववान्तरवाक्येष्वेव पदत्वमिति एतदभिप्रायेण नाट्यप्रदीपे—' श्लोकपादः पदं केचित्सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥ ' इति । सूत्रमूलभरतटीकाकाराभिनवगुप्तपादाचार्यसंमतावान्तररूपाष्टपदा । येषां मते श्लोकतुरीयांशः पदं तेषां मते चतुष्पदेयं नान्दी । ये द्वे कालं विधत्त इत्यनेन चन्द्राङ्कत्वं चोक्तम् । यदाहुः—' चन्द्रनामाङ्किता कार्या स रसानां यतो निधिः । ' इति । इयं च **पत्रावली**संज्ञा नान्दी । तदुक्तं नाट्यदर्पणे—' यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा ॥ ' इति । एतादृश्या नान्द्या अन्ते । सूत्रं प्रयोगानुष्ठानं धारयतीति सूत्रधारः स्थापकनामा नटः । प्रविशतीति शेषः । संगीतसर्वस्वे तथोक्तेः—' वर्तनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥ ' इति । नेपथ्यं जवनिका । तदभिमुखमवलोक्येति कविवचनम् । नटेनावलोकनकर्मैव कृतं तदनुवादोऽयम् । एवमग्रेऽपि मध्ये मध्ये कविवचो बोद्धव्यम् । ' नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम् । ' इत्यजयः । आर्ये इति भार्यां प्रति संबुद्धिः । ' पत्नी चार्येति संभाष्या ' इति भरतवचनात् । नेपथ्यं मषीवेषश्च । यदाह भरतः—' रामादिव्यञ्जको वेषो नटे नेपथ्यमिष्यते । ' इति । तस्य विधानं करणमवसितं समाप्तं यदि तदा तावदादौ इत आगम्यतामिति संबन्धः । तत्र मषीवेषग्रहणं च नामाहार्याभिनयः । तस्यापि रस उपयोगात् । तदुक्तं मातृगुप्ताचार्यैः—' रसास्तु त्रिविधा वाचिकनेपथ्यस्वभावजाः । रसानुरूपैरालापैः श्लोकैर्वाक्यैः

---

१ श्रमितं तदितः

( प्रविश्य । )

नटी—आर्यपुत्र इयमस्मि । ( क )

सूत्रधारः—आर्ये अभिरूपभूयिष्ठा परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलाख्येन नाटकेनोपस्थातव्यमस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

( क ) अज्जउत्त इयं ह्मि ।

पदैस्तथा । नानालंकारसंयुक्तैर्वाचिको रस उच्यते ॥ कर्मरूपवयोजातिदेशकालानुवर्तिभिः । माल्यभूषणवस्त्राद्यैर्नैपथ्यरस उच्यते ॥ रूपयौवनलावण्यस्थैर्यधैर्यादिभिर्गुणैः । रसः स्वाभाविको ज्ञेयः स च नाट्ये प्रशस्यते ॥ ' इति । अज्जउत्त आर्यपुत्र । ' सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने ' इति भरतोक्तेर्नटीसंबुद्धिः स्थापकं प्रति । अत्र नाटके कवेः प्रायः सौरसेनी भाषैवाभिमतास्ति । उक्तं च मातृगुप्ताचार्यैः—' प्राक्प्रतीचीभुवोः सिन्ध्वोर्हिमवद्विन्ध्यशैलयोः । अन्तरावस्थितं देशमार्यावर्तं विदुर्बुधाः ॥ आर्यावर्तप्रसूतासु सर्वास्वेव हि जातिषु । सौरसेनीं समाश्रित्य भाषां काव्ये प्रयोजयेत् ॥ ' इति । क्वचित्पुरातनपुस्तके अय्यउत्त इति पाठः । सोऽपि सांप्रदायिक एव । एतदनन्तरं नवीने क्वचित्पुस्तके ' आणवेदु अज्जो को णिओओ अणुचिट्ठीअदुत्ति ' इति पाठः पुराणपुस्तकेष्वभावात्प्रयोजनाभावाच्चोपेक्ष्यः । ' रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥ भारतीसंस्कृतप्रायो वाग्व्यापारो नटाश्रयः । भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ' इति धनिकोक्तेर्भारतीवृत्तेः प्ररोचनालक्षणमङ्गमुपक्षिपति—' आर्ये अभिरूपभूयिष्ठा ' इत्यादिना ' रमणीयाः ' इत्यन्तेन । ' विस्तरादुत संक्षेपाद्विदधीत प्ररोचनाम् । ' इति रसार्णवसुधाकरोक्तेरियं विस्तीर्णा प्ररोचना । तल्लक्षणं च दशरूपके—' उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना ' इति । अभिरूपाः पण्डिता मनोज्ञाश्च भूयिष्ठा बहवो यस्यामेतादृशी परिषत्सभा । ' अभिरूपो बुधे रम्ये ' इति शाश्वतः । अनेन सभ्यप्रशंसा । तत्र सभ्यस्वरूपमादिभरते—' सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः । मध्यस्थाः सावधानाश्च वाग्मिनो न्यायवेदिनः ॥ ' इत्यादि । अद्येत्यनन्तरमेव वक्ष्यमाणग्रीष्मसमयोपलक्षणम् । कालिदासेति कविप्रशंसा । जगद्विलक्षणस्यातिप्रतीतस्य नामान्तरेण सरस्वतीवपुषस्तस्य नामसंकीर्तनमेव स्तुतिः । अभिज्ञानशकुन्तलेति स्वरूपत एवेतिवृत्तं रमणीयमित्यर्थः । तद्ग्रथितवस्तुनेति नवेनेति च रूपकप्रशंसा । दशरूपकेषु केन रूपकेणेत्याशङ्कायामाह नाटकेनेति । तल्लक्षणमुक्तं मातृगुप्ताचार्यैः—' प्रख्यातवस्तुविषयं धीरोदात्तादिनायकम् । राजर्षिवंशचरितं तथा

१ अस्मात्परं—आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति । इत्य० पुस्तकान्तरेषु.

२ इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्याभि० परिषत् । अस्यां च ०वस्तुनाभिज्ञानशकुन्तलनामधेयेन नवेन नाट०.

**नटी**—सुविहितप्रयोगतयार्यस्य न किमपि परिहास्यते । (क)

**सूत्रधारः**—आर्ये कथयामि ते भूतार्थम् ।

आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ २ ॥

**नटी**—आर्य एवमेतत् । अनन्तरकरणीयमार्य आज्ञापयतु । (ख)

---

(क) सुविहिदप्पओअदाए अज्जस्स ण किं वि परिहाइस्सदि ।
(ख) अज्ज एवं एदम् । अणन्तरकरणिज्जं अज्जो आणवेदु ।

---

दिव्याश्रयान्वितम् ॥ युक्तं वृद्धिविलासाद्यैर्गुणैर्नानाविभूतिभिः । शृङ्गारवीरान्यतरप्रधानरससंश्रयम् ॥ प्रकृत्यवस्थासंध्यङ्गसंध्यन्तरविभूषणैः । पताकास्थानकैर्वृत्तिं तदङ्गैश्च प्रवृत्तिभिः ॥ नाट्यालंकरणैर्नानाभाषायुक्पात्रसंचयैः । अङ्कप्रवेशकैराढ्यं रसभावसमुज्ज्वलम् ॥ दुःखदुःखोत्पत्तिकृतं चरितं यच्च भूभृताम् । इतिवृत्तं कथोद्भूतं किंचिदुत्पाद्यवस्तु च ॥ नाटकं नाम तज्ज्ञेयं रूपकं नाट्यवेदिभिः ॥' इति । **नटी**—आर्यस्य सुविहितप्रयोगतया सुशिक्षिताभिनयप्रयोगतया न किमपि परिहास्यते परिहीनं भविष्यतीति नटस्तुतिः । **सू०**—भूतार्थं सत्यार्थम् । 'भूतं क्ष्मादौ पिशाचादौ न्याये सत्योपमानयोः ।' इति विश्वः । **आपरीति** । विदुषां परितोषादा परितोषं मर्यादीकृत्य । यावत्परितोषो भवतीत्यर्थः । 'आङ् मर्यादावचने' इति कर्मप्रवचनीयत्वे 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । प्रयोगस्य चतुर्धाभिनयप्रयोगस्य विशिष्टं ज्ञानं साधु सम्यङ् न मन्ये । ज्ञानमात्रं न साधु मन्य एव विशिष्टमपि ज्ञानं न साधु मन्ये । आत्मन इत्यार्थे नञ्याः 'अज्जस्स' इत्युक्तेः । अन्यथा वक्ष्यमाणव्यङ्ग्यावकाशोऽपि न स्यात् । असत्यार्थे तस्मिन्विशेषे वक्तव्ये सामान्यमुक्तमित्यप्रस्तुतप्रशंसा स्यात् । तस्यां च सामान्यस्य समर्थकत्वं न घटते । न च 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानम्' इत्युक्तेर्विज्ञानशब्द एव तत्र शक्त इति वाच्यम् । प्रयोगपदवैयर्थ्यापातात् । अनेन विद्वत्परीक्षणीयं मम प्रयोगविज्ञानमिति व्यज्यते । पर्यायोक्तमलंकारः । तल्लक्षणमुक्तं भामहेन—'पर्यायोक्तप्रकारेण यदन्येनाभिधीयते । वाच्यवाचकशक्तिभ्यां शून्येनावगमात्मना ॥' इति । तत्समर्थकमाह—**बलवदिति** । बलवदधिकमपि । 'बलवत्सुष्ठु किमुत स्वस्त्यतीव च निर्भरे ।' इत्यमरः । शिक्षितानां पुरुषाणाम् । विशेषणादेव विशेष्यप्रतिपत्तेर्विशेष्यानुपादानम् । तथा च वामनः—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इति । चेत आत्मनि स्वविषयेऽप्रत्ययमविश्वासि । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।' इत्यमरः । 'क्व नासि शुभप्रदः' इतिवद्धिशब्दानुपादानेऽप्ययमर्थान्तरन्यासः । सामान्यस्य समर्थकत्वात् । श्रुत्यनुप्रासश्च । विश्वासस्य चेतोधर्मत्वे-नार्थपौनरुक्त्यम् । विश्वास[illegible]स्य विधेयत्वादविमृष्टविधेयांशता च । एतद्दोष-

**सूत्रधारः**—किमन्यदस्याः परिषदः श्रुतिप्रसादनतः। तदिममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। संप्रति हि

**सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।**
**प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः॥ ३॥**

**नटी**—तथा। (इति गायति।)

**ईषदीषच्चुम्बितानि भ्रमरैः सुकुमारकेसरशिखानि।**
**अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि॥ ४॥ (क)**

---

(क) तहा। ईसीसिचुम्बिआइं भमरेहिं सुउमारकेसरसिहाइं।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं॥ ४॥

---

परिहाराय 'स्वस्मिन्प्रत्येति नो चेतः' इति पठनीयम्। आर्ये इयमपि नटस्तुतिरेव। अस्याः परिषदः सभायास्तात्स्थ्यात्तत्रत्यानां सामाजिकानां श्रुतिप्रसादनतः श्रवणप्रसादादन्यत्किं करणीयमित्यनुषज्यते। 'ऋतुं कंचिदुपादाय' इत्युक्तेस्तमुपादत्ते—**तदिममिति**। तत्तस्मात्कारणाच्छ्रुतिप्रसादननिमित्तं गीयतामिति संबन्धः। अचिरप्रवृत्तमित्यनेन तदुत्पन्नपुष्पादेः सौरभ्याद्यतिशयो व्यज्यते। उपभोगाय चन्दनाद्युपभोगाय क्षमः समर्थस्तम्। अनेन स्वस्य श्रमापनोदोपायबाहुल्यसूचनम्। संप्रति ग्रीष्मे हि यस्मात्। अस्य श्लोकेनान्वयः। **सुभगेति**। सुतिशयेन भगो यत्नो येष्वेतादृशाः सलिलावगाहा यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः। 'भगशब्दो यशोज्ञानवीर्ययत्नार्कयोनिषु।' इति धरणिः। एतेन जलक्रीडायोग्यत्वं ध्वन्यते। पाटलानां पाटलीपुष्पाणां संसर्गः संबन्धो येषु ते। 'पुष्पे क्लीबेऽपि पाटला' इत्यमरः। [पाठान्तरे संसर्गेण] सुरभयो मनोज्ञाः। मनोज्ञत्वं च शीतलत्वेन सुखस्पर्शात्। 'सुगन्धे च मनोज्ञे च सुरभिर्वाच्यवन्मतः।' इति विश्वः। एवंभूता वनवाता येषु ते। वनशब्देन मान्द्यं ध्वनितम्। तेन संसर्गिसुरभिशब्दयोरन्यतरस्यावकरत्वं न शङ्कनीयम्। अनेन वियोगिजनसंचरणाक्षमत्वं ध्वन्यते। प्रकृष्टा छाया येषु प्रदेशेषु ते प्रच्छायास्तेषु सुलभा निद्रा येषु ते। अमुना रतश्रमहरत्वं ध्वन्यते। परिणामे दिवसावसाने रमणीयाः सुखसंचरणीयाः। एतेन शुभायतित्वं द्योत्यते। सर्वैर्विशेषणैः प्रकृतस्वीयपरिश्रमखेदविनोदो ध्वन्यते। परिकरालंकारः—'विशेषणसाभिप्रायत्वे परिकरः' इति तल्लक्षणात्। स्वभावोक्तिश्च। श्रुतिवृत्त्यनुप्रासौ। इयं चाचेतनग्रीष्मसमयस्तुतिः। तथेति गीयत इत्यर्थः। गायतीति कविवचनम्। भारत्या वृत्तेरामुखापरपर्यायं प्रस्तावनालक्षणं द्वितीयमङ्गमुपक्षिपति—'ईसीसि' इत्यादिना 'निष्क्रान्तौ' इत्यनेन। **ईषदीषदिति**। सुकुमाराः केसराणां शिखा अग्रभागा येषु तानि। अग्रभागेष्वेव

---



१ दनतः संगीतात्; ०प्रसाद-प्रमोद-हेतोः गीता-संगीता-द्र; तस्य क्रमिकाभिः १ नटी-अथ कतमं पुनर्ऋतुमधिकृत्य-समाश्रित्य गास्यामि। सूत्र०—तन्विममेव. २ संसर्गि.

सूत्रधारः—आर्ये साधु गीतम् । अहो रागबद्धचित्तवृत्तिरालिखित इव सर्वतो रङ्गः । तदिदानीं कतमत्प्रकरणमाश्रित्यैनमाराधयामः ।

नटी—नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशकुन्तलं नामापूर्वं नाटकं प्रयोगे अधिक्रियतामिति । ( क )

---

( क ) णं अज्जमिस्सेहिं पढमं एव्व आणत्तं अहिण्णाणसउन्दलं णाम अपुव्वं णाडअं पओए अधिकरीअदुत्ति ।

---

भ्रमरचुम्बनसंभवात्तदुक्तिः । यतः कोमलकिञ्जल्काग्राण्यत एवेषच्चुम्बितानीति द्विरुक्तिः । अत एव दयमानाः सकृपाः । अकठोरं स्पृशन्त्य इति यावत् । प्रकृष्टो मदो रूपसौभाग्यजनितो विकारो यासां ताः । तासामेवं तथाविधालंकारकर्तव्यतायोग्यत्वाच्छकुन्तलासूचकत्वाच्च न विशेषपरिवृतत्वदोषावकाशः । वृत्त्यनुप्रासः काव्यलिङ्गम् । अयं त्रिंशन्मात्रदलद्वयरूपो द्विपदीनामा लयभेदः । इयं च गीतिः । अथ चात्र प्रमदाशब्देन शकुन्तला गृहीता । सा शिरीषकुसुमान्यवतंसयन्तीत्युक्तम् । बहुवचनं पूजार्थम् । अत एव वक्ष्यति—'बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकम्' इति । विमर्शसंधिसमाप्त्यवसरे च राज्ञा अस्याः शकुन्तलायाः प्रसाधनमभिप्रेतं विस्मृतमस्माभिः इत्युक्त्वा 'कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम् ।' इत्युक्तम् । सू०—अहो इत्याश्चर्ये । रङ्गो रङ्गभूः । तात्स्थ्यात्सभ्यसमूहः । रागे गीतधातौ बद्धा चित्तवृत्तिर्यस्य सः । अत एव सर्वतः सर्वत्रालिखित इव । चित्रन्यस्त इवेत्यर्थः । द्वितीयपक्षे रज्यत इति रङ्गः । अथ रङ्गो रागो विद्यतेऽस्मिन्नित्यर्शआदित्वादचि रङ्गो राजा । रागेऽनुरागे बद्धा चित्तवृत्तिर्यस्य सः । सर्वत आलिखित इव सर्वत्र तां पश्यतीत्यर्थः । 'रङ्गो रणे खले रागे नृत्ये रङ्गं त्रपुण्यपि ।' इति विश्वः । 'स्वैरङ्गैश्चापि वीथ्यङ्गैः प्रकुर्यादामुखं बुधः ।' इति मातृगुप्ताचार्योक्तेः 'वीथ्यङ्गान्यामुखान्तत्वात्प्रोच्यन्तेऽत्रैव तानि तु ।' इति धनिकोक्तेश्चावलगितं नामाङ्गमुपक्षिप्तमनेन । तल्लक्षणं सुधाकरे—'द्विधावलगितं प्रोक्तमर्थावलगनात्मकम् । अन्यप्रसङ्गादन्यस्य संसिद्धिः प्रकृतस्य च ॥' इति । प्रकरणं रूपकम् । नन्विति 'णं नन्वर्थे' इति सौरसेन्याम् । अत्र क्वचित् 'पढमम्' इति पाठः सांप्रदायिकः । यतः प्रथमशब्दस्य 'पढम पढुम पुढम' इति त्रय आदेशाः । 'अहिण्णाणसउन्दलम्' इत्यत्र 'सउन्तलम्' इति पाठे पूर्ववद्दत्वाभावः । दकारपाठे 'वर्गेऽन्त्यो वा' इति परसवर्णत्वे पक्षेऽनुस्वारे पूर्ववद्दकारः । येषां मते नित्यं परसवर्णस्तेषां मते 'अधः क्वचित्' इति सूत्रेण दकारः । एवमग्रे 'सउन्दले सउन्तले' इति पाठे रूपद्वयं ज्ञेयम् ।

---

१ रागापहृत. २ पओएण ( प्रयोगेण ).

**सूत्रधारः**—आर्ये सम्यगनुबोधितोऽस्मि । अस्मिन्क्षणे विस्मृतं खलु मया तत् । कुतः ।

तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ५ ॥

( इति निष्क्रान्तौ । )

( प्रस्तावना । )

---

'अपुव्वम्' इत्यत्र 'अपुरवम्' इति पाठे 'सौरसेन्याम्' इत्यनुवृत्तौ 'पूर्वस्य पुरवः' इति पूर्वशब्दस्य पुरवादेशः । प्रस्तावनाङ्गं प्रयोगातिशयमुपक्षिपति—**तवेति**। अस्मीत्यहमर्थेऽव्ययम् । गीते गीतौ निबद्धेन रागेण श्रीरागादिना धातुना । हारिणा श्रुतिसुखदेन हर्तुं शीलमस्येति च । मृगपक्षेऽस्यातिरंहसो हेतुत्वेन योज्यम् । उपमेयपक्षेऽपि प्रसभहरणे हेतुत्वेन योज्यम् । विशिष्टस्यैवोपमानत्वान्न विशेषण-न्यूनता शङ्कनीया । प्रसभमत्यर्थं हृत आसक्तचित्तः । द्वितीये पक्षे हृतः स्वसेनाया दूरं प्रच्यावितः । उभयं भिन्नमपि साधारणधर्मप्रतिपादनार्थमतिशयोक्त्यैक्यत्वे-नाध्यवसितम् । एष इति प्रयोगातिशयाङ्गार्थम् राजेति प्रवेशानुगुणम् दुष्यन्तेति नामग्रहणमन्यराजव्यावर्तकत्वेनेति नैकस्याप्यवकरत्वं शङ्कनीयम् । सारङ्गेण मृगेण । कीदृशा.तेन । अतिरंहसातिवेगवता । 'रंहस्तरसी तु रयः स्यदः । जवः' इत्यमरः । अत्र व्यावर्तकत्वेन दुष्यन्त इत्यस्य विशेषणत्वाद्विशेष्यानन्तरमेतच्छब्दस्योचितत्वान्ना-क्रमत्वम् । रसनाकाव्यलिङ्गं वोपमा । श्रुतिवृत्त्यनुप्रासौ । [ अतिरंहसा इत्येतस्य ] करणत्वेन योजने विशेषणयोरार्थत्वशाब्दत्वलक्षणः प्रक्रमभङ्गः । हारिणेत्यत्र यद्धेतुत्वेन विशिष्टोपमानत्वं तच्छब्देन घटते । प्रयोगातिशयलक्षणं दशरूपके—'एषोऽयमित्युपक्षे-पात्सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥' इति । **प्रस्तावनेति**। तल्लक्षणं तु सुधाकरे—'विधेर्यथैव संकल्पो मुखतां प्रतिपद्यते । प्रधानस्य प्रवन्धस्य तथा प्रस्तावना मता ॥ अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावना मता ।' इति । दशरू-पके च—'सूत्रधारो नटीं ब्रूते मार्षं वापि विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रो-क्त्या यत्तदामुखम् । प्रस्तावना वा' इति । 'एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥' इति । वस्तु इतिवृत्तम् । अत्र 'ततः प्रविशति' इत्यारभ्य द्वितीयाङ्के 'उभौ परिक्रम्योपविष्टौ' इत्यन्तेन सार्धाङ्केन मुखसंधिः । तल्लक्षणं तत्रैव—'मुखं बीजसमुत्पत्तिर्नानार्थरससंश्रया ।' इति । आरम्भ-बीजयोर्लक्षणे आदिभरते—'औत्सुक्यमात्रबन्धस्तु यो बीजस्य निबध्यते । महतः फलयोगस्य स खल्वारम्भ इष्यते ।' इति । यथात्र 'राजा—भवतु । तां द्रक्ष्यामि' इति । 'अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति । फलावसानं यच्चैव बीजं तदभिधीयते ॥' इति । यथात्र 'पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि' इति । यथा च 'वैखानसः—

( ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च । )

**सूतः**—( राजानं मृगं चावलोक्य । ) आयुष्मन् ।

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ ६ ॥

**राजा**—सूत दूरममुना सारङ्गेण वयमाकृष्टाः । अयं पुनरिदानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ ७ ॥

( सविस्मयम् । ) तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तः ।

---

इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य ' इति । ततः प्रविशतीति। अयं धीरोदात्तो नायकः । अतोऽस्य संस्कृतं पाठ्यम् । सूतस्यापि संस्कृतं पाठ्यम्। उक्तं चादिभरते ' धीरोद्धते धीरललिते धीरोदात्ते तथैव च । धीरप्रशान्ते च तथा पाठ्यं योज्यं च संस्कृतम् ॥ ' इति । 'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः। स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥ ' इति तल्लक्षणं च दशरूपके। धीरोदात्तत्वं चास्य ' स्वसुखनिरभिलाषः ' इत्यादिना स्फुटमेव दर्शितम् । रथेनेति सहार्थे तृतीया । ' वृद्धो यूना ' इति ज्ञापकाद्विनापि सहशब्दप्रयोगेण । ततः ' आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ' इति भरतोक्तेः 'आयुष्मन् ' इति संबुद्धिः । कृष्णेति । कृष्णसारे मृगविशेषेऽधिज्यकार्मुकेऽधिरूढगुणधनुषि त्वयि च चक्षुर्ददत् । अभ्यस्तत्वान्नुमभावः । चकारेण तुल्यकालता द्योत्यते । ततश्चैकस्य चक्षुषो युगपदनेकत्र वर्तमानत्वाद्विशेषालंकारः । मृगरूपधरयज्ञानुसारिणम् । प्रकृते तदनुसारित्वं प्रकरणलभ्यम् । साक्षात्पिनाकिनं महादेवं पश्यामीवेत्युत्प्रेक्षा । यतोऽत्र सतोः प्रकृताप्रकृतयोरसतस्तादात्म्यसंबन्धमात्रस्य संभाव्यमानत्वात् । क्वचिदुभयोरसतोरपि ' कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ' इति यथा । नोपमा साक्षाच्छब्दवैयर्थ्यात्क्रियानन्तरमिवशब्दप्रयोगाच्च । ' नोपमानं तिङन्तेन ' इति भामहोक्तेः । ददच्चक्षुः पश्यामीति क्रियाद्वयग्रहणाच्च । उपमायां तु पिनाकिनमिव साक्षात्पश्यामीत्येवं योजने ददच्चक्षुरित्यनेन पौनरुक्त्यमेव । श्रुतिवृत्त्यनुप्रासौ । सारङ्गेण मृगेण । ' अयं पुनरिदानीमपि ' इति श्लोकशेषः । ग्रीवेति । पश्येति वाक्यार्थस्य कर्मत्वम् । इदानीमप्ययं पुरो दृश्यमानो मृगः पुनरुदग्रप्लुतत्वादुत्कटोत्प्लवनाद्वियत्याकाशे बहुतरमधिकं प्रयाति प्रकृष्टं यातीति । अनेन गमनस्य प्रकर्ष उक्तः । बहुतरमिति देशाधि-

---

१ कृष्णसारेण. २ बद्ध. ३ कथमनु० संवृत्तोऽयं मृगः. ४ अन्वेषणीयः.

सूतः—आयुष्मन् उद्घातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

राजा—तेन हि मुच्यन्तामभीषवः ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( रथवेगं निरूप्य । ) आयुष्मन् पश्य पश्य ।

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ८ ॥

ऽयमुक्तम् । उर्व्यां स्तोकमल्पं यातीति । अनेन पौनरुक्त्यशंकानवकाशः । कीदृक् । अनु पश्चात्पतति स्यन्दने रथे ग्रीवाभङ्गेनाभिरामं यथा स्यात्तथा मुहुर्वारं वारं बद्धदृष्टिर्दत्तचक्षुः । ‘ दृष्टिर्ज्ञानेऽक्षिदर्शने ’ इत्यमरः । शरपतनभयाद्बाणपातत्रासेन भूयसाधिकेन पश्चार्धेन पूर्वकायं प्रविष्ट इवेति गम्योत्प्रेक्षा ’ गोलकीभूत इवेत्यर्थः । ‘ पश्चात् ’ इति सूत्रेण ‘ अर्धोत्तरपदस्य दिक्पूर्वपदस्यापरशब्दस्य पश्चभावो वक्तव्यः । ’ इत्युक्त्वा ‘ अर्धे विनापि पूर्वपदेन पश्चभावो वक्तव्यः । इति वार्तिकेन पश्चार्धेति सिद्धम् । पुनः कीदृक् । अर्धावलीढैरर्धजग्धैरिति दर्भाणां मुखान्तःसत्त्वे हेतुत्वेनोपात्तम् । श्रमेण विवृतं व्यात्तं यन्मुखं तस्माद्भ्रंशिभिरधःपतद्भिर्दर्भैः कीर्णवर्त्मा व्याप्तमार्गः । भयाभूयेति यतियातीतिछेकश्रुतिवृत्त्यनुप्रासाः । श्रमेणेत्यत्र रसनाकाव्यलिङ्गम् । तल्लक्षणं यथा—‘ प्रत्युत्तरोत्तरार्थं यत्पूर्वापूर्वार्थहेतुतः । रसनाकाव्यलिङ्गं तत् ’ इति । स्रग्धरा वृत्तम् । अत्र भयानको रसो व्यङ्ग्यः । तस्य मृगगतं भयं स्थायिभावः । दुष्यन्ताधिष्ठितस्यन्दनालोकनमालम्बनविभावः । तदनुपतनशरपतनौत्सुक्यादीन्युद्दीपनविभावाः । ग्रीवाभङ्गार्धभक्षिततृणस्खलनशुष्कोष्ठकण्ठत्वमुखवैवर्ण्यशरीरसंकोचाश्रुजलादयोऽनुभावाः । त्रासश्रमशङ्कावेगादयो व्यभिचारिणः । कम्पादयः सात्त्विकाः । एतै रसो व्यज्यते । सूतः—उद्घातिनी स्खलनयोग्या । ‘ उद्घातः कथ्यते पादस्खलने समुपक्रमे ’ इति विश्वः । रश्मीनां प्रग्रहाणां संयमनात् । ‘ किरणप्रग्रहौ रश्मी ’ इत्यमरः । मन्दीकृतोऽल्पीकृतः । विप्रकृष्टमतिदूरमन्तरं देशावकाशरूपं यस्य सः । दुरासदो दुष्प्रापः । अभीषवः प्रग्रहाः । ‘ अभीषुः प्रग्रहे रश्मौ ’ इत्यमरः । रथवेगं निरूप्य दृष्ट्वेति कविवचनम् । मुक्तेष्विति । रश्मिषु प्रग्र-

१ उत्खातिनी भूरियमिति. २ नास्त्येतत्क्वचित्. ३ समदेशवर्ती न दुरासदः. ४ यथाज्ञा. ५ स्वेषामपि प्रसरतां रजसामलंघ्याः । निष्कम्प—खाश्रुतकर्णभङ्गा धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते ॥

राजा—सत्यम् । अतीत्य हरितो हरींश्च वर्तन्ते वाजिनः । तथा हि ।

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥ ९ ॥

हेषु मुक्तेषु संयमनान्मुक्तेषु । शिथिलितेष्विति यावत् । अमी तेजस्विनो धारापञ्चकनिपुणाः । जगत्यश्वरत्नीभूता इत्यर्थान्तरसंक्रमितवाच्यम् । रथ्या रथवाहका अश्वाः । धावन्ति द्रुततरं गच्छन्ति । 'तद्वहतिरथयुग०' इति यत् । 'रथ्यो वोढा रथस्य यः' इत्यमरः । निरायतो नितरां दीर्घः पूर्वकायः पूर्वशरीरं येषां ते । निष्कम्पा निश्चलाश्चामराणां भूषार्थं बद्धानां शिखा अग्रभागा येषु ते । निभृतौ निश्चलावूर्ध्वौ कर्णौ यस्य सः । पश्चात्कृतैकशेषाणां वहुवचनम् । आत्मोद्धतैरपीति । नेम्युत्थितैस्तु सुतरामित्यपिशब्दार्थः । मृगस्य जवो वेगस्तदक्षमया तदक्षान्त्येवेति हेतूत्प्रेक्षा । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । विशेषणचतुष्टयेन वेगातिशयो व्यज्यते । स्वभावोक्तिः । वृत्त्यनुप्रासः । वसन्ततिलकावृत्तम् । सत्यमिति सूतोद्गारभिन्नं वाक्यम् । चोऽप्यर्थे । हरितो हरिद्वर्णान् । 'पालाशो हरितो हरित्' इत्यमरः । नीलवर्णानिति यावत् । हरिताश्वानप्यतीत्यातिक्रम्य वाजिनोऽश्वा वर्तन्ते । वेगेन सूर्याश्वा अप्येभिर्जिता इत्यर्थः । 'हरिरिन्द्रे हरिर्विष्णौ हरिरश्वे हरी रवौ ।' इत्यनेकार्थध्वनिमञ्जरी । अन्येषां का गणनेत्यपिशब्दार्थः । यदेति । आलोके दर्शने यत्सूक्ष्मम् । 'आलोकौ दर्शनद्योतौ' इत्यमरः । यद्दूरेण सूक्ष्मं दृश्यत इत्यर्थः तत्सहसाकस्मादेव । तस्मिन्नेव क्षण इति यावत् । नयनयोर्विपुलतां व्रजति । स्थूलं दृश्यत इत्यर्थः । प्रकृत्या स्वभावेन यदर्धे विच्छिन्नं तत्सहसा नयनयोः कृतसंधानमिव कृतसंधानवद्भवति । यत्पूर्वं छिन्नं तत्तस्मिन्नेव क्षणे दूरत एकमिव दृश्यत इत्यर्थः । प्रकृत्या यद्वक्रं तदपि नयनयोः सहसा समरेखं भवतीत्यनुषज्यते । दूरत्वात्समा रेखाभोगो यस्य तत् । ऋज्वित्यर्थः । 'रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि ।' इति हैमः । नयनयोः समरेखं न वस्तुत इति गम्योत्प्रेक्षा । इवानुषङ्गेण समरेखमिवेति योज्यम् । स्वभावोक्तिर्विरोधाभास उत्प्रेक्षा च । मे मम रथस्य जवाद्वेगात्क्षणमपि न किंचिद्दूरे न पार्श्वे । दक्षिणवामपार्श्वयोरित्यर्थः । अथ च पार्श्वे निकटे । क्षणादेव मम दूरे दक्षिणवामपार्श्वयोरपि निकटे च किमपि नास्तीत्यर्थः । अत एव पार्श्व इत्येकवचनोपादानम् । 'पार्श्वोऽवयवभेदे स्याच्चक्रोपायसमीपयोः' इति धरणिः । तेन यथासंख्यालंकारः । रथजवादिति हेतुश्च ।

१ यदर्द्धा, यदन्तः. १ पार्श्वे...न दूरे.

सूत पश्यैनं व्यापाद्यमानम् । ( इति शरसंधानं नाटयति । )

( नेपथ्ये । )

भो भो राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

सूतः—( आकर्ण्यावलोक्य च । ) आयुष्मन् अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः ।

राजा—( ससंभ्रमम् । ) तेन हि प्रगृह्यन्तां वाजिनः ।

सूतः—तथा । ( इति रथं स्थापयति । )

( ततः प्रविशत्यात्मनातृतीयो वैखानसः । )

वैखानसः—( हस्तमुद्यम्य । ) राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः संनिपात्योऽयमस्मि-
न्मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥ १० ॥

---

यदायदेति वतिवतेति नयनयोरिति छेकानुप्रासस्य वृत्यनुप्रासेन सह संसृष्टिः । ताभ्यां च सह श्रुत्यनुप्रासस्यैकवाचकानुप्रवेशलक्षणः संकरः । शिखरिणी वृत्तम् ॥ ९ ॥ 'कृष्णसारे' इत्यारभ्यैतदन्तेन पट्त्रिंशद्भूषणमध्य आद्यं भूषणमुपक्षिप्तम् । नेपथ्य इति । अप्रविष्टमेव यज्जवनिकान्तरे वदति तन्नेपथ्य इत्युच्यते । अन्तरसन्धिश्चायम् । प्रकृतार्थसूचकत्वेन । उक्तं मातृगुप्ताचार्यैः—'स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिस्तथैव च । आकाशवचनं चेति ज्ञेया ह्यन्तरसंधयः ॥' इति । बाणपातवर्तिन इत्यनेन नैकट्यम् । कृष्णसारस्य मृगस्यान्तरे मध्ये । 'अथान्तरेऽन्तरा । अन्तरेण तु मध्ये स्युः' इत्यमरः । ससंभ्रमं सादरमिति वक्तिक्रियाविशेषणम् । एवमग्रेऽप्येतादृशस्थले योजनीयम् । प्रगृह्यन्तां प्रग्रहाकर्षणेन स्थिरीक्रियन्ताम् । 'इति रथं स्थापयति' इति कविवाक्यम् । आत्मनातृतीय इति द्वौ शिष्यौ स्वयं तृतीय इत्यर्थः । 'आत्मनश्च पूरणे' इति तृतीयाया अलुक् । एषामपि संस्कृतं पाठ्यम् । तदुक्तमादिभरते—'परिव्राण्मुनिशाक्येषु तापसश्रोत्रियेषु च । द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ॥' इति । 'राजन्नित्यृषिभिर्वाच्यः' इति भरतोक्तेः 'राजन्' इति संबोधनम् । [ आश्रमस्य शमप्रधानत्वात् हिंसां निवारयन्नाह आश्रममृगोऽयमिति । न खल्विति—मृदुनि कोमले अस्मिन्मृगशरीरे । अयं साधुकृतसंधानः बाणः । पुष्पराशौ । अनेन तस्यातिकोमलत्वं ताडनानर्हत्वं च सूचितम् । अग्निरिव न खलु न खलु संनिपात्यः । खलु इत्यनुनये । हरिणकानामतिलोलमतिचञ्चलम् । सद्यःपातीति यावत् । जीवितं बत क्व । बत इति अनुकम्पायाम् । निशितः तीक्ष्णः

---



१ पथ, पातपथ. २ निगृ०. ३ अभीपवः. ४ तथा करोति. ५ [illegible]. ६ [illegible].

तत्साधुकृतसंधानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥ ११ ॥

राजा—एष प्रतिसंहृतः । ( इति यथोक्तं करोति । )

वैखानसः—सदृशमेतत्पुरुवंशप्रदीपस्य भवतः ।
जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥ १२ ॥

इतरौ—( बाहू उद्यम्य । ) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

राजा—( सप्रणामम् । ) प्रतिगृहीतं ब्राह्मणवचनम् ।

वैखानसः—राजन् समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । अपि च ।

---

निपातो येषां ते तथा । वज्रस्येव सारो येषाम् । अत्यन्तकठिना इत्यर्थः । तादृशाः ते शराः क । क्वेति वीप्सोभयोर्महदन्तरं सूचयति । मालिनी वृत्तम् ॥ १० ॥ ] **तत्साध्विति** । तत्तस्मात्साधु यथा स्यादेवं कृतं संधानं यस्य तम् । साधुशब्देनापराद्धपृषत्काभावो व्यज्यते । सायकं बाणम् । प्रतिसंहर । प्रत्यावृत्य स्वं स्थानं प्रापयेत्यर्थः । तत्रान्वयव्यतिरेकौ हेतुत्वेनोद्दिशति—आर्तेति । वः शस्त्रमार्तानां पीडितानां त्राणाय रक्षणाय साधुपीडकानां दुष्टानां हिंसाया इत्यन्वयः । अनागसि अनपराधे । 'आगोऽपराधो मन्तुश्च' इत्यमरः । प्रहर्तुं नेति व्यतिरेकः । उभयविधेयं काव्यलिङ्गम् । साधुसंधेति र्तत्रास्त्रेति छेकश्रुत्यनुप्रासौ ॥ ११ ॥ इति यथोक्तं करोति शरं तूणीरे निक्षिपतीति कविवचनम् । **जन्मेति** । यस्य तव पुरोर्वंशे जन्म तस्य तवेदमस्मदुक्तकरणं युक्तरूपमतिशयेन युक्तम् । 'प्रशंसायां रूपप्' इति रूपप् । युक्तरूपत्वे प्रथमचरणार्थहेतुत्वोपादानात्काव्यलिङ्गम् । [ एवं त्वत्सदृशा गुणास्तैः उपेतं ] एवंगुणोपेतं स्वगुणयुक्तम् । चक्रवर्तिनं पुत्रमाप्नुहि लभस्व ॥ १२ ॥ यस्य कस्याप्यातिथेः सत्कारः कर्तव्यः किमुत राज्ञः । अतस्तदकरणेऽनौचित्यं स्यादित्यत आह—समिदाहरणायेति । ननु तद्यादृच्छिकमिदमावश्यकं तत्त्यागेनेदमेव कर्तव्यमित्यत आह—**कुलपतेरिति** । तंन तत्त एव भविष्यति । अनेन स्वस्याप्राधान्यमुक्तम् । तल्लक्षणं पुराणे—'मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥' इति । अनुमालिनीतीरम् । विभक्त्यर्थेऽव्ययीभावः । मालिनीनदीतीरे । कार्यातिपातः कार्यव्यासङ्गः । अतिथिषु साधुरातिथेयः । पथ्यतिथिवसतिस्वपतेर्ढञ् इति ढञ् । सत्कारः पूजा । वैखानसः—राजन् समिदाहरण इत्यादिना 'सत्कारः' इत्यन्तेन उल्लेखो नाम नाट्यालंकार उपक्षिप्तः । तल्लक्षणम्—

---

१ काश्यपस्य. २ महर्षेः. ३ अतिथिसत्कारः.

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ १३ ॥

राजा—अपि संनिहितोऽत्र कुलपतिः ।

वैखानसः—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

राजा—भवतु । तामेव पश्यामि[2] । सा खलु विदितभक्ति[3] मां महर्षेः करिष्यति ।

वैखानसः—साधयामस्तावत् । ( इति सशिष्यो निष्क्रान्तः । )

राजा—सूत चोदयाश्वान् । पुण्याश्रमदर्शनेन[4] तावदात्मानं पुनीमहे ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( इति भूयो रथवेगं निरूपयति । )

राजा—( समन्तादवलोक्य । ) सूत अकथितोऽपि ज्ञायत एव यथायमाश्रमाभोगस्तपोवनस्येति[5] ।

---

'कार्यदर्शक उल्लेखः' इति । रम्या इति । वेदबोधिताचरणत्वेन रम्यत्वम् । क्वचित् 'धर्म्याः' इति पाठः । धर्मादनपेता धर्म्याः । तेनैनोऽपनुत्तिधन्यत्वाद्वि राज्ञो व्यज्यते । तपोधनानामित्यनेनात्यन्तविषयनैरपेक्ष्यम् । प्रतिहतविघ्ना इत्यनेनास्य प्रतापातिशयः । कियद्रक्षतीत्येनं प्रत्यार्थौ हेतुः । क्रिया यागादिकर्म । आरम्भः शिक्षादेवतादिपूजनं संप्रधारणमर्थानां विचारश्चेष्टा च । अत एव बहुवचनम् । सम्यगवलोक्य न वस्तुस्थित्याः श्रवणेन । अपि तु स्वयं सम्यग्दृष्ट्वात्यन्तसंतोषकारिण्य इति भावः । ज्ञास्यसि न तु ज्ञातवान्न च जानासि । मौर्वी ज्या तस्याः किणश्चिह्नं तदङ्को भूषा यस्मिन्सः । 'अङ्को भूषणलक्ष्मसु' इति हैमः । अनेन तस्य सदैव जगत्त्रासापसारणोद्यम उक्तः । भुजः कियद्रक्षतीत्यन्यसहायानपेक्षत्वम् । एकवचनेन तस्मिन्नपि परानपेक्षत्वं ध्वनितम् । परिकरालंकारः । पूर्वार्धे एवायमलंकारो नोत्तरार्धे । वृत्त्यनुप्रासश्रुत्यनुप्रासौ । किणाङ्केति पुनरुक्तवदाभासः । काव्यलिङ्गमपि । आर्या ॥ १३ ॥ अपि संनिहितोऽत्रेति । अपिः प्रश्ने । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपिः' इत्यमरः । पुंव्यक्तिशिष्यादिसाध्ये कर्मणि यद्दुहितरमित्युक्तिस्तयोरन्ययोरपि सत्त्वे शकुन्तलामित्युक्तिस्तयास्य मुनेर्जीवितसर्वस्वत्वं ध्वन्यते । गान्धर्वादिविवाहस्यानायासेन संपादनं च । अत एव वक्ष्यति—'ममाप्यस्या अनुरूपवरप्रदाने संकल्पः' इति । अथ च प्रतिकूलं दैवं शापस्तस्योपशमनेन सपुत्रायास्तस्या राज्ञा स्वगृहानयनमपि सूचितम् । अतोऽस्य बीजवाक्यत्वमुपपन्नम् । 'जन्म यस्य' इत्यादिना 'तां

---

१ भा. सं. दिव्य. २ द्रक्ष्यामि. ३ ०भक्तिः...कथयिष्यति. ४ दर्शनसम्भावनादा०, वनयात्मा०. ५ एवायमा०, माश्रमस्तपो०.

सूतः—कथमिव ।

राजा—किं न पश्यति भवान् । इह हि

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ १४ ॥

वक्ष्यामि' इत्यन्तेन मुखसंधेरुपक्षेप इति प्रथममङ्गमुपक्षिप्तम् । तल्लक्षणमादिभरते—'काव्यस्यार्थसमुत्पत्तिरुपक्षेप इति स्मृतः ।' इति । नीवारा इति । तरूणां वृक्षाणामधो नीवारास्तृणधान्यानि सन्तीति क्रियासामान्ययोगान्न्यूनपददोषाभावः । एवमन्त्यवाक्येऽपि । कीदृशाः । शुका गर्भे मध्ये येषां तानि च कोटराणि तरुविवराणि तेषां मुखानि तेभ्यो भ्रष्टाः । मुखशब्देन नीवाराणां बाहुल्यम् । संपूर्णविशेषणेन सुपुष्टपक्षित्वेनाश्रममनोज्ञतया राज्ञो रतिर्ध्वन्यते । इदं पूर्वत्रार्थो हेतुः । इङ्गुदी तापसतरुस्तत्फलानि भिन्दन्तीति भिदः । उपलाः पाषाणाः । सूच्यन्ते द्योत्यन्त एवेति सूतशङ्कापनोदः । सूच्यन्त इति कर्मकर्तरि । कीदृशाः । प्रकर्षेण स्निग्धाः । अत्र प्रशब्दः प्रकर्षं द्योतयन्निङ्गुदीफलानां सरसत्वमाचक्षाण आश्रमस्य सौन्दर्यातिशयं द्योतयन्राज्ञस्तत्राभिरतिं ध्वनयति । विश्वासस्योपगमः प्राप्तिस्तस्मात् । उत्पन्नविश्वासा इत्यर्थः । अत एवाभिन्नगतयोऽपरित्यक्तस्वास्थितयो मृगाः शब्दं रथशब्दं सहन्ते । तोयाधारा देवखातादयस्तत्पथास्तन्मार्गाः । 'ऋक्पूरब्धूः—' इत्यस्याप्रत्ययः समासान्तः । वल्कलान्यर्थादार्द्राणि तेषां शिखा अग्राणि तेभ्यो निष्यन्दो जलस्रवणं तेन या रेखास्ताभिरङ्किताश्चिह्निताः । निष्यन्देति 'अनुविपर्यभिनिभ्यः'—इति विकल्पेन षत्वम् । अत्र बहुव्रीहिणैवार्थलाभे यदङ्कितपदं तेन प्रत्यग्रवत्तया सार्द्रत्वेनाश्रयस्य सुन्दरतया राज्ञः प्रीत्यतिशयो ध्वनितः । क्वचिदिति वाक्यचतुष्टये संबध्यते । चकारः पूर्ववाक्यत्रयसमुच्चये ।

१ शुककोटरार्भक०. २ अस्मात्परमिदं पठ्यते कैश्चित्—अपि च ।

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां
नष्टाशंका हरिणशिशवो मन्दमन्दं चरन्ति ॥

पवनेन चपलैः कुल्या अल्पाः कृत्रिमाः सरितस्तासां जलैः शाखिनो वृक्षा धौतानि मूलानि येषां तादृशाः । किसलयरुचां पल्लवकान्तीनां रागो रक्तिमा आज्यधूमोद्गमेन भिन्नः अन्यथाकृतः । संमिश्रो वा । अर्वाग् अग्रत एते च नष्टाशंका वीतभया हारिणाशिशवः छिन्नदर्भाङ्कुरायां भुवि मन्दमन्दं चरन्ति ।

सूतः—सर्वमुपपन्नम्।

राजा—( स्तोकमन्तरं गत्वा। ) तपोवननिवासिनामुपरोधो मा भूत्। एतावत्येव रथं स्थापय यावदवतरामि।

सूतः—धृताः प्रग्रहाः। अवतरत्वायुष्मान्।

राजा—( अवतीर्य। ) सूत विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम। इदं तावद्गृह्यताम्। ( इति सूतस्याभरणानि धनुश्चोपनीयार्पयति। ) सूत यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः।

सूतः—तथा। ( इति निष्क्रान्तः। )

राजा—( परिक्रम्यावलोक्य च। ) इदमाश्रमद्वारम्। यावत्प्रविशामि। ( प्रविश्य। निमित्तं सूचयन्। )

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १५ ॥

---

स्वभावोक्तिः क्रियासमुच्चयालंकारः काव्यलिङ्गं च। वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽपि। तीवेति दन्त्ययोः, स्थु इति तालव्ययोः, कगेति कण्ठ्ययोः, टरेति ष्ठेति मूर्धन्ययोः, स्तेति दन्त्ययोः, रूणेति मूर्धन्ययोः संगतेः। एवमुत्तरचरणेष्वप्यूह्यम्। शार्दूलविक्रीडितं छन्दः ॥ १४ ॥ स्तोकमल्पमन्तरं गत्वा। अवतीर्योपनीय प्रविश्येत्यादीनां कविवाक्यस्थाल्ल्यबन्तानाम् 'राजा वदति' इत्याद्यभ्यूहितकविवाक्यस्थक्रियया सबन्धः। एवमग्रेऽपि बोद्धव्यम्। विनीतेत्यादिना नीतिनामा नाट्यालंकार उक्तः। तल्लक्षणम्—'नीतिः शास्त्रेण वर्तनम्' इति। 'इति सूतस्य' इति कविवाक्यम्। आर्द्रपृष्ठा इत्यनेन तेषां श्रमापनोद उक्तः। 'निमित्तं सूचयन्' इति दक्षिणबाहुस्फुरणं सूचयित्वा। अङ्गस्फुरणेनेत्यर्थः। 'निमित्तं हेतुलक्ष्मणोः' इत्यमरः। शान्तमिति। इदं परिदृश्यमानमाश्रमपदमाश्रमस्थानम्। तात्स्थ्यात्तन्निवासिजनाः। शान्तं शान्ताः शमप्रधानाः। निरीहा इत्यर्थः। अत्यन्तनिरीहत्वं द्योतयितुमचेतनस्य कर्तृत्वं कृतम्। इहाश्रमपदेऽस्य बाहुस्फुरणस्य फलं महार्हवस्तुप्राप्त्यादि कुतः। साकाङ्क्षेभ्यो विश्वामित्रप्रभृतिभ्यः संभवत्यपि। इह तु सुतरामसंभावनीयमित्यर्थः। अथवेत्याक्षेपे। भवितव्यानामवश्यभाव्यानां द्वाराण्युपायाः सर्वत्र भवन्ति। 'द्वारं पुनर्निर्गमनेऽभ्युपाये' इति विश्वः। अर्थान्तरन्यासः। उक्ताक्षेपालंकारः। प्रथमयतौ वृत्त्यनुप्रासः। उत्तरत्र श्रुत्यनुप्रासः। अन्त्यदले भवभवेति वितवन्तीति छेकानुप्रासश्च। अनयार्यया परिकर इति द्वितीयमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः।' इति ॥ १५ ॥

---

१ सूत तपो०. २ यदाज्ञापयत्यायुष्मान्. ३ सूताय. ४ एतन्नास्ति क्वचित्. ५ प्रतीक्ष्याहं निवर्ते. ६ भवेदिहास्य.

( नेपथ्ये । )

इत इतः सख्यौ । ( क )

**राजा**—( कर्णं दत्त्वा । ) अये दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते । यावदत्र गच्छामि । ( परिक्रम्यावलोक्य च । ) अये एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्तन्ते । ( निपुणं निरूप्य । ) अहो मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥ १६ ॥

यावदिमां छायामाश्रित्य प्रतिपालयामि । ( इति विलोकयन्स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

**शकुन्तला**—इत इतः सख्यौ । ( क )

---

( क ) इदो इदो सहीओ ।

---

इत इतः सख्यौ । 'नायिकानां सखीनां च सौरसेनी प्रकीर्तिता ।' इति भरतोक्तेरासां पाठ्या सौरसेनी भाषा । 'सहीओ' इत्यत्र प्रथमम् 'द्विवचनस्य बहुवचनम्' इति सूत्रे औकारस्य जसि जाते 'जश्शसोः' इत्यनुवर्तमाने 'स्त्रियामुदोतौ वा' इति जस ओकारः । 'हः' इत्यनुवर्तमाने 'खघथधभाम्' इति खस्य हः । क्वचित् 'सहा' इति पाठः । स तु विकल्पपक्षे जसो लोपे ज्ञेयः । दक्षिणेन वृक्षवाटिकामिति 'एनपा द्वितीया' इति द्वितीया । स्वप्रमाणानुरूपैरिति स्वशब्देन प्रमाणपदसाहचर्यात्सामर्थ्यं लक्ष्यते । तस्य प्रमाणं मानं तदनुरूपैः । स्वशक्तियोग्यैरित्यर्थः । 'प्रमाणं मानशास्त्रयोः' इति धरणिः । निरूप्य दृष्ट्वा । अहो इति विस्मये । सौन्दर्यातिशयदर्शनेन विस्मयः । दृश्यते यत्तद्दर्शनं स्वरूपम् । 'कृत्यल्युटो बहुलम्' इति ल्युट् । मधुरं प्रियम् । हृदयंगममिति यावत् । 'मधुरं रसवत्स्वादु प्रियेषु' इति विश्वः । शुद्धान्तेति । आश्रमे वस्तुं शीलं यस्य । शीलार्थेन णिनिप्रत्ययेन तादृग्रूपासंभवो द्योत्यते । जनस्य सामान्यजनस्य । 'लोके जगद्भेदे पृथग्जनः' इति हैमः । शुद्धान्तो राजस्त्रियः । तात्स्थ्यादिति क्षीरस्वामी । तासां दुर्लभं इदं प्रत्यक्षतः परिदृश्यमानं जगत्रयैकमोहनं वपुर्यदीति विशेषे प्रस्तुते सामान्यस्योक्तेरप्रस्तुतप्रशंसा । तदा वनलताभिर्गुणैः सौगन्ध्यादिभिरुद्यानलता दूरीकृताः । तिरस्कृता इत्यर्थः । खलु । उद्देश्यप्रतिनिर्देश्यत्वादत्र कथितपददोषाभावः । छेकवृत्त्यनुप्रासौ । निदर्शनालंकारश्च । न दृष्टान्तः । निरपेक्षयोर्वाक्ययोर्बिम्बप्रतिबिम्बभावे दृष्टान्तस्योक्तेः ॥ १६ ॥ प्रतिपालयामि प्रतीक्षे । यथोक्तव्यापारेति । वृक्षसेचनव्यापारवतीत्यर्थः । 'समानाभि-

---

१ तावदेनां तरुच्छायामाश्रित्य विलोकयामि।

अनसूया—हला शकुन्तले त्वत्तोऽपि तातकाश्यपस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवापि त्वमेतेषामालवालपूरणे नियुक्ता । ( क )

शकुन्तला—न केवलं तातनियोग एव । अस्ति मे सोदरस्नेहोऽप्येतेषु । ( इति वृक्षसेचनं रूपयति । ) ( ख )

राजा—कथमियं सा कण्वदुहिता । असाधुदर्शी खलु तत्रभवान्काश्यपो य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ १७ ॥

भवतु । पादपान्तर्हित एव विश्रब्धं तावदेनां पश्यामि । ( इति तथा करोति । )

---

( क ) हला सउन्दले तुवत्तो वि तादकस्संवस्स अस्समरुक्खआ पिअदरे त्ति तक्केमि । जेण णोमालिआकुसुमपेलवा वि तुमं एदाणं आलवालपूरणे णिउत्ता ।

( ख ) ण केअलं तादणिओओ एव्व । अत्थि मे सोदरसिणेहो वि एदेसु ।

---

स्तथा सख्यो हला भाष्याः परस्परम् । ' इति भरतोक्तेर्हलेति प्रयोगः । वृक्षकाः कोऽल्पार्थे । पेलवा कोमला । 'सप्तला नवमालिका' इत्यमरः । त्वमपीत्यपिर्भिन्नक्रमः पेलवापीति योज्यः । 'पेलवं कोमले तनौ' इति शाश्वतः । आलवालं वृक्षमूलस्थितिस्थानम् । 'आलवालं विदुर्धाराधारणं द्रुतोऽम्भसः ।' इति । तातनियोगः पित्राज्ञा । सोदरस्नेहो भ्रातृस्नेहः । वृक्षसेचनं रूपयति । अभिनयतीत्यर्थः । सेति पूर्वं या ऋषिभिरुक्ता । इदमिति । किलेत्यरुचौ । ' किल संभाव्यवार्तयोः । हेत्वरुच्योरलीके च ' इति हैमः । य इदं पुरोदृश्यमानमनुपममव्याजमनोहरं स्वभावसुन्दरं वपुस्तपःक्षमं तपःसमर्थं साधयितुं कर्तुमिच्छति । ध्रुवं निश्चितम् । स ऋषिर्नीलोत्पलपत्रधारा पार्श्वदेशः लक्षणया तैक्ष्ण्यसाम्याच्छिदिक्रियायोग्यत्वं फलम् । तया समिल्लतां छेत्तुं व्यवस्यति प्रयतते । क्वचित् 'शमीलताम्' इति पाठः । तस्या अतिकाठिन्येनोपमेयेऽत्यन्तासंभावनीयत्वं व्यज्यते । अत्र पूर्वार्धे विषमस्यैको भेदो व्यङ्ग्यः—' क्वचिद्यदतिवैधर्म्यान्न श्लेषो घटनामियात् । ' इत्युक्तेः । समस्तवाक्ये निदर्शना । 'अभवन्वस्तुसंबन्ध उपमापरिकल्पकः । निदर्शना ' इत्युक्तेः । श्रुत्यनुप्रासवृत्त्यनुप्रासयोरेकवाचकानुप्रवेशरूपः संकरः । समिल्लतामिति रूपकोपमयोः संदेहसंकरः । साधकबाधकप्रमाणाभावात् छेदस्य न समर्थकत्वमुभयोः साधारण्यात् । ध्रुवमित्युत्प्रेक्षा ।

---

१ सह सखीभ्यां वृ०, नाट्येन सिञ्चति. २ अस्मात्परं-( निर्वर्ण्य सकौतुकम् । ) इत्य०. ३ क्षम. ४ पान्तरितः. ५ विश्वस्ता. ६ अपवार्य स्थितः.

शकुन्तला—सखि अनसूये अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रितास्मि । शिथिलय तावदेतत् । ( क )

अनसूया—तथा । ( इति शिथिलयति । ) ( ख )

प्रियंवदा—( सहासम् । ) अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व । मां किमुपालभसे । ( ग )

राजा—काममननुरूपमस्या वपुषो वल्कलं न पुनरलंकारश्रियं न पुष्यति । कुतः ।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ १८ ॥

( क ) सहि अणसूए अदिपिणद्धेण वक्कलेण पिअंवदाए णिअन्तिद ह्मि । सिढिलेहि दाव णं । ( ख ) तह ।

( ग ) एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह । मं किं उवालंभेसि ।

वाचकत्व इति शब्दाध्याहारापत्तेः । वंशस्थं वृत्तम् । अनेनाभिप्रायरूपं भूषणमुपन्यस्तम् । तल्लक्षणं तु—'अभिप्रायस्तु सादृश्यादभूतार्थप्रकल्पना ।' इति॥ १७॥ पादपान्तर्हितो वृक्षान्तर्हितः । विश्रब्धं विश्वासयुक्तम् । 'समौ विश्रम्भविश्वासौ' इत्यमरः । अतिपिनद्धेनातिबद्धेन । 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ।' इत्यमरः । वल्कलेन वृक्षत्वचा । अत्र नियन्त्रणे । अस्या वयसः काममत्यर्थमननुरूपं वल्कलं पुनरलंकारश्रियं न पुष्यतीति न । अपि तु पुष्यतीत्यर्थः । अनेन शोभातिशयस्यावश्यकत्वं ध्वन्यते । वामनेऽपि 'संभाव्यनिषेधनिवर्तने द्वौ प्रतिषेधौ ।' इति । तत्र हेतुत्वेन पद्यमवतारयति—सरसिजमिति । शैवलेन जलनील्यापि । 'जलनीली तु शैवालं शैवलः' इत्यमरः । विद्धं वेधितम् । 'विद्धः स्याद्वेधिते क्षिप्ते सदृशे' इति हैमः । प्रकृते तदर्थासंभवात्संबद्धत्वं लक्ष्यते । तदतिशयो व्यङ्ग्यः । स एकत्र सातत्यवाचिना अनुना अनूद्यते । अनुध्यायतीतिवत्सातत्ये तस्य प्रयोगात् । सरसिजं कमलं

१ अत्रेदमधिकं पठ्यते केश्चित्—सम्यगियमाह ।
इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥
अथवा काममननुरूपमस्या वपुषः इ०.
[ स्कन्धदेशे उपहितः सूक्ष्मः ग्रन्थिर्यस्य तेन । स्तनयुगलस्य परिणाहो विशालता समाच्छादयतीति तेन वल्कलेन हेतुना पाण्डुपत्रोदरेण पिनद्धं पिहितं कुसुममिव स्वां शोभां न पुष्यति । ] २ वयसः

**शकुन्तला**—( अग्रतोऽवलोक्य । ) एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः। यावदेनं संभावयामि । ( इति परिक्रामति । )(क)

**प्रियंवदा**—हला शकुन्तले अत्रैव तावन्मुहूर्तं तिष्ठ यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति । ( ख )

---

( क ) एसो वादेरिदपल्लवङ्गुलीहिं तुवरेदि विअ मं केसररुक्खओ। जाव णं संभावेमि ।

( ख ) हला सउन्दले एत्थ एव्व दाव मुहुत्तअं चिट्ठ । जाव तुए उवगदाए लदासणाहो विअ अअं केसररुक्खओ पडिभादि ।

---

रम्यम् । अत्र सरसिजस्योद्धृतस्यानुद्धृतस्य वा शैवलेनाविनाभावात्सुग्रूक्तमनुविद्धमिति । अत एव न विशेषणप्रक्रमभङ्गः । हिमांशोश्चन्द्रस्य मलिनं लक्ष्म लक्ष्मीं शोभां तनोति । अर्थाद्धिमांशोरेव । अत्रोपमानस्याकर्तृत्वात्कर्तृप्रक्रमभङ्गः । वाक्यत्रयं पदकदम्बकात्मकं द्वितीयं तु क्रिया कारकान्वितेत्येतद्रूपम् । तेन वाक्यप्रक्रमभङ्गोऽपि । लक्ष्मीं तनोतीत्यत्र सामान्यधर्मस्यार्थत्वेन प्रतीतेरर्थस्य कष्टत्वं चेत्यादिदोषपरिहाराय 'शिशिरकिरणमाली सुन्दरो लक्ष्मणापि' इति पठनीयम् । असत्संवद्धाश्चेन्मञ्जुलाः सत्संवद्धाः किमु वक्तव्या इत्यपिशव्दार्थः । इयं पुरो दृश्यमाना । 'इदमः प्रत्यक्षगतम्' इत्युक्तेः । 'मम लोचनयोः सुधारसकल्लोलिनी त्रिजगत्कन्याललामभूता' इत्याद्यर्थान्तरसंक्रमितवाच्यम् । तन्वीत्युपमेयनिर्देशः । तेनोपमेयनिर्देशेन वाक्ये विशेषणाधिक्यं न शङ्कनीयम् । त्रिष्वपि रम्यत्वे समानेऽप्यत्र तस्याधिक्यमितीदमेव विधेयम् । मधुराणां सुन्दराणामाकृतीनां किमिव हि न मण्डनम् । अपि तु सर्वं हीनमहीनं स्वसंवद्धं चेति सामान्यस्य समर्थकत्वादर्थान्तरन्यासः । मधुरशव्दो रसवाचकः प्रकृते वाधितमुख्यार्थः सन् सर्वविषयरञ्जकत्वमेककार्यकरत्वेन संवन्धेन लक्षयन्स्वातिशयसमभिलाषविषयत्वं नात्राश्चर्यमिति ध्वनयति । अत्र पादत्रये साधारणधर्मस्य रम्यलक्ष्मीविस्तारमनोज्ञपदैरभिधानान्मालाप्रतिवस्तूपमा । वृत्त्यनुप्रासछेकानुप्रासयोः संसृष्टिः । अर्थालङ्कारयोरङ्गाङ्गिभावः संकरः । एवमग्रेऽपि संकरसंसृष्टी उन्नेये । ग्रन्थगौरवभीत्या क्वचिदेव वक्ष्ये । मालिनी वृत्तम् । अनेन माधुर्यं नामायत्नजोऽलंकार उक्तः । तल्लक्षणम्–'सर्वावस्थाविशेषेषु माधुर्यं रमणीयता' इति । अनेन प्रसिद्धिर्नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु–'प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसाधनम् ।' इति ॥ १८ ॥ केसरवृक्षको वकुलवृक्षः । अल्पार्थे कः। इदं चैकदेशविवर्ति रूपकम् । तेन केसरवृक्षस्य वयस्यत्वमपि रूपितं भवति । तेनायमर्थः । यथा कश्चन सखात्यन्तमुत्कण्ठितोऽङ्गुलीचालनेन मित्रं त्वरयति तद्वदिति ।

---



१ यथोक्तं करोति. २ अस्मात्पर–शकु०–किं निमित्तं प्रिय०–जाव. ३ समीवद्विदाए ( समीपस्थितया. )

**शकुन्तला**—अतः खलु प्रियंवदासि त्वम् । ( क )

**राजा**—प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः खलु

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १९ ॥

**अनसूया**—हला शकुन्तले इयं स्वयंवरवधूः सहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृतासि । ( ख )

---

( क ) अदो क्खु पिअंवदा सि तुमं ।

( ख ) हला सउन्दले इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ । णं विसुमरिदा सि ।

---

अत्रैव तावदिति अतः खलु प्रियंवदेत्येताभ्यां प्रियंवदाशकुन्तलावचनाभ्यां निरुक्तमिति भूषणमुपक्षिप्तम् । तल्लक्षणम्—'निरुक्तिर्निरवद्योक्तिर्नामन्यर्थप्रसिद्धये ।' इति । यत्प्रियंवदया लतात्वमारोपितं तत्साधयति—अस्या इति। अधरोऽधरोष्ठः । किसलय इव रागो यस्य स पल्लवाताम्रः । बाहू विटपौ स्कन्धोर्ध्वशाखे तदनुकारिणौ तत्सदृशौ । यत्कात्यः—'स्कन्धादूर्ध्वं तरोः शाखा कटप्रो विटपो मतः ।' इति । कोमलशब्देनाग्रजत्वं तयोर्व्यज्यते । अङ्गेषु संनद्धं संनाहं प्रापितम् । अत्युत्कटमिति यावत् । अत्राङ्गेष्विति बहुवचनेन वदने कान्तिमत्ता नयनयोस्तरलता कण्ठे कम्बुत्रिरेखावत्त्वं वक्षसि स्तनोज्जृम्भणं नाभौ गभीरता नितम्बे मध्यनिम्नत्वं उभयभागे चतुरस्रत्वं जघनजङ्घाजानुमण्डलोरुदेशानां मांसलत्वं गतौ सविलासत्वमित्यादि ध्वनितम् । संनद्धशब्दः प्रकृते बाधितमुख्यार्थः सन् यः संनद्धो भवत्युत्साहेन प्रकटो भवतीति प्राकट्यसंबन्धेन यौवनं लक्षयंस्तद्गतमतिशयं व्यनक्ति । यौवनं कुसुममिव लोभनीयं चित्ताकर्षकम्। कुसुममिति जात्येकवचनम् । अङ्गेषु संनद्धमित्यत्रापि योजनीयम् । लताङ्गेषु संनद्धमित्यर्थः । हस्तादिस्पृष्टस्य मलिनत्वादिसंभवात् । एवमनुच्छिष्टयौवनत्वेन कन्यात्वं ध्वनयता स्वयोग्यता ध्वनितम् । ततश्च वक्ष्यमाणोदयस्याङ्कुरत्वे पर्यवसानम् । समासगा आर्थी समासगा गौणी पूर्णा श्रौतीत्युपमानां संसृष्टिः । 'सप्तम्युपमानपूर्वस्योत्तरपदलोपश्च ।' इत्यनेन वार्तिकेन समासः । बहुव्रीहेरुपमाद्योतकत्वम् । अचेतनानुकारः कर्तुं न शक्यत इति सादृश्यं लक्ष्यम् । अतो गौणी । इयं च महता युक्तिसंदर्भेणोपमाप्रपञ्चे मया निरूपिता । इवादिसद्भावात्तृतीया पूर्णा श्रौती । 'बाहू मृदुलविटपाविव प्रतनू' इति पठितृणोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहरणीयः । अनेन पदोच्चयमिति भूषणमुपक्षिप्तम् तल्लक्षणं तु—'संबद्धार्थानुरूपो यः पदौघः स पदोच्चयः' इति ॥ १९ ॥



---

१ लोकनीयम्. २ तुमं पिअं०. ३ तुए किदायंवाहस्स सह०.

शकुन्तला—तदात्मानमपि विस्मरिष्यामि । (लतामुपेत्यावलोक्य च ।) हला रमणीये खलु काल एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः। नवकुसुमयौवना वनज्योत्स्ना स्निग्धपल्लवतयोपभोगक्षमः सहकारः। (इति पश्यन्ती तिष्ठति ।) (क)

प्रियंवदा—अनसूये जानासि किं शकुन्तला वनज्योत्स्नामतिमात्रं पश्यतीति । (ख)

अनसूया—न खलु विभावयामि । कथय । (ग)

प्रियंवदा—यथा वनज्योत्स्नानुरूपेण पादपेन संगता अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति । (घ)

शकुन्तला—एष नूनं तवात्मगतो मनोरथः । (इति कलशमावर्जयति ।) (ङ)

राजा—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् । अथ वा कृतं संदेहेन ।

---

(क) तदा अत्ताणं वि विसुमरिस्सं । हला रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स वेइअरो संवुत्तो । णवकुसुमजोव्वणा वणजोसिणी सिणिद्धपल्लवदाए उवभोअक्खमो सहआरो ।

(ख) अणसूए जाणासि किं सउन्दला वणजोसिणिं अदिमेत्तं पेक्खदित्ति ।

(ग) ण क्खु विभावेमि । कहेहि ।

(घ) जह वणजोसिणी अणुरूवेण पाअवेण संगदा अवि णाम एव्वं अहं वि अत्तणो अणुरूवं वरं लहेअंत्ति । (ङ) एसो णूणं तुह अत्तगदो मणोरहो ।

---

व्यतिकरः संश्लेषः । नवकुसुमयौवना नवानि प्रथमोद्गतानि कुसुमानि तान्येव यौवनं यस्याः सा वनज्योत्स्ना । स्निग्धपल्लवतयोपभोगक्षमः सहकारः । नवं कुसुमं रजोदर्शनं च यस्याः सा । स्निग्धश्चासौ पल्लवो विटपश्च । तत्त्वेनेति नायकव्यवहारारोपात्समासोक्तिः । इति पश्यन्ती तिष्ठतीति कविवाक्यम् । अपि नामेति संभावनायाम् । एवमहमप्यात्मनोऽनुरूपं वरं लभेयेति । 'राजा–कथमियम्' इत्याद्येतदन्तेन विलोभनं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु–'गुणानां वर्णनं तज्ज्ञैर्विलोभनमितीरितम् ।' इति । अपि नामेति संभावनायाम् । असवर्णमसमानं क्षत्रियादि क्षेत्रं कलत्रं तत्संभवा तत उत्पन्ना । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । [अथवेति पक्षान्तरे । ] कृतमित्यलमर्थे अव्ययम् । 'तद्योगे वारणार्थयोगे तृतीया' । संदेहेनालमित्यर्थः । 'कृतमिति



१ क्षेत्रजा भवेत्. २ अण्णोण्णं वइ०. ३ अवि जा० किंणिमित्त.

असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥ २० ॥

तथापि तत्त्वत एनामुपलप्स्ये ।

शकुन्तला—( ससंभ्रमम् । ) अम्मो ! सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते । ( इति भ्रमरबाधां रूपयति । )(क)

राजा—( सस्पृहम् । )

---

(क) अम्मो । सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ ।

---

निषेधनिवारणयोः ' इति वर्धमानः । तदेव वंशस्थेन द्रढयति—असंशयमिति । क्षत्रं क्षत्रियस्तस्य परिग्रहः स्त्रीत्वेनाङ्गीकारस्तत्क्षमा तत्समर्था । ' क्षत्रं क्षत्रियराजन्यौ ' इति नाममाला । ' परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः । इति विश्वः । अत्र मत्परिग्रहक्षमेति वक्तव्ये क्षत्रेति सामान्योक्तेरप्रस्तुतप्रशंसा । तया च नायकगतमौचित्यं ध्वनितम् । यद्यस्मादार्यं श्रेष्ठं मे मम जितेन्द्रियस्य पुरुवंशोत्पन्नस्य दुष्यन्तस्येत्यर्थान्तरसंक्रमितवाच्यम् । मनोऽस्यां स्त्रीसृष्टिरत्नभूतायामभिलाष्यभिलाषयुक्तम् । हि यस्मात्सतां संदेहपदेषु संदेहस्थानेष्वन्तःकरणस्य प्रवृत्तयो वर्तनानि प्रमाणम् । ' पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु । ' इत्यमरः । तेन पुनरुक्तवदाभासो नामालंकारः । अर्थान्तरन्यासकाव्यलिङ्गानुप्रासाः ॥ २० ॥ अनेन परिन्यास इत्यङ्गमुपक्षिप्तम् । तल्लक्षणं तु—तन्निष्पत्तेस्तु कथनं परिन्यासं प्रचक्षते । ' इति । यद्यपि मम हृदये विश्वासस्तथापि व्यवहारार्थं तत्त्वत एनामुपलप्स्ये ज्ञास्यामि । ससंभ्रमं सभयम् । भयहेतुश्च वक्ष्यमाणः । अम्मो आश्चर्ये । ' अव्ययम् ' इत्यधिकारे ' अम्मो आश्चर्ये ' इति सूत्रम् । वदनमभिवर्तते वदनं लक्ष्यीकृत्यागच्छतीत्यर्थः । अनेन पद्मिनीत्वमुक्तमस्याः । यदाहुः ' कमलमुकुलमृद्वी फुल्लराजीवगन्धा सुरतपयसि यस्याः सौरभं दिव्यमङ्गे । ' इति । भ्रमरबाधां रूपयति अभिनयतीत्यर्थः । स चाभिनयो विधुतेन शिरसा कम्पितेनाधरेण मुखदेशास्थितेन पराङ्मुखतलेन चञ्चलेन पताकेनेति । तल्लक्षणानि—' तिर्यग्गतं द्रुततरं विधुतं तत्प्रयुज्यते । शीतार्ते ज्वरिते भीते ' इति । ' व्यथायां कम्पितोऽन्वर्थो भीतौ

---

१ नाटयति. २ अस्य स्थाने इदमुपलभ्यते क्वचित्—( सस्पृहमवलोक्य । )
साधु बाधनमपि—साध्वसाराधनमपि—रमणीयमस्याः ।
यतो यतो षट्चरणोऽभिवर्तते ततस्ततः प्रेरि( षि )तलोललोचना ।
विवर्तितभ्रूरिय ( लत ) मद्य शिक्षते भयादकामापि हि दृष्टिविभ्रमम् ॥
[ षट्चरणो भ्रमरः । प्रेरिते लोले लोचने यया । विवर्तिते भ्रूवौ यया सा तथोक्ता । अकामा अनिच्छन्ती अपि अद्य दृष्टिविभ्रमं शिक्षते । ] अपिच । ( सासूयमिव । ).
३ संभ्रमात्.

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती ॥ २१ ॥

---

शीते जये रुषि । ' इति । ' तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठको भवेत् । पताकः संहता-
कारः प्रसारिततलाङ्गुलिः ॥ ' इति ॥ **चलापाङ्गामिति** । हे मधुकर वयं कथमे-
तदीयकटाक्षगोचरा भूयास्म कथमेषास्मदभिप्रायव्यञ्जकं रहोवचनमाकर्णयेत् कथं नु
हठादनिच्छन्त्या अपि परिचुम्बनं विधेयास्मेति यदस्माकं मनो राज्यपदवीमधिशेते
-ते वयम् । तत्त्वान्वेषाद्वस्तुवृत्तान्वेषणया हताः । निरुद्धप्रवृत्तय इत्यर्थः । आयास-
मात्रपात्रीभूता इति भावः । ' मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः । ' इत्यमरः ।
त्वमित्येकवचनेनास्य निकृष्टत्वम् । अतएव मधुकरेति संबुद्धिः । कृती । कृतबहुकृत्य
इत्यर्थः । ' भूमार्थे इनिः ' । खल्विति निपातेनायत्नसिद्धं तव चरितार्थत्वमिति
ध्वन्यते । तत्कथमित्याह—चलेति । चलापाङ्गामित्यनुवाद्यविशेषणम् । वेपथुमतीं
त्वदाशङ्काकातराम् । दृशं नीलोत्पलधिया पुनः स्पृशसि । रहस्यमाख्यातुं शीलं यस्य
स इव कर्णान्तिकचरः श्रवणसमीपगो मृदु ध्वनसि । श्रवणावकाशपर्यन्तत्वाच्च
नीलोत्पलाशङ्कानपगमाच्च तत्रैव दन्ध्वन्यमान आस्से । करौ व्याधुन्वत्याः सहज-
सौकुमार्यत्रासकातरायाश्च रतिनिधानभूतं विकसितारविन्दकुवलयामोदमधुरबन्धूक-
बन्धुरमधरं पिबसीति प्राञ्चः । अधुनातनास्तु चलापाङ्गं दृष्ट इत्यनुवाद्यविशेषणं
वाक्यत्रयशेषभूतम् । एवमन्तिकचर इत्यपि । तत्र यतोऽन्तिकचरस्ततश्चलापाङ्गं
दृष्ट इति हेतुहेतुमद्भावशेषभूतत्वादेव नावृत्तिः । यतो दृष्टस्ततः स्पृशसि स्वनसीति
योज्यम् । ' कर्णान्तिक–' इत्यादिपाठे ' चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा
हरिः सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता । ' इत्यादिवदभवन्मतयोगः
स्यात् । न च स्पृशसीत्यनेनैव नैकट्ये लब्धे प्रथमवाक्यस्य नोपयोग इति वाच्यम् ।
एवं कर्णे इत्यत्रापि सामीप्याधिकरणेनैव गतार्थत्वात्तत्रापि । एवमुत्तरत्रापीत्यवक-
रतैव स्यात् । तेन तदुक्तिः स्वभावोक्तिपोषायैवेत्यवधेयम् । अत एव कर्णे इत्येक-
वचनम् । यदा यदपाङ्गेन पश्यति तदा तत्रेन्दीवरभ्रान्त्येष्टलाभेन स्वनति । वेपथुमतीं
कम्पमानाम् । भयस्वभावात्तादृक्त्वम् । कर्णे मृदु यथा स्यात्तथा स्वनसीति स्वभा-
वोक्तिरेव । तत्र रहस्याख्यायीवेत्युत्प्रेक्षा समारोपसाधिकैव । तया कपोले
चुम्बनविशेषो व्यज्यते । कामिनोऽपि रहस्याख्यानं व्याजश्चुम्बनमेव प्रधानम् ।
' करौ व्याधुन्वत्याः ' इति विशेषणं पूर्वत्र समानमपि चुम्बने यत्करधूननं
तत्स्फोरणार्थमौचित्येनात्र कविना निबद्धम् । अत एव विविधमासमन्तादित्युपसर्ग-



१ चलापाङ्गं दृष्टः. २ कर्णे.

**शकुन्तला**—न एष धृष्टो विरमति । अन्यतो गमिष्यामि । कथमितोऽप्यागच्छति । हला परित्रायेथां मामनेन दुर्विनीतेन मधुकरेणाभिभूयमानाम् । ( क )

**उभे**—( सस्मितम् । ) के आवां परित्रातुम् । दुष्यन्तमाक्रन्द । राजरक्षितव्यानि तपोवनानि नाम । ( ख )

**राजा**—अवसरोऽयमात्मानं प्रकाशयितुम् । न भेतव्यं न भेतव्यम्—( इत्यर्धोक्ते । स्वगतम् । ) राजभावस्त्वभिज्ञातो भवेत् । भवतु । एवं तावदभिधास्ये ।

**शकुन्तला**—( पदान्तरे स्थित्वा । सदृष्टिक्षेपम् । ) कथमितोऽपि मामनुसरति । ( ग )

---

( क ) ण एसो धिट्ठो विरमदि । अण्णदो गमिस्सं । कहं इदो वि आअच्छदि । हला परित्ताअह मं इमिणा दुव्विणीदेण महुअरेण अहिहूअमाणं ।

( ख ) काओ वअं परित्तादुं । दुस्सन्दं अक्कन्द । राअरक्खिदव्वाइं तवोवणाइं णाम । ( ग ) कहं इदोवि मं अणुसरदि ।

---

द्वयनिबन्धः । चुम्बने तु ‘ करौ धुनाना नवपल्लवाकृती ’ इतिवत्कामशास्त्रे केवलस्यैव प्रयोग उक्तः । इदमेव बहुत्वे बीजमित्यवधेयम् । ‘ विशेषणादेव विशेष्यप्रतिपत्तिः ’ इति संबन्धिबोधः । तस्याः रतिसर्वस्वं संभोगनिधानम् । विधानत्वं च प्रथमतः प्राप्यत्वेन । तेनैव तन्निर्वाहात् । ‘ आदौ रतं बाह्यमिह प्रयोज्यं तत्रापि चालिङ्गनपूर्वमेव । ’ इत्युक्तेरालिङ्गनचुम्बनयोः पूर्वत्वम् । अनेन नायकाभिप्रायो व्यज्यते । अधरं न तूत्तरोष्ठं पूर्वोक्तविशेषणस्य तत्रैव संभवात् । तत्रैवास्य कविभिरङ्गीकारात् । पिबसि सादरमवलोकयसीति भ्रमरपक्षे । अन्यथा तेन दंश एव क्रियेतेत्युक्तमेव प्राक् । आरोपपक्षे चुम्बसीति श्लेषः । वयं हतास्त्वं कृतीति व्यतिरेकः । नीलोत्पलादिभ्रान्त्या भ्रान्तिमान् । भ्रमरस्वभावोक्तिः । त्वं कृतीत्यत्र चरणत्रयं हेतुत्वेनोपात्तमिति काव्यलिङ्गम् । आद्यवाक्यद्वये रशनाकाव्यलिङ्गमपि । श्रुत्यनुप्रासश्च । शिखरिणी वृत्तम् । यद्यपि हता इत्युक्तं तथाप्यभिलाषचाटुकप्रवणत्वेन तत्सुखागमस्य भावात्प्राप्तिरित्यङ्गमुपक्षिप्तम् । यतो धनिकेनोक्तम्—‘ साक्षात्पारंपर्येण वा विधेयानि ’ इति । तल्लक्षणं तु—‘सुखार्थस्योपगमनं प्राप्तिरित्यभिधीयते । ’ इति ॥ २१ ॥ पदान्तरे स्थानान्तरे । राजरक्षितव्यानि तपोवनानि । नामेति प्रसिद्धौ । स्वगतमिति । ‘ अश्राव्यं स्वगतं ’ इति तल्लक्षणात् । राजभावो राजत्वम् ।

---

१ भावस्तावत्; एवं हि राजाहमस्मीति परिज्ञातं भविष्यति । भवतु । अतिथिसमाचारमेव–समुचिताचारसत्कारम्–अवलम्बिष्ये. २ दुट्ठो. ३ परित्ताअह परित्ताअह. ४ दुह्मद्द०. ५ परिहू०.

राजा—( सत्वरमुपसृत्य । )

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २२ ॥

( सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः । )

अनसूया—आर्य न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता । ( इति शकुन्तलां दर्शयति । ) ( क )

राजा—( शकुन्तलाभिमुखो भूत्वा । ) अपि तपो वर्धते ।

( शकुन्तला साध्वसादवचना तिष्ठति । )

अनसूया—इदानीमतिथिविशेषलाभेन । हला शकुन्तले गच्छोटजम् । फलमिश्रमर्घमुपहर । इदं पादोदकं भविष्यति । ( ख )

राजा—भवतीनां सूनृतयैव गिरा कृतमातिथ्यम् ।

प्रियंवदा—तेन ह्यस्यां प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः । ( ग )

( क ) अज्ज ण क्खु किं वि अच्चाहिदं । इअं णो पिअसही महुअरेण अहिहूअमाणा कादरीभूदा । ( ख ) दाणिं अदिहिविसेसलाहेण । हला सउन्दले गच्छ उडअं । फलमिस्सं अग्घं उवहर । इदं पादोदअं भविस्सदि । ( ग ) तेण हि इमस्सिं पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उववेसिअ परिस्समविणोदं करेदु अज्जो ।

क इति । दुर्विनीतानामविनीतानां दुष्टानां शासितरि दण्डादिना शिक्षके पौरवे पुरुवंशोत्पन्ने । वसुमतीं भूमिं च । अथ च वसुमतीमिति रक्षायोग्यत्वं ध्वनितम् । शासति सति । कोऽयमिति क्रोधेनोक्तिः । मुग्धास्वचतुरासु तपस्विकन्यास्वविनयमाचरति । तपस्विशब्देनात्यन्तासंभाव्याविनयस्थानत्वं व्यज्यते । अत्र भ्रमर इति मयि दुष्यन्त इति शकुन्तलायां चेति विशेषे प्रस्तुते कोऽयमित्यादेः सामान्यस्योक्तेरप्रस्तुतप्रशंसा । अनया चैतत्प्रतापस्य व्यापकत्वं व्यञ्जयन्त्या तस्य राजभावगोपनं ध्वनितम् । छेकवृत्त्यनुप्रासौ । अनेन दण्डलक्षणं संध्यङ्गान्तरमुपक्षिप्तम् । तल्लक्षणं तु सुधाकरे—'दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जनम् ।' इति ॥ २२ ॥ अत्याहितम् । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च ।' इत्यमरः । साध्वसादवचना तिष्ठतीति कविवचनम् । इदानीमतिथिविशेषलाभेन । [ अतिथीन विशेषः उत्तमः तस्य भवतो लाभेनेत्यर्थः । ] अनेनानुवृत्तिनामा नाट्यालंकार उपक्षिप्तः । तल्लक्षणं तु—'प्रश्रयादनुवर्तनम् । अनुवृत्तिः' इति । गच्छोटजम् । 'मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ' इत्यमरः । सूनृतया सत्यया प्रियया च । 'सूनृतं तु प्रिये सत्ये ' इत्यमरः । परिश्रमस्य विनोदं प्रशमम् । अनेन कर्मणा वृक्षसेचनेन आतमगतं स्वान्तमित्यस्य पर्यायः । किं तु खल्विति जिज्ञासायाम् । 'खलु वीप्सा-



१ आउलीकिअमाणा.

**राजा**—नूनं यूयमप्यनेन कर्मणा परिश्रान्ताः ।

**अनसूया**—हला शकुन्तले उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः । ( इति सर्वे उपविशन्ति । ) ( क )

**शकुन्तला**—( आत्मगतम् । ) किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता । ( ख )

**राजा**—( सर्वा विलोक्य । ) अहो समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

**प्रियंवदा**—( जनान्तिकम् । ) अनसूये को नु खल्वेष चतुरगम्भीराकृतिर्मधुरं प्रियमालपन्प्रभाववानिव लक्ष्यते । ( ग )

**अनसूया**—सखि ममाप्यस्ति कौतूहलम् । पृच्छामि तावदेनम् । ( प्रकाशम् । ) आर्यस्य मधुरालापजनितो विस्रम्भो मां मन्त्रयते कतम आर्येण राजर्षिवंशोऽलंक्रियते कतमो वा विरहपर्युत्सुकजनः कृतो देशः किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः । (घ)

---

(क) हला सउन्दले उइदं णो पज्जुवासणं अदिहिणं । एत्थ उवविसह्म । (ख) किं णु क्खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीअह्मि संवुत्ता । (ग) अणसूए को णु क्खु एसो चेउरगम्भीराकिदी मेहुरं पिअं आलवन्तो पहाववन्दो विअ लक्खीअदि । (घ) सहि मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं । अज्जस्स महुरालावजणिदो वीसम्भो मंमन्तावेदि कदमो अज्जेण राएसिवंसो अलंकरीअदि कदमो वा विरहपज्जुस्सुअजणो किंदो देसो किंणिमित्तं वा सुउमारदरो वि तवोवणगमणपरिस्समस्स अत्ता पंदं उवणीदो ।

---

निषेधयोः । जिज्ञासायामनुनये वाक्यालंकरणेऽपि च ॥' इति हैमः । तपोवनविरोधिनो विकारस्य [ आश्रमवासिजनानुचितस्य चेतोविकृतेः ] गमनीया विषयभूतास्मि संवृत्ता । अनेनास्या भावो नामाङ्गजो विकार उक्तः । तल्लक्षणं यथा—'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ।' इति । जनान्तिकमिति । तल्लक्षणं दशरूपके—'त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥' इति । त्रिपताककरलक्षणं संगीतरत्नाकरे पताकलक्षणमुक्त्वा—'स एव त्रिपताकः स्याद्वक्रितानामिकाङ्गुलिः ।' इति । चतुरा [ मनोज्ञा ] गम्भीराकृतिर्यस्य सः । चतुरं प्रियमालपन्प्रभाववानिव लक्ष्यते । प्रभावः

---

१ समान. २ महुर. ३ चउरं. ४ विस्सासो. ५ पत्तदं. ( पात्रतां ).

शकुन्तला—( आत्मगतम्। ) हृदय मोत्ताम्य । एषा त्वया चिन्तितान्यनसूया मन्त्रयते । ( क )

राजा—( आत्मगतम्। ) कथमिदानीमात्मानं निवेदयामि कथं वात्मापहारं करोमि । भवतु । एवं तावदेनां वक्ष्ये । ( प्रकाशम् । ) भवति यः पौरवेण राज्ञा धर्माधिकारे नियुक्तः सोऽहमविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

अनसूया—सनाथा इदानीं धर्मचारिणः । ( ख )

( शकुन्तला शृङ्गारलज्जां रूपयति । )

सख्यौ—( उभयोराकारं विदित्वा । जनान्तिकम् । ) हला शकुन्तले यद्यत्राद्य तातः संनिहितो भवेत् । ( ग )

शकुन्तला—ततः किं भवेत् । ( घ )

( क ) हिअअ मा उत्तम्म । एसा तुए चिन्तिदाइं अणसूआ मन्तेदि ।
( ख ) सणाहा दाणिं धम्मआरिणो ।
( ग ) हला सउन्दले जइ एत्थ अज्ज तादो संणिहिदो भवे ।
( घ ) तदो किं भवे ।

सामर्थ्यम् । प्रकाशमिति । तल्लक्षणं तु—'सर्वश्राव्यं प्रकाशं स्यात्' इति । विस्रम्भो विश्वासो मां मन्त्रयत इति स्वौद्धत्यपरिहारः । कतम आर्येण राजवंशोलंक्रियते । कस्मिन्नभिजने वंशालंकारस्य ते जनिरजनीत्यर्थः । कतमो वा विरहेण स्ववियोगेन पर्युत्सुक उत्कंठितो जनो यत्र स देशः कृतः । कस्माद्देशादागतोऽसीत्यर्थः । एतद्भङ्ग्योक्तिस्तु सकलगुणानुरागं ध्वनति । तपोवनगमनपरिश्रमस्यात्मा पदं स्थानमुपनीतः प्रापितः । तपोवनपदेन नात्यधिकप्रयोजनत्वं सूचयति । अत एव परिश्रमपदम् । फलान्तराभावात्परिश्रममात्रमिति भावः । एषा कर्त्री त्वया चिन्तितानि कर्मभूतान्यनसूया मन्त्रयते वदति । अनेन हावलक्षणो विकार उक्तः—'भावादीषत्प्रकाशो यः स हाव इति कथ्यते ।' इति । भवतीति संबुद्धिः । पौरवेण राज्ञा दुष्यन्तेन । धर्मेऽधिकारस्तत्र । अथ च पुरुवंशोत्पन्नेन राज्ञा दुष्यन्तपित्रा । धर्माधिकारे राज्ये । अन०—सनाथा इदानीं धर्मचारिणः । वयमिति विशेषे वक्तव्ये धर्मचारिण इति सामान्योक्तेरप्रस्तुतप्रशंसा । तया च सर्वेषां तपस्विनां सनाथत्वं व्यञ्जयन्त्येकदेशागमनस्य सर्वदेशगमनव्याप्तिं सूचयन्त्यासंबन्धे संबन्धरूपातिशयोक्तिर्ध्वनिता । शृङ्गारलज्जां रूपयतीति अभिनयति शिरसा लज्जितया दृशा च । अनेन हेलालक्षणोऽङ्गजो

१ माश्रमिणाम०. २ चिन्तिदं,–दाणिं.

सख्यौ—इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति । ( क )

शकुन्तला—युवामपेतम् । किमपि हृदये कृत्वा मन्त्रयेथे । न युवयोर्वचनं श्रोष्यामि । ( ख )

राजा—वयमपि तावद्भवत्योः सखीगतं किंमपि पृच्छामः ।

सख्यौ—आर्य अनुग्रह इवेयमभ्यर्थना । ( ग )

राजा—भगवान्काश्यपः शाश्वते ब्रह्मणि स्थित इति प्रकाशः । इयं च वः सखी तदात्मजेति कथमेतत् ।

अनसूया—शृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः । ( घ )

राजा—अस्ति । श्रूयते ।

अनसूया—तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तातकाश्यपोऽस्याः पिता । ( ङ )

---

( क ) इमं जीविदसव्वस्सेण वि अदिहिविसेसं किदत्थं करिस्सदि ।

( ख ) तुह्मे अवेध । किं वि हिअए करिअ मन्तेध । ण वो वअणं सुणिस्सं ।

( ग ) अज्ज अणुग्गहो विअ इअं अब्भत्थणा ।

( घ ) सुणादु अज्जो । अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी ।

( ङ ) तं णो पिअसहीए पहवं अवगच्छ । उज्झिआए सरीरसंवड्ढणादिहिं तादकस्सवो से पिदा ।

---

विकार उक्तः । तल्लक्षणं तु—‘ हेलात्यन्तसमालक्ष्यविकारः स्यात्स एव तु । ’ इति । अत एवोभयोराकारं विदित्वेति परस्परास्निग्धावलोकनेन । करिष्यति कुर्यादित्यर्थः । अत्र जीवितसर्वस्वशब्देन विषयनिगरणाच्छकुन्तलाया उक्तेः पताकास्थानकमनेनोक्तम् । तल्लक्षणमादिभरते ‘ सहसैवार्थसंपत्तिर्नायकस्योपकारिका । पताकास्थानकं संधौ प्रथमे तन्मतम् ’ इति । न युवयोर्वचनं श्रोष्यामि । ‘ राजा—आत्मगतम् ’ इत्यादिनैतदन्तेनोदाहरणं नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—‘ वाक्यं यद्गूढतुल्यार्थं तदुदाहरणं मतम् ’ इति । सखीगतं सखीसंबद्धम् । शाश्वते नित्ये । [ ब्रह्मणि ब्रह्मचर्ये । ] प्रकाशोऽतिप्रसिद्धः । ‘ प्रकाशोऽतिप्रसिद्धे स्यात् ’ इत्यमरः । कौशिक इति गोत्रेण नामधेयं यस्य सः । प्रभवमुत्पत्तिस्थानम् ।

---

१ भवत्योः. २ किंचिद्. ३ वर्तते. ४ वां. ५ अस्य स्थाने—‘तत्रभवान् कौशिकः’ इति वङ्गदेशपुस्तकस्थः पाठः. ६ ( सरोषं ) तदो ७ एवं.

राजा—उज्झितशब्देन जनितं मे कौतूहलम् । आ मूलाच्छ्रोतुमिच्छामि ।

अनसूया—शृणोत्वार्यः । गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नामाप्सराः प्रेषिता नियमविघ्नकारिणी । (क)

राजा—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

अनसूया—ततो वसन्तोदार (°न्तावतार°) समये तस्या उन्मादयितृ रूपं प्रेक्ष्य—(इत्यर्धोक्ते लज्जया विरमति ।) (ख)

राजा—परस्ताज्ज्ञायत एव । सर्वथाप्सरःसंभवैषा ।

अनसूया—अथ किम् । (ग)

राजा—उपपद्यते ।

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २२ ॥

(क) सुणादु अज्जो । गोदमीतीरे पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किंवि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा पेसिदा णिअमविग्घकारिणी । (ख) तदो वसन्तोदारसमए से उम्मादइत्तिअं रूवं पेक्खिअ । (ग) अह इं ।

मेनका नामाप्सराः । 'आपः सुमनसो वर्षा अप्सराः सिकताः समाः । एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्' । इत्युक्तेरेकवचनान्तोऽप्सरःशब्दः । तत उदारवसन्तसमये । प्राकृते पूर्वनिपातानियमः । [वसन्तावतार इति वा संस्कृतम् । ] तस्या उन्मादयितृ रूपं प्रेक्ष्य । 'राजा—परस्ताज्ज्ञायत एव' इत्यनेनानुक्तसिद्धिरिति । उपपद्यते युज्यते । मानुषीष्विति । मनोरपत्यानि स्त्रियो मानुष्यस्तासु । 'मनोर्जातावञ्यतौ षुक् च' इत्यञ्षुकौ । ततः 'टिड्ढाणञ्—' इति ङीप् । एतेनासां पृथिव्यंशाधिक्यं ध्वनितम् । एतच्च संभवः कथं वा स्याददः प्रति हेतुत्वेन योज्यम् । रूपं विद्यतेऽस्मिन्नस्य वा । मत्वर्थो योऽर्शआदिभ्योऽच् । तेन रूपवत इत्यर्थः । अन्यथास्येत्यनेनार्थपौनरुक्त्यं स्यात् । रूपशब्दो लावण्यादीनामुपलक्षणम् । ते च 'यौवनं रूपलावण्ये सौन्दर्यमभिरूपता । मार्दवम्' इति । अत एव प्रभातरलमित्युपमानेन विशेषणाधिक्यं सौकुमार्यं चेत्यालम्बनगुणा मता इत्युक्तिः । तन्मध्ये प्रथमं यौवनस्य प्रत्यक्षतः परिदृश्यमानत्वात्तद्वदिहापीतरेषां ग्रहणं रूपशब्देन । संभव उत्पत्तिः । कथं वा स्यात् । अपि तु न स्यादेव । कथं वेति निपातसमुदायो निषेधे । अत्र विशेषे



१ पुरस्तात्. २ गम्यते. ३ हेदुअं (°हेतुकं).

( शकुन्तलाधोमुखी तिष्ठति । )

**राजा**—( आत्मगतम् । ) लब्धावकाशो मे मनोरथः । किं तु सख्या परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

**प्रियंवदा**—( सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा । ) पुनरपि वक्तुकाम इवार्यः । ( क )

( शकुन्तला सखीमङ्गुल्या तर्जयति । )

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

**प्रियंवदा**—अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम । ( ख )

**राजा**—इति सखीं ते ज्ञातुमिच्छामि ।

---

( क ) पुणो वि वत्तुकामो विअ अज्जो ।
( ख ) अलं विआरिअ । अणिअंन्तणाणुओओ तवस्सिअणो णाम ।

---

प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । क मानुष्यः केदं रूपमिति सामान्यतः प्रतीतम् । उपमालङ्कारस्यैको भेदो व्यङ्ग्यः । कीदृगित्याह—नेति । प्रभया दीप्त्या तरलमुज्ज्वलं भासुरम् । 'तरलश्चञ्चले षिड्गे हारमध्यमणावपि । भासुरे च' इति विश्वः । ज्योतिश्चन्द्रादि । वसुधातलाद्भूस्वरूपान्नोदेति । न प्रकटीभवतीत्यर्थः । अत्र भूस्वरूपस्य ज्योतिषश्च जन्यजनकभावाभावात्सत उत्पत्तिमङ्गीकृत्य विश्लेषमात्रे पञ्चमी प्रयुक्तेत्यवधेयम् । प्रकृते प्रत्यक्षेण दृश्यमानत्वात् । संभावनायां लिङ् । उपमानवाक्ये प्रसिद्धत्वान्निषेधोक्तिः श्रुतिवृत्त्यनुप्रासौ । संभवः कथं वा स्यान्नोदेतीति च सामान्यधर्मस्य शब्दान्तरेणोक्तेरतिशयोक्तिमूला प्रतिवस्तूपमा । अन्ये तु मानुषीणां प्रतिबिम्बत्वेन वसुधाया उपात्तत्वात्संभवस्य चोदयः प्रतिबिम्बत्वेनोपात्त इति दृष्टान्तमाहुः । वस्तुतस्त्वयमेवोचितः । यतः पूर्वत्रालङ्कार आद्यभागे व्यङ्ग्यवाच्ययोः प्रतिवस्तुत्वमुत्तरत्र वाच्यलक्ष्ययोरिति । अनेन निदर्शनं नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् । परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥' इति ॥ २३ ॥ अधोमुखी तिष्ठतीति स्वस्तुत्याकर्णनेन । तेनोत्तमत्वं ध्वनितम् । अथ च शृङ्गारलज्जाख्यो व्यभिचारी ध्वनितः उभयानुभावत्वादधोमुखस्य । प्रियं०—अनियन्त्रणानुयोगोऽप्रतिबन्धप्रश्नः [ सकलप्रश्नार्ह इत्यर्थः । ] 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । 'णिओओ' इति पाठे नियोग आज्ञा । इति सखीं ते ज्ञातुमिच्छामि ।



---

१ द्वैत०, द्वैधीभावम्. २ ०न्तणानिओओ.

वैखानसं किमनया व्रतमाप्रदाना-
 द्व्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमात्मसदृशेक्षणवल्लभाभि-
 राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २४ ॥

प्रियंवदा—आर्य धर्मचरणेऽपि परवशोऽयं जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः । (क)

राजा—( आत्मगतम् । ) न[२] दुरवापेयं खलु प्रार्थना ।
 भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः ।
 आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २५ ॥

(क) अज्ज धम्मचरणे वि परवसो अअं जणो । गुरुणो उण से अणुरूववरप्पदाणे संकप्पो ।

इतीति किम् । वैखानसमिति । वैखानसं तपस्विसंबन्धि तपोवननिवासलक्षणम् । मदनस्य व्यापारः स्वविषये प्रवृत्तिः तद्रोधि व्रतं नियमादि । प्रकृष्टायोत्तमप्रकृतये राज्ञे दानं तस्मात् । प्रदानादिविशिष्टं विवाहं मर्यादीकृत्य निषेवणीयम् । किमिति प्रश्ने । आहो अथ वा । 'आहो उताहो किमुत विकल्पे' इत्यमरः । अत्यन्तमेव मदिरेक्षणवल्लभाभिर्मदिरे संजातमदे ये ईक्षणे ताभ्यां वल्लभाभिः सुन्दरीभिः । 'आत्मसदृशेक्षण—' इति पाठे आत्मनः सदृशे ईक्षणे ताभ्यां वल्लभाभिः प्रियाभिः । हरिणाङ्गनाभिर्मृगीभिः सहात्यन्तमाजन्मैव निवत्स्यति । अर्थात्तपोवने । अयमाशयः—यदि राज्ञे देया तदा विवाहपर्यन्तमेव तपोवने स्थितिः । तदनन्तरमविरोधी कामोपभोगः । यदि कस्मैचित्तपस्विने देया तदा मृगमिथुनवत्कामोपभोगरहिता वन एव स्थास्यतीति । अस्यैवोत्तरमनुरूपवरप्रदान इत्यादि । अत्र सहोक्तिः । औपम्यं गम्यम् । निवासः सामान्यधर्मः । समशब्दस्य तुल्यवाचित्व उपमैव । 'समं सहार्थे तुल्ये च' इत्यजयः । अनयोः पूर्वोक्तैव सहृदयहृदयहारिणी । वृत्त्यनुप्रासश्च । वसन्ततिलका वृत्तम् ॥ २४ ॥ धर्मचरणेऽपि परवशोऽयं जनः । एतदाश्रमवासित्वेन सामान्यतः प्राप्तं यद्धर्मचरणं तत्रापि पराधीन इति यावत् । अनेन पूर्वपद्ये यत्कर्तृत्वेनोपात्तं तस्योत्तरम् । तेनास्याः कर्तृत्वं कुत्रापि नास्तीति भावः । इतः परं किं परवशेत्येकः प्रश्नः । यत्परवशस्तस्यापि कोऽभिप्राय इति द्वितीयः । तत्राह—गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः । अनेनोत्तरालंकारः । 'उत्तरेण प्रश्नोन्नयन उत्तरम्' इति तल्लक्षणात् । 'राजा—वयमपि' इत्यादिनैतदन्तं युक्तिनामाङ्गमुपक्षिप्तम् । 'संप्रधारणमर्थानां युक्तिरित्यभिधीयते' इति । दुरवापेति । एतत्सदृशान्यस्याभावादिति भावः । भवेति । हे हृदय साभिलाषं भव । अनेन राजगतस्वभावस्य स्थैर्यं द्योत्यते । तत्र हेतुमाह—संप्रतीति । मुनिकन्या क्षत्रियकन्या वेति संदेहनिर्णय एकत-



१ मेव मदिरेक्ष०. २ दुरवापेयं न खलु प्रार्थना । ( आत्मगतम् । ).

**शकुन्तला**—( सरोषमिव । ) अनसूये गमिष्याम्यहम् । ( क )

**अनसूया**—किंनिमित्तम् । ( ख )

**शकुन्तला**—इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि । ( ग )

**अनसूया**—सखि न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् । ( घ )

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव । )

**राजा**—( ग्रहीतुमिच्छन्निगृह्यात्मानम् । आत्मगतम् । ) अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि

**अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।**
**स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २६ ॥**

( क ) अणसूए गमिस्सं अहं । ( ख ) किंणिमित्तं ।
( ग ) इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए णिवेदइस्सं ।
( घ ) सहि ण जुत्तं अकिदसक्कारं अदिहिविसेसं विसज्जिअ सच्छन्ददो गमणं।

रनिश्चयो जातः । तेनात्र काव्यलिङ्गम् । निर्णयमेव विवृणोति आशङ्कस इति। यत्त्वमभिमाशङ्कसे मन्यसे । अस्प्रष्टव्यत्वं सामान्यधर्मो गम्यः । व्यस्तरूपकम्। तत्स्पर्शक्षमं रत्नमिति व्यतिरेकरूपम् । अथ च स्पर्शक्षममुपभोग्यं रत्नम्। कन्यारत्नमित्यर्थः । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते ।' इत्युक्तेः । वृत्त्यनुप्रासश्च । नायकौत्सुक्यं ध्वनितम् । अनेन समाधाननामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'बीजार्थस्योपगमनं तत्समाधानमुच्यते' इति । न युक्तमकृतसत्कारमतिथिविशेषमिति साभिप्रायम् । विसृज्य स्वच्छन्दतो गमनम् । अनेनोपदेश इति नाट्यालंकार उपक्षिप्तः । तल्लक्षणम्—'शिक्षा स्यादुपदेशनम्' इति ॥ २५ ॥ अहो इत्याश्चर्ये । चेष्टाप्रतिरूपिका चेष्टासदृशी यादृशी शरीरचेष्टायां तादृशी ताम्। विनापीति । अत एवाश्चर्यम् । तदेवाह—**अनुयास्यन्निति** । मुनितनयां शकुन्तलाम् । संबन्धमात्रविवक्षया समासः कृतः । यथारिस्त्रीणामित्यत्र । एनामिति वक्तव्य एतदुक्तिर्मुग्धत्वद्योतनाय । सहसाऽविचारितमनुयास्यन्ननुगमिष्यन् । 'लटः सद्वा' इति शतृ । अहं विनयेन जितेन्द्रियतया वारितः प्रसरो वेगो यस्य सः । 'प्रसरः प्रणये वेगे' इति विश्वः । 'इन्द्रियाणां जयं प्राह विनयं भरतो मुनिः ।' इत्युक्तेः । अत्रानुगमनकरणे वेगस्यैव निराकरणात्तात्त्विकानुरागनिषेधाभावाद्रतेः स्थायित्वं ध्वनितम् । तेन प्रसरपदस्यावकरत्वं न शङ्कनीयम् । अन्यथानुयास्यन्नेव निवारितः । अन्यत्र सुतरां वारित इत्यर्थः स्यात् । स्थानादुपवेशनादनुच्च-

१ चेष्टापि मनोवृत्तिः ... २ ... कामिमनः ... कामिमनःप्रवृत्तिः. ३ जुत्तं ते. ४ सच्छंदग०. उज्झिअ अस्समवासिणो जणस्स ( उज्झित्वाश्रमवासिनो जनस्य ) ?

प्रियंवदा—( शकुन्तलां निरुध्य । ) हला न ते युक्तं गन्तुम् । ( क )
शकुन्तला—( सभ्रूभङ्गम् । ) किंनिमित्तम् । ( ख )
प्रियंवदा—वृक्षसेचने द्वे धारयसि मे । एहि तावत् । आत्मानं मोचयित्वा ततो गमिष्यसि । ( इति बलादेनां निवर्तयति । ) ( ग )
राजा—भद्रे वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये । तथा ह्यस्याः

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥ २७ ॥

( क ) हला ण दे जुत्तं गन्तुं । ( ख ) किंणिमित्तं ।
( ग ) रुक्खसेअणे दुवे धारेसि मे । एहि दाव । अत्ताणं मोचिअ तदो गमिस्ससि ।

लग्नचञ्चलोऽपि । उत्थानं तु दूरापास्तमित्यपिशब्दार्थः । गत्वा प्रतिनिवृत्तः पर्यावर्त इवेत्युत्प्रेक्षा । अनुचलन्गत इति विरोधाभासः । काव्यलिङ्गमनुप्रासश्च । अनेन परिभावनेत्यङ्गमुपाक्षिप्तम् । तल्लक्षणं तु–' कुतूहलोत्तरविशो विज्ञेया परिभावना ' इति ॥ २६ ॥ स्रस्तांसाविति । स्रस्तौ पतितावंसौ ययोस्तौ । स्वभावतस्तु नतौ । अधुना त्वतिनतावित्यर्थः । घटोत्क्षेपणादिति हेतु सर्वत्र योज्यः । स्वभावत एव लोहितौ । अधुनातिमात्रमत्यर्थं लोहिततलौ रक्तकरतलौ । तलशब्द एकदेशेन ' भीमो भीमसेनः ' इतिवत्करतलमाह बाहुसान्निध्यात् । इदं विशेषणद्वयमविधेयम् । बाहू इति द्विवचनम् । पर्यायेण व्याप्रियमाणत्वात् । तेन न पूर्वापरविरोधः । अद्यापीति च त्रिषु स्थानेष्वन्वेति । अद्यापि स्रस्तांसौ, अद्याप्यतिमात्रलोहिततलौ, अद्यापि प्रमाणाधिक इति । तेनातिशयमृदुता ध्वन्यते । प्रमाणाधिको द्वादशाङ्गुलाधिकः । उक्तं च–' देहं व्याप्य स्वनाडीभिः प्रमाणं कुरुते बहिः । द्वादशाङ्गुलमानेन तस्मात्प्राणः समीरितः ॥ ' इति । श्वासो निःश्वासवायुः । अत एव स्तनयोर्वेपथुं कम्पं जनयति । ' अथ वेपथुः । कम्पः ' इत्यमरः । यद्यपि सर्वाङ्गस्य स्वेदयुक्तत्वं तथापि तस्य संवृतत्वान्मुखे पूर्वमुत्पत्तेर्मुखमर्धशरीरं तस्य । ' सर्वं वा मुखमुच्यते ' इत्युक्तेश्च वदन इत्युक्तिः । तेन कपोलयोरलिके चिबुक इत्यर्थः । घर्माम्भसां स्वेदोदकानाम् । ' घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि । ' इति विश्वः । जालमिव जालकम् । सातिशयोद्दीपकत्वं व्यङ्ग्यम् । यदि समूहमात्रं व्यङ्ग्यं स्यात्तदा ' घर्माम्भसां मण्डलम् ' इत्येव ब्रूयात् । तत्स्रस्तं गलितम् । श्रमातिशयादिति भावः । कर्णेऽवतंसीकृतं शिरीषपुष्पं कर्णशिरीषम् । मध्यम-



१ उपरुध्य, उपसृत्य. २ भेदम्. ३ स्रस्तं. ४ ध्वंसिनि.

तदहमेनामनृणां करोमि। (इत्यङ्गुलीयं दातुमिच्छति।)

(उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः।)

राजा—अलमस्मानन्यथा संभाव्य। राज्ञः परिग्रहोऽयमिति राजपुरुषं मामवगच्छथ।

प्रियंवदा—तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलीवियोगम्। आर्यस्य वचनेनानृणेदानीमेषा। (किंचिद्विहस्य।) हला शकुन्तले मोचितास्यनुकम्पिनार्येण। अथवा महाराजेन। गच्छेदानीम्। (क)

---

(क) तेण हि णारुहदि एदं अङ्गुलीअअं अङ्गुलीविओअं। अज्जस्स वअणेण अणिरिणा दाणिं एसा। हला सउन्दले मोइदा सि अणुअम्पिणा अज्जेण। अहवा महाराएण। गच्छ दाणिं।

---

पदलोपी समासः। तद्वोढुं शीलं यस्य तत्। बन्धे केशबन्धे स्रंसिनि स्खलति सति मूर्धजाः केशा एकेन हस्तेन यमिता बन्धनं नीताः। अत एव पर्याकुलाश्चलाश्च। पूर्ववाक्यसमुच्चये स्वभावोक्तिः। सर्वत्र घटोत्क्षेपणादिति हेतोरुक्तेरादिकारकदीपकालङ्कारः। तदुक्तम्—'सैव क्रियासु बह्वीषु कारकस्येति दीपकम्। सैवावृत्तिः' इति। 'अर्थावृत्तिः पदावृत्तिरुभयावृत्तिरित्यमी।' इत्युक्तेः। स्रस्तं स्रंसिनीत्युभयावृत्तिरलङ्कारः। काव्यलिङ्गं च। स्तनवेपथुजननेन हेतुना श्वासस्य प्रमाणाधिकत्वं साध्यमित्यनुमानालङ्कारश्च। अनुप्रासः। वाक्यचतुष्टये च प्रत्येकं विशेषणद्वयोपादानान्न तत्प्रक्रमभङ्गः। यदि श्वाससामानाधिकरण्याभावाद्विशेषणत्वाभाव इत्यसंतोषस्तर्हि 'अद्यापि स्तनवेपथोश्च जनकः श्वासः प्रमाणाधिकः' इति पाठं पठित्वा संतोष्टव्यम्। यद्यपि घर्मोऽम्भोरूप एव तथापि पूर्वं कर्णावतंसरोधित्वेन बिन्दुस्तवकरूपता परस्तात्स्रंसनं चाम्भःपदोपादानव्यतिरेकेण न स्फुरतीति तदुपादानम्। शार्दूलविक्रीडितं वृत्तम्। अनेन दृष्टमिति भूषणमुपक्षिप्तम्। तल्लक्षणं तु—'यथादेशं यथाकालं यथारूपं च वर्ण्यते। यत्प्रत्यक्षं परोक्षं वा तद्दृष्टं दृष्टवद्भवेत्।' इति ॥२७॥ 'प्रियंवदा शकुन्तलां निरुध्य' इत्यादिना 'इच्छति' इत्यन्तेन करणं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'प्रकृतार्थस्य चारम्भः करणं नाम तद्भवेत्।' इति। अलङ्कारार्थं तु मुद्रिका नामाक्षरयुक्ता तु मुद्रेत्यनयोर्भेदः। उभे इति—नामरूपाणि दुष्यन्तेति नामस्वरूपाणि यानि मुद्राक्षराणीति समासः। नाममुद्राया अक्षराणीति विग्रहे आर्थं पौनरुक्त्यम्। मुद्रेत्येतावतैव गतार्थत्वात्। अन्यथेति राजत्वेन। राज्ञः परिग्रहः परिजनो मूलं चायं मल्लक्षण इति हेतोः। राज्ञः पुरुषो राजा चासौ पुरुषश्च तम्। 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः।' इति विश्वः।

---

१ प्रयच्छति. २ प्रतिग्रहोयम्। अस्मा[illegible] [illegible] नास्ति कश्चित्. ३ वअणेण अणिरिणा णाम एसा.

शकुन्तला—( आत्मगतम् । ) यद्यात्मनः प्रभविष्यामि । ( प्रकाशम् । ) का त्वं विसृष्टव्यस्य रोद्धव्यस्य वा । ( क )

राजा—( शकुन्तलां विलोक्य । आत्मगतम् । ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् । अथ वा लब्धावकाशा मे प्रार्थना । कुतः ।

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २८ ॥

( नेपथ्ये । )

भो भोस्तपस्विनः संनिहितास्तपोवनसत्त्वरक्षायै भवत । प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः ।

तुरगखुरहतस्तथा हि रेणु-
र्विटपविषक्तजलार्द्रवल्कलेषु ।

( क ) जइ अत्तणो पहविस्सं । का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा ।

यद्यात्मनः प्रभविष्यामि । अनेनोद्भेदनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः ।' इति । दशरूपके तु 'उद्भेदो गूढभेदनम्' इति । राजभावस्य गूढस्योद्भेदनात् । **वाचमिति** । यद्यपीयं मम वचोभिर्वाचं न मिश्रयति । मया सह न वक्तीत्यर्थः । तथापि मयि भाषमाणेऽभिमुखं कर्णं ददाति । मदुक्तं सादरं शृणोतीत्यर्थः । यद्यपि काममत्यर्थं मदाननसंमुखीना मन्मुखाभिमुखी न तिष्ठति । 'यथामुखसंमुखस्य—' इति खः । तथापि भूयिष्ठमतिशयेन । बहु यथा स्यात्तथा । अस्या दृष्टिरन्यविषया मदाननव्यतिरिक्तविषया न तु । नैवेत्यर्थः । चरणत्रयेऽस्मदा सौभाग्यातिशयो ध्वन्यते । छेकवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् । अनेन मुग्धाया नायिकाया गात्रजो विलास इति भाव उक्तः । अनुरागेङ्गितं च । तदुक्तं मदनोदये—'विकारो नेत्रवक्त्रस्य तद्वाक्यश्रवणादरः । अन्यव्याजेन तद्वीक्षा अनुरागेङ्गितं भवेत् ॥' इति । पूर्वोक्तं प्राप्तिलक्षणमङ्गमनेन चोपक्षिप्तम् ॥२८॥ प्रकृतकथाविच्छेदार्थमन्तरसंधिमुपक्षिपति-नेपथ्य इति । दुष्यन्त इति राजनामश्रवणाच्छकुन्तलायाः प्रोत्साहनाद्भेदलक्षणमङ्गमुपक्षिप्तम् । 'भेदः प्रोत्साहना मता' इति तल्लक्षणस्य धनिकेनोक्तत्वात् । प्रत्यासन्न इति यदुक्तं तत्र हेतुं श्लोकाभ्यां दर्शयति—**तुरगेति** । तथा हि तुरगखुरहतो रेणुराश्रमवृक्षेषु पततीति योजना । कीदृशेषु । विट-



१ अवहिता. २ ०खी सा, ०खीना. ३ आकाशे.

पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥ २९ ॥

अपि च ।

तीव्राघातप्रतिहततरुस्कन्धलग्नैकदन्तः
पादाकृष्टव्रततिवलयासङ्गसंजातपाशः ।
मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥ ३० ॥

( सर्वाः कर्णं दत्वा किंचिदिव संभ्रान्ताः । )

---

येषु शाखासु विषक्तान्यासक्तानि जलार्द्राणि वल्कलानि येषु तेषु । आर्द्रत्वं विषक्तत्वे हेतुः । अनेन विटपेभ्यो वल्कलापसारणं क्रियतामिति ध्वन्यते। तुरगेत्यनेन सेनाया बाहुल्यं ध्वनितम् । इदं च तपोवनसत्त्वरक्षावहितत्व आर्थो हेतुः । आश्रमेत्यनेन निकटत्वं द्रुमेष्विति विशेषणोपादानार्थम् । जलग्रहणं तस्मिन्समयेऽप्यशुष्कताभिधानार्थम् । कीदृग्रेणुः । परिणतः सायंकालीनः योऽरुणः सूर्यस्तद्वत्प्रकाशः स्फुटः । तद्वद्वर्ण इत्यर्थः । 'अरुणोऽस्फुटरागे च सूर्ये सूर्यस्य सारथौ ।' इति धरणिः । 'प्रकाशोऽतिप्रसिद्धे स्यात्प्रहासातपयोः स्फुटे ।' इति विश्वः । अयमेवोपमायां सामान्यधर्मो ज्ञेयः । क इव । शलभसमूहः पतङ्गनिकर इव । अनया रेणोर्बहलत्वं घनत्वं च ध्वन्यते । वृत्त्यनुप्रास उपमा च । अत्र पार्थिवप्रत्यासन्नत्वे कारणे प्रस्तुते तत्कार्यं रेणूद्धूलनादिकमुक्तमित्यप्रस्तुतप्रशंसा । न पर्यायोक्तम् । कार्यस्याप्रस्तुतत्वात् । पर्यायोक्ते तु कारणवत्कार्यमपि प्रकृतमेव । तत्र कारणापेक्षया तद्वर्णनमतिचमत्कारकृदिति स्थितमाकरे । काव्यलिङ्गं च । पुष्पिताग्रा वृत्तम् ॥ २९ ॥ तीव्रेति । स्यन्दनस्य रथस्यावलोकनाद्भीतो गजो धर्मारण्यं प्रविशतीति संबन्धः । कीदृग्गजः। तीव्रो य आघातः पलायनविषये स्वाभाविकः संवेगः संघट्टस्तेन प्रतिहता भग्नास्तरवो येन सः । स्कंधे स्कंधभागे पार्श्वावलोकनेन लग्न एको दन्तो यस्य सः । तत्र स्कंधभागो दक्षिणः । दन्तोऽपि दक्षिण इति सांप्रदायिकाः । उक्तं च पालकाप्ये—'दक्षिणे वलितुं शक्तो गजो वामे प्रयत्नतः ।' इति । अन्ये त्वेकपदत्वेन व्याचक्षते—तीव्रेणाघातेनाघातोद्यमेन प्रतिहतो यस्तरुस्कन्धस्तत्र लग्न एकदन्तो यस्य । यद्वा तीव्रेणोग्रेण क्वचित्कठिने वस्तुन्याघातेन प्रतिहतस्तत उच्छलितः संस्तरुस्कंधे लग्न एको दन्तो यस्य सः । उभयमपि नातिसमञ्जसम् । अर्थासंगतेः । अथ तत्त्वत एकदन्त एव गजः । तत्र तीव्रेत्यादिगम्योत्प्रेक्षा । तथापि पूर्वोक्त एव दोषः । आघातप्रतिहतपदयोरन्यतरस्या-

---

१ तरुः स्कन्ध०; स्कन्धमग्नै०; तीव्राघातादभिमुखतरुस्कन्धभग्नैक०. २ क्रोडाकृष्ट०. ३ सज्जबाहुजालं.

**राजा**—( आत्मगतम् । ) अहो धिक् । पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु । प्रतिगमिष्यामस्तावत् ।

**सख्यौ**—आर्य अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय । ( क )

**राजा**—( ससंभ्रमम् । ) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

( सर्वे उत्तिष्ठन्ति । )

**सख्यौ**—आर्य असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जामह आर्यं विज्ञापयितुम् । ( ख )

**राजा**—मा मैवम् । दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।

( शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता । )

**राजा**—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्तयितुम् । मम हि

---

( क ) अज्ज इमिणा आरण्णअवुत्तन्तेण पज्जाउल ह्म । अणुजाणीहि णो उडअगमणस्स । ( ख ) अज्ज असंभाविदअदिहिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं ।

---

वकरत्वं दुष्परिहरणीयम् । पादाभ्यामाकृष्टं यद्व्रततिवलयं लताजालं तस्यासङ्गेन समन्तात्संबन्धेन जातः पाशो यस्य सः । भिन्नानि सारङ्गाणां मृगाणां यूथानि कुलानि यस्मात्सः । विशेषणचतुष्टयेन वेगातिशयो व्यज्यते । नोऽस्माकम् । तपसो मूर्तः शरीरी । विघ्न इवेत्युत्प्रेक्षा । पूर्वश्लोकोक्तक्रमेणाप्रस्तुतप्रशंसा च । पूर्वार्धे वृत्त्यनुप्रासश्रुत्यनुप्रासयोरेकवाचकानुप्रवेशलक्षणः संकरः । उत्तरार्धे श्रुत्यनुप्रास एव । परिकरालंकारश्च । मन्दाक्रान्ता वृत्तम् । अत्रापि भयानको रसः । गजगतभयं स्थायिभावः । दुष्यन्तसेनारथावलोकनं विभावः । पार्श्वावलोकनपलायनादयो व्यभिचारिणः । लक्षणं पूर्वमेवोक्तम् ॥ ३० ॥ अहो धिगिति भिन्नं वाक्यम् । अनुजानीह्यनुज्ञां देहि नोऽस्मानुटजगमनाय । असंभावितातिथिसत्कारमप्रापितातिथिपूजनम् । पुरस्कृतः पूजितः । 'पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते ।' इत्यमरः । सव्याजं विलम्ब्येत्यनेन सखीद्वयं पूर्वं निष्क्रान्तं स्वयं च पश्चात् । इत्यनेन प्रतिमुखसंधावुच्यमानम् 'दर्भाङ्कुरेण' इत्यादि

---

१ अस्मात्परं–शकु०–अणसूए अहिणअकुससूईए परिक्खदं मे चलणं कुरवअसाहापरिलग्गं अ वक्कलं । दाव परिपालेध मं जाव णं मोआवेमि । ( अनसूये अभिनवकुशसूच्या परिक्षतं मे चरणं कुरबकशाखापरिलग्नं च वल्कलम् । तावत्परिपालयतं मां यावदेतन्मोचयामि । ). २ दूरेण. ३ ०दिहिसक्कारा; ०विदसक्कारं.

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥ ३१ ॥

( इति निष्क्रान्ताः सर्वे । )

## प्रथमोऽङ्कः ।

---

समर्थितं भवति । सहैवेति लज्जा ध्वनिता । गच्छतीति । शरीरं पुरोऽग्रे गच्छति । चेतः पुनः पश्चाच्छकुन्तलाभिमुखं धावति । शरीरं तु शनैर्गच्छति । संबन्धेऽसंबन्धलक्षणासंबन्धे संबन्धलक्षणा च द्व्यतिशयोक्तिः । असंस्तुतं शरीरेणापरिचितमिवेति गम्योत्प्रेक्षा । 'संस्तवः स्यात्परिचयः' इत्यमरः । प्रतिवातं वातसंमुखं नीयमानस्य केतोर्ध्वजस्य चीनदेशस्थं वस्त्रं चीनांशुकं तदिव । तस्यातिसूक्ष्मत्वादल्पेऽपि वाते वाताभिमुखे ध्वजे तत्पश्चादेव गच्छतीति । वृत्त्यनुप्रास उपमा । अनया च हृदयशून्यत्वात्परेण नीयमानकाष्ठतुल्यत्वं शरीरस्य ध्वनितम् । चीनपदोपादानाच्चेतसोऽतिचाञ्चल्यं चेति ॥३१॥ निष्क्रान्ताः सर्वे इति । तदुक्तं दशरूपके—'एकाहाचरितैकार्थमित्थमासन्ननायकम् । पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥' इति । अत्र च तपोवनसंरोधस्य प्राप्तत्वात्स च नाटके साक्षान्न निदर्शनीयः, अङ्कान्ते निवद्धव्य इत्यत्राङ्कसमाप्तिः । तदुक्तं दशरूपके—'दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् । शस्त्रस्य ग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ।' इति । अङ्कलक्षणं दशरूपके—'यदा तु सरसं वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥ प्रत्यक्षनेतृचरितो विन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इति । आदिभरते च—'अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ यत्रार्थस्य समाप्तिर्यत्र च वीजस्य भवति संहारः । किञ्चिदवलग्नविन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयुक्तः । नानावस्थान्तरितः कार्यस्त्वङ्को यथार्थरसः ॥' इति ॥ इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां प्रथमोऽङ्कः समाप्तः ॥

१ असंस्थितं.

# द्वितीयोऽङ्कः ।

( ततः प्रविशति विषण्णो विदूषकः । )

**विदूषकः**—( निःश्वस्य । ) भो दि(द)ष्टम् । एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि । अयं मृगोऽयं वराहोऽय शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजिष्वाहिण्ड्यते अटवीतोऽटवी । पत्रसंकरकषायाणि कटुकानि गिरिनदीजलानि पीयन्ते । अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते । तुरगानुधावनकण्डितसंधे रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याः-पुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । इयतेदानी-

( क ) भो दिट्ठं । एदस्स मअआसीलस्स रण्णो वअस्सभावेण णिव्विण्णो ह्मि । अअं मओ अअं वराहो अअं सद्दूलो त्ति मज्झण्णे वि गिम्हविरअपाअवच्छाआसु वणराईसु आहिण्डीअदि अडवीदो अडवी । पत्तसंकरकसाआइं कडुआइं गिरिणईजलाइं पीअन्ति । अणिअदवेलं सुल्लमंसभूइट्ठो आहारो अण्हीअदि । तुरगाणुधावणकण्डिदसंधिणो रत्तिम्मि वि णिकामं सइदव्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदो ह्मि । एत्तएण दाणिं

तत इति । विषण्णत्वे हेतुर्वक्ष्यमाणः । विदूषकलक्षणं तु सुधाकरे—' विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः । ' इति । अस्य प्राकृतं पाठ्यम् । उक्तं च—' विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत् । ' इति । भो दृष्टमिति भिन्नं वाक्यम् । वाक्यार्थस्य कर्मत्वम् । वयस्यभावेन ' स्निग्धत्वेन । स्निग्धो वयस्यः सवयाः ' इत्यमरः । निर्विण्णोऽस्मि । दुःखितोऽस्मि । अयं मओ मृगः । ' ऋतोऽत् ' इति ऋकारस्याकारः । ' मिओ ' इति पाठस्तु ' इत्कृपादौ वा ' इति कृपादेराकृतिगणकत्वात्साधुः । अडवीमिति ' सप्तम्या द्वितीया ' । इति सूत्रे ' प्रथमाया अपि ' इति वार्तिकम् । तेन प्रथमार्थे द्वितीया । पत्राणां संकरो भिन्नजातीयानोमकत्र पतनं तेन कषायाण्यत एव कडुआइं कटूनि । कः स्वार्थे । ' स्वार्थे कश्च वा ' इति सूत्रेण । गिरीनदीजलानि पीयन्ते । ' कदुह्णाइं ' इति पाठे कदुष्णानि । ईषदुष्णानीत्यर्थः । अनियतवेलं विषमसमयम् । शूल्यमांसभूयिष्ठः । लोहशलाकया मांसं संग्रथ्य यत्पच्यते तच्छूल्यमांसम् । ' शूलाकृतं भटित्रं स्याच्छूल्यम् ' इत्यमरः । आहारः । ' अण्हीअदि ' इत्यत्र ' भुजोभुञ्जजिमजेमकम्माण्हसमाण—' इत्यण्हादेशः । शेषं समानम् । तुरगानुधावनेन कण्डितसन्धेः कुट्टिताङ्गसंधेः । निकाममत्यर्थं । ततो महत्येव प्रत्यूषेऽतिप्रातर्दास्याःपुत्रैः । [ पुत्रेऽन्यतरस्यामिति नि-

१ भो हदोह्मि. २ कदुण्हाणि ( कदुष्णानि ). ३ सउणलुद्धएहिं. ४ गहण, गमण.

मपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिण्डकः संवृत्तः । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता । सांप्रतं नगरगमनाय मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत् । का गतिः । यावत्तं कृताचारपरिक्रमं पश्यामि । ( इति परिक्रम्यावलोक्य च । ) एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु । अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय । ( इति दण्डकाष्ठमवलम्ब्य स्थितः । ) ( कु )

---

वि पीडा ण णिक्कमदि । तदो गण्डस्स उवरि पिण्डेआ संवुत्ता । हिओ किल अह्मेसु ओहीणेसु तत्तहोदो मआणुसारेण अस्समपदं पविठ्ठस्स तावसकण्णआ सउन्दला मम अधण्णदाए दंसिदा । संपदं णअरगमणस्स मणं कहं वि ण करेदि । अज्ज वि से तं एव्व चिन्तअन्तस्स अच्छीसु पभादं आसि । का गदी । जाव णं किदाचारपरिक्कमं पेक्खामि । एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि पिअवअस्सो । होदु । अङ्गभङ्गविअलो विअ भविअ चिठ्ठिस्सं । जइ एव्वं वि णाम विस्समं लहेअं ।

---

न्दायामलुक् । ] तस्योद्वेगदायित्वाद्वालिप्रदानम् । शकुनिलुब्धकैः पक्षिव्याधैः । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।' इत्यमरः । वनग्रहणेऽरण्यवेष्टने यः कोलाहलस्तेन प्रतिवोधितोऽस्मि । एतावता कालेनेदानीमधुना पीडा न निष्क्रामति नापगच्छति । ततो गण्डस्योपरि पिटकः संवृत्तः । अयमाभाणकः । स्फोटस्योपरि स्फोट इत्यर्थः । प्रकृते त्वेकस्मिन्दुःखकारणे सत्येव द्वितीयं दुःखकारणमित्यर्थः । तदेवाह—ह्यः पूर्वदिने किल । 'ह्यो गतेऽह्नि' इत्यमरः । अस्मास्ववहीनेषु पश्चात्स्थितेषु । तत्तहोदो तत्रभवतो मृगानुसारेणाश्रमपदमाश्रमस्थानम् । नगरगमनस्स नगरगमनाय । 'चतुर्थ्याः षष्ठी' इति षष्ठी । चिन्तनेन सुखम्, निद्राच्छेदेन दुःखमिति । अनेन विधानं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ।' इति । यावत्तं कृताचारपरिक्रमं कृत आचारस्य स्नानादेः परितः क्रमो येन तं पश्यामि । एष बाणासनं धनुर्हस्ते यासां ताभिर्वनपुष्पमालाधारिणीभिरिति मृगयावेषसूचनम् । प्रियवयस्यः प्रियसखः । अत्र यवन्यो नाम संचारिकापर्यायः । तल्लक्षणं मातृगुप्ताचार्यैरुक्तम्—'गृहकक्षाविचारिण्यस्तथोपवनसंचराः । यामेषु च नियुक्तानां यामगु-

---

१ आलम्ब्य. २ पिडिआ, विप्फोडओ. ३ न्दला नाम. ४ कहं ( कथं ) वि. ५ एव्वं एव्व चिन्तअन्तस्स मे पहादा अच्छिसुर अणी ( एवमेव चिन्तयतो मे प्रभाता अक्ष्णो रजनी ). ६ परिकम्माणं ( परिक्रमाणं )

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा । )

राजा—

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥

( स्मितं कृत्वा । ) एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता विडम्ब्यते ।

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।

द्धिविशारदाः ॥ संचारिकास्तु ता ज्ञेया यवन्योऽपि मताः क्वचित् । ' इति । यथानिर्दिष्टपरिवारः । यवनीवृत इत्यर्थः । **काममिति ।** सा काममत्यर्थं प्रिया प्रियतमेत्यर्थः । तर्हि सम्यगेव । न सम्यगित्याह—यतो न सुलभा प्राप्या किंतु सुखेन न लभ्या । तर्हि दुष्प्रापे वस्तुनि प्रयत्नेनापि किमित्याशङ्कायामाह—मन इति । तु इति शङ्कोच्छेदे । मनस्तस्या नायिकाया भावाश्चेष्टास्तासां दर्शन आयासि । सखेदं प्रयत्नपूर्वकं लालसमित्यर्थः । अकृतेति । मनसिजेऽकृतार्थेऽप्युभयप्रार्थना स्वस्वाभिलाषो रतिं रागं यतः कुरुते प्रीतिमुत्पादयति । जातरत्योः संभवतीत्यर्थः । अत्राकृतार्थेऽप्यजातरत्योरपीत्यपिशब्दार्थः । तेनैतदुक्तं भवति । यथा मन्मनसस्तद्भावदर्शनलालसत्वं कार्यं समर्थ्यते तेनार्थान्तरन्यासः । उद्भटादिमते सामान्यविशेषभाव एवार्थान्तरन्यासाङ्गीकारादत्र काव्यलिङ्गमेव । येषां मते कार्यकारणभावेऽर्थान्तरन्यासस्तेषां मत एतद्व्यतिरिक्तविषयत्वं काव्यलिङ्गस्येत्यवधेयम् । अथ च मनसिजः कन्दर्पोऽकृतार्थः । रतिः कामभार्या चेति विरोधः । व्याख्यातप्रीतिपर्यायत्वेन विरोधाभासः । ' रतिः कामस्त्रियां रागे सुरतेऽपि रतिः स्मृता ।' इति धरणिः । श्रुत्यनुप्रासश्च । अनेन पूर्वानुरागविप्रलम्भादभिलाषो नामावस्थोक्ता । तल्लक्षणं तु सुधाकरे—' संगमोपायरचिता प्रारब्धाध्यवसायतः । संकल्पेच्छासमुद्भूतिरभिलाष इतीरितः ॥ ' इति ॥ १ ॥ ' अद्यापि तस्य तामेव चिन्तयतः ' इति विदूषकवचसा चिन्तोपनिबद्धा । न च पूर्वापरविपर्ययः शङ्कनीयः । वाग्द्वयस्याप्यनुवाद्यत्वात् । स्मितं कृत्वेति । अलीकेऽपि सत्यबुद्धिः कामिनामिति भावः । तदेव प्रकटयति—एवमिति । आत्माभिप्रायेण स्वाभिप्रायेण संभाविता संभावनयानीता । कल्पितेति यावत् । इष्टजनस्य प्रार्थ्यजनस्य चित्तवृत्तिर्येन स प्रार्थयिता कामी विडम्ब्यत इति कर्मकर्तरि । उपहासास्पदं भवतीत्यर्थः । विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । तेन पूर्वोक्तोऽभिलाषो मन्मनःस्थ एव मत्कल्पितस्तु तस्यां प्रतिभातीति प्रकृते पर्यवसानम् । तदेव विशिष्य दर्शयति—**स्निग्धमिति ।**



१ नायासि. २ सस्मितम्. ३ प्रेषयन्त्या.

मों गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति ॥ २ ॥

विदूषकः—( तथास्थित एव। ) भो वयस्य न मे हस्तपादं प्रसरति। तद्वाङ्मात्रेण जाप्यसे। ( क )

राजा—कुतोऽयं गात्रोपघातः।

विदूषकः—कुतः किल स्वयमक्ष्याकुलीकृत्याश्रुकारणं पृच्छसि। ( ख )

राजा—न खल्ववगच्छामि।

विदूषकः—भो वयस्य यद्वेतसः कुब्जलीलां विडम्बयति तत्किमात्मनः प्रभावेण ननु नदीवेगस्य। ( ग )

राजा—नदीवेगस्तत्र कारणम्।

( क ) भो वअस्स ण मे हत्थपाआ पसरन्ति। ता वाआमेत्तएण जेआवीअसि। ( ख ) कुदो किल सअं अच्छी आउलीकरिअ अस्सुकारणं पुच्छेसि। ( ग ) भो वअस्स जं वेदसो कुज्जलीलं विडम्बेदि तं किं अत्तणो पहावेण णं णईवेअस्स।

अन्यतोऽपि निर्लक्ष्यमेव। अत एव नयने प्रेरयन्त्या तया यद्विलासादिव स्निग्धं वीक्षितं स्निग्धदृष्ट्यावलोकितमिति विशिष्टं विधेयम्। साभिलाषं व्याजावलोकनं कृतमिति भावः। नितम्बयोर्गुरुतया विलासादिव यच्च मन्दं यातम्। विलम्बो भवत्विति भावः। नितम्बयोरिति द्विवचनेन मध्यनिम्नतागौरवाधिक्यं यौवनोज्जृम्भणं च ध्वनितम्। मा गा इत्युपरुद्धया तया सापि प्रियतरा हृदयरूपा सखी विलासादिव यदपि सासूयं सेर्ष्यमुक्ता। तत्र स्थित्यर्थमिति भावः। अपिः समुच्चयार्थे। सर्वं स्निग्धवीक्षणमन्दगमनसेर्ष्यवचनादि मत्परायणम्। व्याख्यातप्रकारेणार्थान्तरन्यासमाह—अहो आश्चर्ये। कामी स्वतामात्मीयतां सर्वत्र स्वाभिप्रायरूपतां पश्यतीत्यर्थः। ‘स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।’ इत्यमरः। विलासादिवेत्युत्प्रेक्षा। तेन संभाव्यमानत्वात्। मध्यकारकदीपकालङ्कारः हेतुस्वभावोक्ती च। नयनेयेति यान्त्यायातमिति तयातयेति छेकानुप्रासः। नयनेयेति यतोयादिति यातंयेति तस्यैवैकवाचकानुप्रवेशलक्षणः सङ्करः। स एव वृत्त्यनुप्रासेनापि पूर्वार्धे। उत्तरार्धे तु वृत्त्यनुप्रासः। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥ ‘विदूषकेण वक्तव्यो वयस्येति च भूपतिः।’ इत्युक्तेर्वयस्येति संबुद्धिः। वाङ्मात्रेण जापयिष्यामि। जय इति शब्दमुच्चरिष्यामीत्यर्थः। वाङ्मात्रेणेति हस्तोत्क्षेपणासामर्थ्यमुक्तम्। कुतः पृच्छसीति संबन्धः। अवगच्छामि जानामि। यद्वेतसो वृक्षविशेषः कुब्जलीलां विडम्बयत्यनुकरोति तत्किमात्मनः प्रभावेण सामर्थ्येन। किमिति प्रश्ने। णं ननु परमताक्षेपे। नदीवेगस्य।

१ तत्. २ कामः. ३ जीआवइस्सं ( जापयिष्यामि ); अस्मात्परं, जेदु जेदु भवं इत्यधिकं क्वचित्. ४ कहं कुदोत्ति सव्वं [illegible] आच्छि भकन्ता. ६ महवा.

विदूषकः—ममापि भवान् । ( क )

राजा—कथमिव ।

विदूषकः—एवं राजकार्याण्युज्झित्वैतादृश आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसृष्टुं मामेकाहमपि तावद्विश्रमितुम् । ( ख )

राजा—( स्वगतम् । ) अयं चैवमाह । ममापि काश्यपसुतामनुस्मृत्य मृगयाविक्लवं चेतः । कुतः ।

न नमयितुमधिज्यमस्मि शक्तो
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव मुग्धविलोकितोपदेशः ॥ ३ ॥

( क ) मम वि भवं ।

( ख ) एव्वं राअकज्जाणि उज्झिअ एआरिसे आउलप्पदेसे वणचरवुत्तिणा तुए होदव्वं । जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखोहिअसंधिबन्धाणं मम गत्ताणं अणीसो ह्मि संवुत्तो । ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं ।

प्रभावेणेत्यनुषज्यते । ' नन्विति परमताक्षेपानुज्ञैषणापृष्टप्रतिवचनेषु । ' इति दण्डनाथः । एतेन त्वयैवेदं कृतमिति भावः । दृष्टान्तालङ्कारः । प्रकृते निगमयति—एवमिति । एतादृशे मनुष्यदुःसंचार आकुलप्रदेशे श्वापदाकुलस्थाने वनचरवृत्तिना त्वया भवितव्यम् । अद्याप्याखेटापरित्यागादिति भावः । मम गात्राणामहमनीशः संवृत्तोऽस्मि । मम गात्राणि ममैव न भवन्तीत्यर्थः । यद्यस्मात्सत्यं संवृत्तोऽस्मीति संबन्धः । काश्यपसुतां शकुन्तलाम् । अनेन क्रिमप्याभिजात्यं ध्वनयति । तथा तामित्येव ब्रूयात् । मृगयायां विक्लवं विह्वलम् । विरक्तमिति यावत् । अथ च मृगयेति स्त्रीलिङ्गनिर्देशादन्याङ्गनासक्तौ पूर्वाङ्गनायां विरक्तत्वमुचितमिति दर्शितम् । न नमयितुमिति । तेषु मृगेषु मृगविषये अधिज्यमारोपितज्यमाहितसायकं संहितबाणमिदं प्रत्यक्षेण परिदृश्यमानं धनुः नमयितुं कर्णान्तमाक्रष्टुं न शक्तोऽस्मि । त्रयमपि विधेयम् । अत एव नार्थपौनरुक्त्यम् । यैर्मृगैः सहवसतिमेकत्रवासमेत्य प्राप्य प्रियायाः शकुन्तलाया मुग्धानि स्वभावसुन्दराणि । अथ च बालत्वाद्ब्रह्मचारित्वाच्चानधिगतहावभावानि । विलोकितानि विलोकनानि तेषामुपदेशः कृत इवेत्युत्प्रेक्षा । अज्ञातज्ञापनमुपदेशः । सामान्यविशेषणसंबन्धेन विशेषं लक्षयन्ननायासेन तत्प्रतिपत्ति

१ मुत्साहय्य. २ लोचनकान्तिसंविभागः. ३ अभ्यनुज्ञातोऽस्मि. ४ तत्प्रसादये



एकाहं पि दाव विस्समीअदु ( एकाहमपि तावद्विश्रम्यताम् ).

विदूषकः—( राज्ञो मुखं विलोक्य । ) अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् । ( क )

राजा—( सस्मितम् । ) किमन्यत् । अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदूषकः—चिरं जीव । ( इति गन्तुमिच्छति । ) ( ख )

राजा—वयस्य तिष्ठ । सावशेषं मे वचः ।

विदूषक—आज्ञापयतु भवान् । ( ग )

राजा—विश्रान्तेन भवता ममाप्येकस्मिन्ननायासे कर्मणि सहायेन भवितव्यम् ।

विदूषकः—किं मोदकखादिकायाम् । तेन ह्ययं सुगृहीतः क्षणः । ( घ )

राजा—यत्र वक्ष्यामि । कः कोऽत्र भोः ।

( प्रविश्य । )

दौवारिकः—( प्रणम्य । ) आज्ञापयतु भर्ता । ( ङ )

राजा—रैवतक सेनापतिस्तावदाहूयताम् ।

दौवारिकः—तथा । ( इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य । ) (च)

( क ) अत्तभवं किं वि हिअए करिअ मन्तेदि । अरण्णे मए रुदिअं आसि । ( ख ) चिरं जीअ । ( ग ) आणवेदु भवं । ( घ ) किं मोदअखज्जिआए । तेण हि अअं सुगहीदो खणो । ( ङ ) आणवेदु भट्टा । ( च ) तह ।

ध्वनति । उत्तरार्धार्थस्य शक्त्यभावे हेतुत्वेनोपात्तत्वात्काव्यलिङ्गम् । एतयोरङ्गाङ्गिभावः संकरः । वृत्त्यनुप्रासेन सह श्रुत्यनुप्रासस्य संसृष्टिः । नकारादीनां षोडशवर्णानां दन्त्यानां सत्त्वाच्छ्रुत्यनुप्रासः । पुष्पिताग्रा वृत्तम् । 'एवमात्माभिप्राय—' इत्यादिनैतदन्तेनानुस्मृतिस्तृतीयावस्था सूचिता ॥ ३ ॥ अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अन्तःकरण एव किमपि जल्पतीत्यर्थः । रुदितमिति भावे निष्ठा । त्वयि मद्विज्ञापनमरण्यरुदितवद्व्यर्थमित्यर्थः । त्वच्चित्तानुवर्तनं मया क्रियत इति विदूषकं प्रति ज्ञापनात्सस्मितमिति । किं मोदकखण्डिकायाम् । खण्डिका खण्डः । मोदकखण्ड इत्यर्थः । तेन ह्ययं सुगृहीतः क्षणः । मोदकभक्षणं चेदमङ्गीकृतमित्यर्थः । 'नीचेषु प्राकृतं भवेत्' इत्युक्तेर्दौवारिकस्य प्राकृतं पाठ्यम् । आज्ञापयतु भर्ता । 'भट्टेति चाधमैः' इत्युक्तेः । रैवतकेति दौवारिकनाम । आज्ञाया वचने दान उत्कण्ठा यस्य सः । आज्ञाया वचनामोदतः

१ प्यनायासकर्मणि. २ खण्डिआए ( खण्डिकायां ).

एष आज्ञावचनोत्कण्ठो भर्तेतो दत्तदृष्टिरेव तिष्ठति। उपसर्पत्वार्यः। (क)

सेनापतिः—( राजानमवलोक्य । ) दृष्टदोषापि स्वामिनि मृगया केवलं गुणं एव संवृत्ता । तथा हि देवः

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं
रविकिरणसहिष्णुं स्वेदलेशैरभिन्नम् ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

(क) एसो अण्णावअणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि । उपसप्पदु अज्जो ।

कण्ठ उन्नमिता ग्रीवा यस्य सः । भर्तेतो दत्तदृष्टिरेव तिष्ठति । उपसर्पत्वार्यः । अस्यापि संस्कृतं पाठ्यम् । तथा पूर्वमुक्तेः । गुण एवेति व्यक्तरूपकम् । 'देवः स्वामीति नृपतिर्भृत्यैः' इत्युक्तेर्देवेत्युक्तिः । अनवरतेति । गिरिचरः पर्वतचरो नागो हस्तीव देवो राजा । प्रकरणाद्देवशब्दो राजवाचकः । प्राणो बलमेव सारः स्थिरांशो यत्र तत् । 'प्राणोऽनिले बले' इति हैमः । 'सारो बले स्थिरांशे च' इत्यमरः । गात्रं वपुर्बिभर्ति । 'गात्रं वपुः संहननम्' इत्यमरः । गिरिचरपदेन स्वातन्त्र्यं सूचितम् । कीदृक् । अनवरतं निरन्तरं यद्धनुर्ज्याया आस्फालनं तेन क्रूरः कठिनः पूर्वः पूर्वभागो यस्य तत् । 'क्रूरं भयंकरं ज्ञेयं क्रूरौ कठिन-निर्भयौ ।' इति धरणिः । अनेन दनुजास्त्रप्रहारक्षमं बलं ध्वन्यते । रविकिरणस-हिष्णु । आतपेऽप्यक्लान्तमित्यर्थः । अनेन दुःखसहिष्णुत्वम् । स्वेदलेशैरभिन्नम् । स्वेदैस्तु न मिश्रं तल्लेशैरपि न संबद्धमित्यर्थः । अनेन श्रमजयित्वम् । अपचितं कृशमपि व्यायतत्वात्प्रकाण्डत्वादलक्ष्यम् । कृशत्वेन न लक्ष्यत इत्यर्थः । अनेन महापुरुषचिह्नं शालप्रांशुत्वादि । हस्तिगात्रपक्षेऽपि विशेषणानि योज्यानि । अनवरतं धनुर्ज्यायां प्रियालद्रुमभूमौ यदास्फालनमर्थात्प्रियालद्रुमाणामेव तेन कठिन-पूर्वभागम् । 'धनुःसंज्ञा प्रियालद्रौ राशिभेदे शरासने ।' इति विश्वः । 'ज्या मौर्वी च वसुंधरा' इति धरणिः । अन्यानि विशेषणानि स्पष्टानि । वरवीति णसणसेति छेकवृत्तिश्रुत्यनुप्रासाः । परिकरालंकारः । श्लेष उपमा च । मालिनी वृत्तम् । कीदृग्गात्रम् । न नवमनवं रतं सम्बद्धं धनुर्यत्र तत् । सर्वदासन्नधनुरित्यर्थः । द्विती-येऽनवं च तत्संबद्धप्रियालु चेति योज्यम् । 'शिखरिचरकरीव प्राणसारम्' इति पठित्वा प्रयोगनियमभङ्गः परिहर्तव्यः । यतस्त इवादयो यत्पुरः श्रूयन्ते तस्यैवोपमानत्वं कल्पयन्ति । अथ वा विशेषणात्प्रयुक्ता नोपमानबुद्धिं तत्र जनयन्त्यसंभवात् । ततो विशेष्य एव पर्यवसानादिति यथास्थितमेव चारु । एतच्चोपमानप्रपञ्चे मया सुनिरूपितम् । अनेन पद्येनाग्रिमेण 'मेदः' इत्यादिना च वीथ्यङ्गं मृदवं नामोप-क्षिप्तम् ॥ ४ ॥ क्वचित् 'किमन्यदवसीयते' इति पाठः । तदेकवाक्यम् । अथ

१ गुणायैव; दृष्टदोषः स्वामिनि मृगयाविहारः केवलं गुण ( सगुण ) एव संवृत्तः. २ सहिष्णुः. ३ स्वेद, ४ रभिन्नः.

( उपेत्य । ) जयतु जयतु स्वामी । [1]गृहीतश्वापदमरण्यम् । किमन्यत्रा-स्थीयते ।

राजा—[2]मन्दोत्साहः कृतोऽस्मि मृगयापवादिना [3]माधव्येन ।

सेनापतिः—( जनान्तिकम् । ) सखे स्थिरप्रति[4]बन्धो भव । [5]अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये । ( प्रकाशम् । ) [6]प्रलपत्वेष [7]वैधेयः । ननु प्रभुरेव निदर्शनम् ।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ५ ॥

विदूषकः—अपेहि रे उत्साहहेतुक । अत्रभवान्प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णर्क्षस्य कस्यापि मुखे पतिष्यसि । ( क )

---

( क ) अवेहि रे उत्साहहेतुअ । अत्तभवं पकिदिं आपण्णो । तुमं दाव अडवीदो अडवीं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे पडिस्ससि ।

---

किमवसन्नं कर्तव्यम् । किमप्यस्तीत्यर्थः । मन्दोत्साह इति । अर्थान्मृगयायाम् । मृगयापवादिनाखेटकनिन्दकेन । 'अपवादौ तु निन्दाज्ञे' इत्यमरः । माधव्येन विदूषकेण । स्थिरः प्रतिबन्धो मृगयाप्रतिबन्धो यस्य सः । 'क्वचित्, वैधेयः' इति पाठः । स श्रेयान् । मूर्ख इत्यर्थः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः ।' इत्यमरः । असौ मूर्खः प्रलपतु । मृगयापवादं वदत्वित्यर्थः । ननु प्रभुरेव निदर्शनम् । मृगयागुणवत्त्वे । 'अनवरत–' इति पूर्वमुक्तस्तमेवार्थमप्रस्तुतप्रशंसया समर्थयते—मेद इति । मेदसो वसायाश्छेदेनाल्पीभावेन कृशमुदरं यस्य तत् । अतो लघु । तत एवोत्थानयोग्यमुद्योगयोग्यम् । 'उद्योगे च तथोत्थानम्' इति धरणिः । सत्त्वानां जन्तूनाम् । 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । भयक्रोधयोर्निमित्तयोर्विकृतिमद्विकारयुक्तं चित्तं लक्ष्यते । अपिः पूर्ववाक्यसमुच्चये । भये जन्तोरीदृशं चित्तं क्रोधे चेदृगिति ज्ञायत इत्यर्थः । स च धन्विनां धानुष्काणामुत्कर्षः । यच्चले चञ्चले लक्ष्ये इषवो बाणाः सिध्यन्ति । चञ्चललक्ष्यवेधका भवन्ति चेति । चः समुच्चये । तेन क्रियासमुच्चयालङ्कारः । ईदृग्विनोदः कौतुकं कुतः कुत्र । न कुत्रापीत्यर्थः । मृगयाया व्यसनत्वाभावे पूर्ववाक्यत्रयं हेतुत्वेनोपात्तमिति काव्यलिङ्गम् । वृत्त्यनुप्रासश्च । शार्दूलविक्रीडितं वृत्तम् । 'जयति स्वामी' इत्यादिनैतदन्तेन दाक्षिण्यं नाम भूषणमुपक्षिप्तम् । तल्लक्षणम् 'चित्तानु-

---

१ गृहीतमृगप्रचारं सूचितश्वापदमरण्यं तत्किमन्यदनुष्ठीयते । किमन्यत्र–किमिति-स्थीयते. २ भग्नोत्साहः. ३ माठ–ढ–व्येन. ४ प्रतिज्ञः. ५ अस्मादनन्तरं–पश्यतु [illegible] इत्यधिकं क्वचित्. ६ [illegible] ७ वैधेयः.

राजा—भद्र सेनापते आश्रमसंनिकृष्टे स्थिताः स्मः। अतस्ते वचो नाभिनन्दामि। अद्य तावत्

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्यावन्धमस्मद्धनुः॥ ६॥

सेनापतिः—यत्प्रभविष्णवे रोचते।

राजा—तेन हि निवर्तय पूर्वगतान्वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः। पश्य।

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद्वमन्ति॥ ७॥

-वर्तनं यत्र तद्दाक्षिण्यमितीरितम्।' इति। प्रकृतिं स्वभावमापन्नः प्राप्तः। -नरनासिकालेलुपस्येति स्वभावोक्तिः। जीर्णर्क्षस्य वृद्धभल्लुकस्य कस्यापि मुखे पतिष्यसि पतसि। 'आशंसायां भूतवच्च।' इति 'चकाराद्वर्तमान-वच्च।' इत्याशंसायां वर्तमानवत्प्रत्ययः। अद्य तावदिति श्लोकशेषः। गाहन्तामिति। महिषाः शृङ्गैर्मुहुर्वारंवारं ताडितमुत्फालितं निपानसलिलमाहावजलं गाहन्तामालोडयन्तु। अनेन त्रासाभावात्प्रकृतिप्रत्यासत्तौ शृङ्गाभ्यां पर्यायेण जलताडनं महिषजातिरुक्ता। एवमग्रिमयोरपि जातिकथनं ज्ञेयम्। 'आहावस्तु निपानं स्यादुपकूपजलाशये।' इत्यमरः। छायायां बद्धं कदम्बकं समूहो येन तन्मृगकुलं रोमन्थमुद्गिलितकवलचर्वणमभ्यस्यतु। कदम्बानां बहुत्वात्कुलमत्रा-न्यपदार्थः। वराहपतिभिः सूकरश्रेष्ठैरित्यनेन तादृशानामस्मन्मृगयासंरम्भगोचर-त्वमिति प्रकाश्यते। अवातशौण्डाः परिणतिभीरवो महिषाः स्वभावभीता मृगा वराहास्तु परावृत्तिचतुराः प्रकारकोविदाश्चेति श्रेष्ठत्वम्। विश्रब्धं साश्वासं पल्वले। 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। मुस्ताक्षतिः मुस्तोत्खननं क्रियताम्। पूर्ववाक्ययोर्विश्वासमन्तरेण तादृशं विशिष्टं कर्म कर्तुमेव न शक्यत इति तत्र विश्वासोऽर्थायातः। अस्मद्धनुश्च शिथिलज्याबन्धमवरोपितज्याबन्धं विश्रामं लभताम्। अव्यापारं तिष्ठत्वित्यर्थः। श्रुतिवृत्त्यनुप्रासौ। स्वभावोक्तिः। पादत्रये क्रियासमुच्चयः। सर्वस्मिन्स्वस्याक्रियत्वादन्येषां नानाक्रियाजननाद्वि-रोधः। वस्तुस्वाभाव्यादाभासत्वं काव्यलिङ्गं व्यङ्ग्यम्। कार्यकारणयोः समका-लत्वेनोक्तेरतिशयोक्तिश्च। वृत्तमनन्तरोक्तम्। 'विश्रामम्' इत्यपाणिनीयः पाठः। 'विश्रान्तिम्' इति पठनीयम्॥६॥ प्रभवति तच्छीलः प्रभविष्णुस्तस्मै राज्ञे। 'भुवश्च' इतीष्णुच्। शमेति। शमः। शान्तिरेव प्रधानं येषां तेषु अत एव तप एव धनं येषां

१ [illegible] ४ विश्रान्तिम्. ५ धनुर्ग्रा०- ६ यथा च. ७ अभिरुन्धन्ति, दूरात्परिहरन्ति. ८ अपि. ९ ते ह्यन्य......दहन्ति.

सेनापतिः—यदाज्ञापयति स्वामी ।

विदूषकः—ध्वंसतां त उत्साहवृत्तान्तः । ( क )

( निष्क्रान्तः सेनापतिः । )

राजा—( परिजनं विलोक्य । ) अपनयन्तु भवत्यो मृगयावेशम् । रैवतक त्वमपि स्वं नियोगमशून्यं कुरु ।

परिजनः—यद्देव आज्ञापयति । ( इति निष्क्रान्तः । ) ( ख )

विदूषकः—कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्मिन्पादपच्छायाविरचितवितानसनाथे शिलातले निषीदतु भवान्यावदहमपि सुखासीनो भवामि । ( ग )

राजा—गच्छाग्रतः ।

विदूषकः—एतु भवान् । ( घ )

( इत्युभौ परिक्रम्योपविष्टौ । )

---

( क ) धंसदु दे उच्छाहवुत्तन्तो । ( ख ) जं देवो आणवेदि ।

( ग ) कदं भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआविरइदविदाणसणाथे सिलाअले णिसीददु भवं जाव अहं वि सुहासीणो होमि ।

( घ ) एदु भवं ।

---

तेषु । दाहजनकं लक्षणया दाहस्वभावं शीघ्रकार्यैकारित्वफलम् । गूढं गुप्तम् अन्यजनादृश्यं तेजोऽस्ति । हि यस्मात्स्पर्शोऽनुकूलो येषां पदादिनाशकत्वात्ते सूर्यवत्कान्ता मनोहरास्ते तपस्विनः । अन्यस्य राजादेस्तेजसाभिभवः पराभवस्तस्मात्तत्स्वीयं तेजो वमन्ति प्रकटयन्ति । क इव । स्पर्शे सत्यदाहकाः सूर्यकान्ताः पाषाणविशेषा यथान्यस्य सूर्यस्य तेजसोऽभितो भवो भवनं प्राप्तिः। संबन्ध इति यावत् । तेन स्वकीयं तेजः प्रकटयन्ति तथेत्यर्थः । श्लेषोपमा । अनुमानं काव्यलिङ्गं च । धानेधने स्निग्ध तेजस्तेज इति छेकश्रुत्यनुप्रासौ । इन्द्रवज्रोपेन्द्रवज्रयोर्भवमुपजातिवृत्तम् । अत्र वमन्तीत्यश्लीलशङ्का न कार्या । यत्र स्ववाच्ये वान्तशब्दः प्रयुज्यते तत्र दोषः । तदुक्तं काव्यादर्शे—'निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति एतदपि तथैवोक्तेः ॥ ७ ॥ स्वं नियोगं द्वारस्थितिरूपम् । निर्मक्षिकं जनराहित्यमित्यर्थः । विरचितेन लतावितानेन वल्लीचन्द्रातपेन दर्शनीयायां रमणीयायाम् । अहं तु कण्डितसंधित्वेन क्षणमप्युपवेशनं विना स्थातुं न शक्नोमि । तवोपवेशनेन

---

१ गच्छ भो-संपदं-दासीए पुत्त । धंसिदा इत्या०. २ इमस्सिं. ३ च्छाआए विरइदलदाविदाणदंसणिज्जाए आसणे ( च्छायायां विरचितलतावितानदर्शनीयायामासने ), च्छाआए अविरलदाविदाणसणाधे आसणे.

राजा—माधव्य अनवाप्तचक्षुःफलोऽसि । येन त्वया दर्शनीयं न दृष्टम् ।

विदूषकः—ननु भवानग्रतो मे वर्तते । ( क )

राजा—सर्वः कान्तमात्मीयं पश्यति । अहं तु तां [ एव ] आश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदूषकः—( स्वगतम् । ) भवतु । अस्यावसरं न दास्ये । ( प्रकाशम् । ) भो वयस्य ते तापसकन्यकाभ्यर्थनीया दृश्यते । ( ख )

राजा—सखे न परिहार्ये वस्तुनि पौरवाणां मनः प्रवर्तते ।

( क ) णं भवं अग्गदो मे वट्टदि । ( ख ) होदु । से अवसरं ण दाइस्सं । भो वअस्स ते तावसकण्णआ अब्भत्थणीआ दीसति ।

विना मम तदत्यन्तमनुचितमिति शीघ्रमुपविशेति भावः । 'राजा—माधव्य अनवाप्तचक्षुःफलोऽसि' इत्यारभ्य तृतीयाङ्कसमाप्तिपर्यन्तं प्रतिमुखसंधिः । तल्लक्षणं तु सुधाकरे—'बीजप्रकाशनं यत्र दृश्यादृश्यतया भवेत् । तत्स्यात्प्रतिमुखम्' इति । तत्र 'अज्जवि से तं एव्व चिन्तअन्तस्स अक्खीसु पभादं आसी ।' 'विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम् ।' इत्यनेन च विदूषकेण दृश्यस्य तत्सखीभ्यामदृश्यस्य च । दशरूपके—'बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश । 'इति । बिन्दुप्रयत्नयोर्लक्षणे यथादिभरते—'प्रयोजनानां विच्छेदे यदविच्छेदकारणम् । यावत्समाप्तिं बन्धस्य स बिन्दुरिति संज्ञितः ॥' इति । यथात्र मृगयावृत्तान्तेन विच्छेदे सति 'राजा—माधव्य अनवाप्तचक्षुःफलोऽसि ।' 'तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि' इत्यादिना । 'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति । परं चौत्सुक्यगमनं प्रयत्नः स प्रकीर्तितः ॥' इति । यथात्र 'राजा—तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः । ' इति । दर्शनीयं मनोरमम् । ननु भवानग्रतो मे वर्तते । भवन्तं मुक्त्वान्यः कः सुन्दर इत्यर्थः । किं त्वाश्रमललामभूतामधिकृत्येति योजनीयम् । ललामं प्रधानम् । 'ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु' इत्यमरः । तत्र क्षीरस्वामी प्रधानेऽपि प्राधान्यं

१ °नीयं वस्तु. २ आत्मानं. ३ अस्मात्प्राक् —धिङ् मूर्ख ।

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुत्सुकः ।

नवामिन्दुकलां लोकः केन भावेन पश्यति ॥

इति क्वचित्पठ्यते । किं स्वस्थान एतदिति सुधीभिर्भाव्यम् ।

४ भो वअस्स जइ सा तवस्सिकण्णआ अणब्भत्थणीआ ता किं ताए दिट्ठाए । ( भो वयस्य यदि सा तपस्विकन्यका अनभ्यर्थनीया तदा किं तया दृष्टया । ); जइ दाव सा तावसकण्णआ अपत्थणीआ ता किं (यदि तावत्सा तापसकन्यका अप्रार्थनीया...).

सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम् ॥ ८ ॥

**विदूषकः**—( विहस्य । ) यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना । (क)

**राजा**—न तावदेनां पश्यसि येनैवमवादीः ।

**विदूषकः**—तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति । (ख)

**राजा**—वयस्य किं बहुना ।

चित्रे निवेश्य परिकल्पितसत्त्वयोगा
रूपोच्चयेन मनसा विधिना कृता नु ।
स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

( क ) जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिडिआए अहिलासो भवे तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा ।

( ख ) तं क्खु रमणिज्जं जं भवदो वि विह्मअं उप्पादेदि ।

व्याख्यातवान् । अनेन सौन्दर्यातिशयो ध्वन्यते । अस्यावसरं वर्णनावसरं न दास्ये । सुरेति । किलेति प्रसिद्धौ । सुरयुवतिर्मेनका तत्संभवम् । मुन्यपत्यता तर्हि कथमित्याह—मुनेरिति । तयोज्झितं त्यक्तं सत्ततोऽधिगतं प्राप्तं मुनेरपत्यम् । तत्रोपमामाह—नवमालिकाकुसुममिवेति । अनयातिशयपेलवत्वं ध्वन्यते । कीदृक् । अर्कस्योपरि च्युतम् । अर्कस्येत्यनेन मृत्युरमानेन तदीयत्वस्यात्यन्तासंभावनीयत्वं व्यज्यते । उपरीत्यनेन शङ्काबीजम् । अधःपतितस्य शङ्कापि नायाति । स्थापनं हि संनिवेशविशेषेण भवतीति च्युतमित्युक्तम् । कदाचित्काकतालीयन्यायेन च्युतस्यापि संनिवेशविशेषः स्यादित्यत आह—शिथिलम् । एतेन तवापि चक्षुर्मात्रगोचरत्व एव तदीयत्वभ्रमोऽपि न भविष्यतीत्युक्तम् । श्रुतिवृत्त्यनुप्रासौ । 'च्युतमभिनवमालिकाप्रसूनमिव' इति पठित्वा प्रयोगप्रक्रमभङ्गः परिहरणीयः ॥ ८ ॥ मुनिसङ्गादनुत्कृष्टत्वं मन्यमानस्य विहस्येत्युक्तिः । यथा कस्यापि पिण्डः खर्जूरविशेषस्तैरुद्वेजितस्य तिन्तिण्यां चिञ्चायामभिलाषो भवेत्तथा स्त्रीरत्नानि परिभवितुं तिरस्कर्तुं शीलं यस्य तस्य भवत इयमभ्यर्थना । पुनःपुनरुच्यमानराजवचनेन यथार्थप्रतीत्याह—तत्खलु निश्चितं रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति । अपिशब्देनास्मदादीनां विस्मयोत्पादने किं वक्तव्यमिति सूचितम् । किं बहुनेत्यनेन प्रत्यङ्गवर्णना कर्तुं न शक्येत्युक्तम् । **चित्र इति** । विधिना ब्रह्मणा चित्र आलेख्ये निवेश्य परिकल्पितसत्त्वयोगा कृतप्राणयोगा नु । 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः ।

१ मल्लिका. २ जानासि येन त्वमेव०. ३ चित्ते ४ योगात्, योगान्. ५ विधिना परिकल्पिता नु;—विहिता कृशाङ्गी; रचिता मनसा कृता नु. ६ तिन्तिडीए (तिन्तिडिकायां) ७ अन्तेउरइ०. ( अन्तःपुरस्त्री० ). ८ परिभोगिणः.

विदूषकः—यद्येवं प्रत्यादेश इदानीं रूपवतीनाम् । ( क )

राजा—इदं च मे मनसि वर्तते ।

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १० ॥

( क ) जइ एव्वं पच्चादेसो दाणिं रूववदीणं ।

यावद्रुचि मार्जनलेखनयोस्तत्र संभवादित्याशयः । रूपाणां समुच्चयः समुदाय- स्त्रिभुवनवर्तिरूपसमुदायः । तेनोपादानकारणेन । मनसा करणेन कृता नु । अत एव करस्पर्शाद्यभावात्तादृशं कान्तिमत्वमेतादृग्लक्षणत्वादिकमिति भावः । अनेन 'यत्स्पर्शासहताङ्गेषु कोमलस्यापि वस्तुनः । तत्सौकुमार्यम्' इति सौकु- मार्यं ध्वनितम् । संदेहालङ्कारः । केचन नुशब्दस्य वितर्कवाचित्वादुत्प्रेक्षां मन्य- न्ते । असंबन्धे संबन्धरूपोभयत्रातिशयोक्तिश्च । क्वचित् 'रूपोच्चयेन घटिता मनसा कृता नु' इति पाठः । तत्र मनसा ध्याता । रूपोच्चयेन घटिता योजिता नु इति योजनीयम् । मनसि ध्यातायाः रूपनिवेशनेन श्लक्ष्णत्वं तादृशकान्तिमत्त्वा- दि व्यज्यते । सा स्त्रीरत्नसृष्टिरुत्कृष्टा स्त्रीसृष्टिः । 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्य- मरः । अपरा जगत्स्त्रीसृष्टिविलक्षणेत्यभेदे भेदरूपातिशयोक्तिः । धातुर्विभुत्वं सामर्थ्यं तस्या वपुश्चानुचिन्त्येत्यपरार्धे हेतुत्वेन योज्यम् । तृतीयचतुर्थचरण- योर्व्यत्ययपाठेन समाप्तपुनरात्तदोषः परिहर्तव्यः । सा स्त्रीसृष्टिरपरा एतद्द्वयविल- क्षणा प्रतिभाति । प्रसिद्धसृष्टेस्ताभ्यामेव निराकरणादुत्प्रेक्षाद्वयस्यात्मना निरा- करणादन्यस्याभावमाशङ्क्य तत्र हेतुत्वेन ल्यबन्तद्वययोजना । तेन ब्रह्मणोऽ- लौकिकसामर्थ्यात्तद्रूपस्य च लोकातिक्रान्तत्वात्तत्सृष्टावन्य एव प्रकारो भविष्य- तीति भावः । काव्यलिङ्गश्रुतिवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् ॥९॥ यद्येवं प्रत्या- देश इदानीं रूपवतीनाम् । 'प्रत्यादेशो निराकृतिः' इत्यमरः । **अनाघ्रात-** **मिति** । अनाघ्रातमकृताघ्राणम् । अनेनामोदसत्ता ध्वन्यते । कररुहैर्नखैरलूनम- च्छिन्नम् । अनेनाक्रान्तत्वम् । अनाविद्धमा समन्ताद्वेधरहितम् । स्थूलवेधनत्वं दोषाय भवति । अथ वानाविद्धमकुटिलम् । कुटिलस्य दुष्टत्वात् । 'आविद्धं कु- टिलं भुग्नम्' इत्यमरः । अनेन निर्दोषत्वम् । नवं मधु क्षौद्रं तत्कालानीतत्वेन नवत्वम् । अनास्वादितरसमगृहीतास्वादम् । तादृक्त्वेनानुभूतरसमित्यर्थः । 'मधु मद्ये पुष्परसे क्षौद्रेऽपि' इत्यमरः । अनेनातिहृद्यत्वम् । केचन मधुशब्देन मद्यं व्याचक्षते । तदसत् । तत्र नवमिति विशेषणं विरुद्धं स्याज्जीर्णस्यैव तस्योत्तमत्वात् । तथा च—'जिण्णसुरा सहीणा' इति । असावेव 'रघौ—पुरा- णमसीधुं नवपात्रं च' इति । अखण्डं पूर्णम् । अनेनात्यन्ताभिलषणीयता । एत-



१ श्रुवि. २ सव्वथा पच्चादेसो क्खु सा रू०.

**विदूषकः**—तेन हि लघु परित्रायतामेनां भवान् । मा कस्यापि तपस्विन इंगुदीतैलचिक्कणशीर्षस्य हस्ते पतिष्याति । ( क )

**राजा**—परवती खलु तत्रभवती । न च संनिहितोऽत्र गुरुजनः ।

( क ) तेण हि लहु परित्ताअदु णं भवं । मा कस्स वि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे पडिस्सदि ।

द्रूपमेतदेवेति मालोपमा । अन्यास्पृष्टत्वमभिन्नो गम्यः सामान्यधर्मः । यद्वाम्लानताविच्छायतोत्कृष्टतानुच्छिष्टता मनोज्ञता एते वाभिन्नगम्याः सामान्यधर्माः। अनाघ्रातमित्यादिकैर्विशेषणैः कन्यात्वेन स्वयोग्यतां सूचयन्पुष्पादिभिरुपमानैः क्रमेण परिभोगयोग्यत कान्तिमत्तामुग्धताहृद्यतोत्तमजनाभिलषणीयता ध्वनिता । अथ पञ्चभिरुपमानपदैर्घ्राणस्य चक्षूरसनेन्द्रियतर्पकत्वमपि ध्वनितम् । पुण्यफलस्य श्रवणरूपत्वात्तेन प्रत्यक्षालङ्कारो ध्वन्यते । विधिर्ब्रह्मा । इह जगति । अनघमदुःखं निष्पापं च । 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः । अमलं मनोज्ञं वा । 'अनघो निर्मलापापमनोज्ञेषु च भेद्यवत् ।' इति विश्वः । तादृशस्यैव तद्भोक्तुः संभवात्। कं भोक्तारमुपस्थास्यत्युपसंक्रमिष्यति । उपगमिष्यतीत्यर्थः । अहं न जाने । स्वदृष्टेरगोचरत्वादेतद्रूपानुरूपतरुणसृष्टेरभावादिति भावः । उपपूर्वात्तिष्ठतेर्मन्त्रकरणाद्यर्थासंभवान्नात्मनेपदम् । अनघममलमिति रूपविशेषणं वा । अथ वानघमिति मधुव्यतिरिक्तपुष्पादेर्विशेषणत्वेन योज्यम् । तेन विशेषणप्रक्रमभङ्गः परिहृतो भवति । आद्ये मनोज्ञं द्वितीयेऽपापं लक्षणयाऽकठोरं तृतीयेऽमलं पञ्चमेऽदुःखमिति योजनीयम् । यद्वानघमिति मालोपमायामभिन्नो वाच्यः सामान्यधर्मः । नवमिति मध्येऽप्युपात्तं सर्वेषां विशेषणत्वेन योज्यम् । 'फलमपि च' इति पाठे व्यस्तं मालारूपकं ज्ञेयम् । भोजस्तु 'पुष्पकिसलयरत्नमधुपुण्यफलानामनाघ्रातमित्यादिविशेषणापादितव्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणाद्व्यतिरेकवद्रूपकम्' इत्याह स्म । अत्र च विशेषणविशेष्यविशेषणक्रमेणैवोपनिबन्धान्न प्रक्रमभङ्गः । श्रुतिवृत्त्यनुप्रासौ । शिखरिणी वृत्तम् ॥ १० ॥ एताभ्यां पद्याभ्यां गुणकीर्तनं नाम चतुर्थ्यवस्थोक्ता। तल्लक्षणं तु 'सौन्दर्यादिगुणश्लाघा गुणकीर्तनमत्र हि' इति । तेन कारणेन लघु शीघ्रम् । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । परित्रायताम् । स्वीयत्वेनाङ्गीकरणमेव परित्राणम् । एनां भवान् । कस्यापि तपस्विनः इङ्गुदी तापसतरुस्तस्य तैलेन मिश्रमत एव चिक्कणं शीर्षं यस्य तस्य हस्ते पतिष्यति तन्मा इति निषेधे । परवती पराधीना । 'परतन्त्रः पराधीनः परवान्नाथवान्' इत्यमरः । तत्रभवती पूज्या । कामिनीरत्नभूतत्वात्पूज्यत्वम् । यतः परवत्त्वं स एव प्रतिच्छन्दनीय इत्यत आह—न चेति । अत्रभवन्तमिति सप्तम्यर्थे द्वितीया । 'सप्तम्या द्वितीया' इति सूत्रेण । उदाहरणं च—'विज्जुज्जोअं मरइ रत्तिं' । विद्युद्द्योतं स्मरति रात्रावित्यर्थः । तेनात्रभवति

१ [illegible] २ सीसस्स आरण्णअस्स.

विदूषकः—अथ भवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः । (क)

राजा—निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु

अभिमुखे मयि संहृतमीक्षणं हसितमन्यनिमित्तकृतोदयम् ।
विनयवारितवृत्तिरतस्तया न विवृतो मदनो न च संवृतः ॥ ११ ॥

विदूषकः—न खलु दृष्टमात्रस्य तवाङ्कं समारोहति । (ख)

राजा—मिथः प्रस्थाने पुनः शालीनतयापि काममाविष्कृतो भावस्तत्रभवत्या । तथा हि ।

(क) अथ भवन्तं अन्तरेण कीदिसो से दिट्ठिराओ । (ख) ण क्खु दिट्ठमेत्तस्स तुह अङ्कं समारोहदि ।

पूज्येऽन्तरेण विशषेण कीदृशस्तस्या दृष्टिरागः । 'अन्तरं रन्ध्रावकाशयोः । मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ ॥' इति हैमः । अत्रान्तरेण तत्रभवन्तमिति द्वितीयेति तु यत्स भ्रम एव । तस्य 'अन्तरान्तरेण' इत्यत्र सूत्रे निपातस्यैव ग्रहणात् । तेनार्थासंगतेः । तथा हि तस्मिन्सूत्रे वृत्तिकारेण व्याख्यातम्—'अन्तरान्तरेणशब्दौ निपातौ साहचर्याद्गृह्येते । तत्रान्तराशब्दो मध्यमाधेयप्राधान्यमाचष्टे । द्वितीयस्तु तच्च विनार्थं च' इति । उदाहृतं च—'अन्तरा त्वां मां च कमण्डलुः । अन्तरेण पुरुषकारं किंचिन्न लभ्यते' इति । प्रकृत एतदर्थद्वयमप्यसंगतमेव । तथा चास्यैव कवेर्मालविकाग्निमित्रे नाटके प्रयोगः—'अचिरप्पवुत्तोवदेसं छलिअं णाम णट्टं अन्तरेण कीरिसी मालविएति णट्टाअरिअं अज्ज गणदासं पुच्छिदुं त्ति' इति । निसर्गादेव स्वभावादेव । 'निसर्गः शीलसर्गयोः' इति विश्वः । अप्रगल्भोऽप्रौढः । यतस्तपस्विकन्याजन इत्यर्थहेतुत्वेन योज्यम् । इति यद्यपि तथापि त्विति श्लोकेनान्वेति । अभिमुख इति । अभिमुखे मयीक्षणमवलोकनं संहृतम् । अनेन शृङ्गारलज्जा ध्वन्यते । अन्यनिमित्तमन्यहेतुकं यथा स्यात्तथा कृत उदयो यस्य । अनेनापि सैव व्यज्यते । एतादृशं हसितम् । तल्लक्षणं मातृगुप्ते—'विकासितकपोलान्तमुत्फुल्लामललोचनम् । किंचिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः ॥' इति । अनेनास्या उत्तमनायिकात्वमपि ध्वनितम् । यदुक्तं तत्रैव—'उत्तमस्य समुद्दिष्टं स्मितं हसितमेव च ।' इति । अनेनानुरागो ध्वनितः । विनयेन वारिता वृत्तिः प्रसरो यस्य सः । विनयलक्षणं पूर्वमुक्तमेव । मदनो न विवृतः । ईक्षणसंहरणेनान्यनिमित्तकृतोदयेन हसितेन च । अनेन मुग्धानायिकात्वमुक्तम् । न च संवृतः । हेलामोट्टायितादेर्भावस्य प्रकाशनात् । विरोधाभासो वृत्त्यनुप्रासश्च । द्रुतविलम्बितं वृत्तम् ॥ ११ ॥ न खलु दृष्टमात्रस्य तवाङ्कं समारोहति । खल्विति जिज्ञासायाम् । 'निषेधवाक्यालंकारजिज्ञासानुनये खलु ।' इत्यमरः । प्रस्थाने गमनारम्भे । 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः । अत एव प्रथमाङ्कान्ते 'सव्याजं विलम्ब्य' इत्युक्तिः । 'मिथोऽ-

१ अप्रगल्भाः तपस्विकन्यकाः २ इङ्गितं ३ कोपो० ४ संवृतो [illegible] तथापि यदि -भूयिष्ठमावि०. ५ अत्र, अत्रभ०.

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

विदूषकः—तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि । ( क )

राजा—सखे तपस्विभिः कैश्चित्परिज्ञातोऽस्मि । चिन्तय तावत्केनापदेशेन पुनराश्रमपदं गच्छामः ।

विदूषकः—कोऽपरोऽपदेशो युष्माकं राज्ञाम् । नीवारषष्ठभागमस्माकमुपहरन्त्विति । ( ख )

राजा—मूर्ख अन्यमेव[३] भागधेयमेते तपस्विनो निर्वपन्ति यो रत्नराशीनपि विहायाभिनन्द्यते । पश्य ।

( क ) तेण हि गहीदपाहेओ होहि । किदं तुए उववणं तवोवणं त्ति पेक्खामि।
( ख ) को[४] अवरो अवदेसो तुम्हाणं राआणं । णीवारच्छट्ठभाअं अह्माणं उवहरन्तु त्ति ।

न्योन्यं रहस्यपि ' इत्यमरः । दर्भेति । तन्वी सा कतिचिदेव द्वित्राण्येव । न तु त्रिचतुराणि । तेनोत्कण्ठातिशयो ध्वनितः । पदानि गत्वाकाण्डेऽनवसरेऽकस्मात्स्थिता । ' काण्डं चावसरे बाणे ' इति धरणिः । तन्वीत्यादेव गमनासहत्वं भविष्यतीत्यत आह—दर्भाङ्कुरेण चरणः क्षत इति । न तु दर्भेण । तस्य सत्त्वे व्याजो न स्यात् । अङ्कुरस्यादृश्यमानतया व्याजसंभवात् । अतोऽङ्कुरपदेन व्याजेन विलम्बितमिति ध्वनितम् । द्रुमाणां शाखास्वसक्तमपि वल्कलं विमोचयन्ती विवृत्तवदनासीत् । अत्र बहुवचने विवृत्तवदनात्वस्य वृत्तिर्व्यक्ता । विरोधाभासो हेतुश्च । श्रुतवृत्त्यनुप्रासौ । रेणरण इति दानिदनेति छेकानुप्रासोऽपि । वसन्ततिलका वृत्तम् । अथानुरागेङ्गितामित्यधिकृत्योक्तं रतिविलासे—' विलम्बस्तु पथि व्याजात्परावृत्त्यापि दर्शनम् । ' इत्यादि ॥१२॥ गृहीतपाथेय इत्युद्योगस्यावश्यकर्तव्यता ध्वनिता । यथा कंचिज्जिगमिषुं प्रति कश्चिद्वदति पाथेयं गृहाणेति तद्वत् । पथि साधु पाथेयम् । ' पथ्यतिथिवसतिस्वपतेर्ढञ् ' इति ढञ् । कृतं त्वयोपवनं तपोवनमिति पश्यामि । उद्देश्यविधेयभावे व्यत्ययो ज्ञेयः । अपदेशेन व्याजेन । ' व्याजोऽपदेशो लक्ष्यं च ' इत्यमरः । सकृदेकवारम् । इत्यनेनोत्कण्ठातिशयो व्यज्यते । नीवारषष्ठभागमस्माकमुपहरन्त्विति । अयमेवापदेश इत्यर्थः । भागधेयो राजग्राह्यो भागः । ' भागरूपनामभ्यो धेयः ' इति स्वार्थे धेयः ।

१ गृहीतपाथेयः कृतासि तया । अतोनुरक्तं तपोवनमिति पश्यामि । २ सकृदप्याश्रमे वसामः. ३ अन्यद्भागधेयमेषां रक्षणे निपतति यद्रत्नरा० भिनन्द्यम. ४ पा. भवं राआ। (तह भवं राजा) राजा—नतः किम् । विदू०—णीवार०. ५ तावसा उप०.

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥

( नेपथ्ये । )

हन्त सिद्धार्थौ स्वः ।

राजा—( कर्णं दत्वा । ) अये धीरप्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

( प्रविश्य । )

दौवारिकः—जयतु जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ । ( क )

राजा—तेन ह्यविलम्बितं प्रवेशय तौ ।

दौवारिकः—एष प्रवेशयामि । ( इति निष्क्रम्य ऋषिकुमाराभ्यां सह प्रविश्य । ) इत इतो भवन्तौ । ( ख )

( उभौ राजानं विलोकयतः । )

प्रथमः—अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः । अथवा उपपन्नमेतदस्मिन् ऋषिभ्यो नातिभिन्ने राजनि । कुतः ।

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति ।

---

( क ) जेदु जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवट्ठिदा ।
( ख ) एसो पवेसेमि । इदो इदो भवन्ता ।

---

यदुत्तिष्ठतीति । वर्णेभ्यो ब्राह्मणादिभ्यो यत्फलमुत्तिष्ठत्युत्पद्यते तत्क्षयि विनाशी । प्रकारसहस्रैरपि न स्थायीति व्यज्यते । आरण्यकास्तपस्विनो नोऽस्माकमक्षय्यमविनाशि तपःषड्भागं ददति । 'क्षय्यजय्यौ शक्यार्थे' इति निपातनात्साधुः । अक्षय्यमिति प्रयत्नसहस्रैरपि न नश्यतीति ध्वन्यते । व्यतिरेकालङ्कारः ॥ १३ ॥ 'चिन्तय' इत्यादिनैतदन्तेन विलासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'विलासः संगमार्थस्तु व्यापारः परिकीर्तितः ।' इति । हन्तेति हर्षे । 'हन्त हर्षेऽनुकम्पायाम्' इत्यमरः । सिद्धार्थौ निष्पन्नप्रयोजनौ राज्ञो दर्शनेनैव । जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिं द्वारस्थानमुपस्थितौ । 'स्त्रीद्वार्द्वारं प्रतीहारः' इत्यमरः । 'भूमिः स्यात्स्थानमात्रके' इति विश्वः । एष प्रवेशयामि । इत इतो भवन्तौ । अहो इत्याश्चर्ये । दीप्तिमतोऽपि तेजोयुक्तस्यापि । नातिभिन्ने सदृशे । नञ्समासः । सादृश्यमेव श्लोकेनाह—अधीति । अमुना । अपिशब्दात्सर्वत्र मुनिः । सर्वैर्ब्रह्मचारिप्रमुखैर्भोग्य आश्रयणीयः सर्वभोग्यस्तस्मिन्नाश्रमे वसतिर्गृहमध्याक्रान्ता अङ्गीकृता । मुनिपक्षे सर्वैर्वृद्धभिर्भोग्यः पाठार्थमाश्रयणीयस्त-



---

१ धनम्. २ ऋषिकल्पे, एतद्दृषिभ्यः, तपस्विभ्यः.

अस्यापि द्यां स्पृशति वशिनश्चारणद्वंद्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १४ ॥

द्वितीयः—गौतम अयं स बलभित्सखो दुष्यन्तः ।

प्रथमः—अथ किम् ।

द्वितीयः—तेन हि

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुरा बद्धवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥ १५ ॥

उभौ—( उपगम्य । ) विजयस्व राजन् ।

राजा—( आसनादुत्थाय । ) अभिवादये भवन्तौ ।

उभौ—स्वस्ति भवते । ( इति फलान्युपहरतः । )

राजा—( सप्रणामं परिगृह्य । ) आज्ञापयितुमिच्छामि ।

स्मिन्नाश्रमे मठे वसतिः स्थानमङ्गीकृतम् । 'आश्रमो व्रतिनां मठे । ब्रह्मचर्यादिचतुष्के' इति, 'वसतिः स्यादवस्थाने निशायां सदनेऽपि च' इति च हैमः । उक्तं च पद्मपुराणे—'यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः । तथा गृहस्थमाश्रित्य वर्तन्ते चतुराश्रमाः ॥' इति । रक्षायोगात्प्रजापरिपालनात् । तपो लोकोत्तरं धर्मम् । संचिनोति । रक्षार्थं शरीररक्षार्थम् । योगोऽष्टाङ्गस्तन्निमित्तम् । तपश्चान्द्रायणादि । संचिनोति करोति । चारणानां द्वंद्वं स्त्रीपुरुषयुगलम् । तेन गीत इति विशेषणमनुवाद्यम् । चारणलक्षणं रत्नाकरे—'किंकिणीवाद्यवेदी च वृतो विकटनर्तकैः । मर्मज्ञः सर्वरागेषु चतुरश्चारणो मतः ॥' इति । केवलं राजपूर्वो मुनिरिति शब्दः । राजर्षिरित्यर्थः । द्यां स्वर्गं स्पृशति । 'द्यौः स्वर्गसुरवर्त्मनोः' इति विश्वः । श्लेषो व्यतिरेकश्च ॥ १४ ॥ बलभित्सखः । अनेन वक्ष्यमाणविज्ञापसारणक्षमत्वं ध्वन्यते । नैतदिति । उदधिश्यामसीमामित्युक्त एकदेशेपि तत्संभवात्कृत्स्नामित्युक्तम् । नगरपदेनात्यन्तदैर्घ्यं ध्वनितम् । परिघोऽर्गलः । 'परिघो योगभेदेऽस्त्रे मुद्गरेऽर्गलघातयोः ।' इति विश्वः । तद्वत्प्रांशू दीर्घौ बाहू यस्य सः । अनेन भुजसहायेन सर्वे शत्रवो हता इति कारणे वक्तव्ये समस्तोर्वीजयलक्षणं कार्यमेवोक्तमिति पर्यायोक्तालङ्कारः । सुरयुवतय इति युवतिग्रहणं तासामतिभीरुत्वाद्बन्दीदुःखाद्यनुभवात्स्त्रीत्वेन युद्धाभिमानाद्यभावाच्च । प्रथममस्य धनुषो ग्रहणादस्यैव प्राधान्यं द्योत्यते । पौरुहूते च वज्र इति पश्चादुपदेशाद्गौणत्वं ध्वन्यते । आशंसन्त इति 'शसि इच्छायाम्' इत्यस्येदितो रूपम् । 'शंस स्तुति-

१ सुरसमितयः, सुरयुवतयः; २ त्यक्तभोगाः, सक्त वैराः. ३ आज्ञा[illegible]मिच्छामि; भवा[illegible] श्रोतुमिच्छामि; आगमनकारणं [illegible] ज्ञातुमिच्छामि ।

उभौ—विदितो भवानाश्रमसदामिहस्थः । तेन भवन्तं प्रार्थयन्ते ।

राजा—किमाज्ञापयन्ति ।

उभौ—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्नमुत्पादयन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा—अनुगृहीतोऽस्मि ।

विदूषकः—( अपवार्य । ) एषेदानीमनुकूला तेऽभ्यर्थना । ( क )

राजा—( स्मितं कृत्वा । ) रैवतक मद्वचनादुच्यतां सारथिः । सबाणासनं रथमुपस्थापयेति ।

दौवारिकः—यद्देव आज्ञापयति । ( इति निष्क्रान्तः । ) ( ख )

उभौ—( सहर्षम् । )

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥

राजा—( सप्रणामम् । ) गच्छतां पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

---

( क ) एसा दाणिं अणुऊला ते अब्भत्थणा । ( ख ) जं देवो आणवेदि ।

---

हिंसनयोः' इत्यस्य तु शंसतीति । तथासावेव रघौ—'इत्याशशंसे करणैरबाह्यैः' इति । वृत्त्यनुप्रासः । समुच्चयालङ्कारः । वज्रधनुषोर्द्व्ययोः समुचितत्वात् । नैतच्चित्रमित्यर्थे प्रत्युत्तरार्थवाक्यार्थस्य हिशब्देन हेतुत्वोपादानात्काव्यलिङ्गमुपमा च । उभयोर्मन्दाक्रान्ता वृत्तम् । आभ्यां युद्धवीरो ध्वन्यते । अत्र विभावानुभावावुपनिबद्धौ । व्यभिचार्यादयः स्वयमूहनीयाः ॥ १५ ॥ आज्ञाप्यतामित्युक्ते तौ प्रति नियोगः कृतः स्यादित्याज्ञापयितुमिच्छामीत्युक्तम् । प्रार्थयन्त आश्रमसद इति विभक्तिविपरिणामेन संबध्यते । तत्रभवतः पूज्यस्य । क्वचित् 'तत्र भगवतः' इति पाठः । तत्रासंनिधानादिति संबन्धः । बाणासनं धनुः । अनुकारिणीति । पूर्वेषां पुरुप्रभृतीनामनुकारिणि सदृशे । चारित्र्येण रूपेण शौर्येण दानेन पावित्र्येणेत्यादि ज्ञेयम् । युक्तरूपमतिशयेन युक्तम् । प्रशंसायां रूपप् । आपन्ना आपद्युक्ताः । 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः । तेषां यदभयं तदेव सत्रं यज्ञविशेषः । तत्र दीक्षिताः कृतदीक्षा इति रूपकम् । अनेना[illegible]वतव्यत्वं भयापसारणस्य ध्वन्यते । खलु यस्मादित्यनेन पूर्वार्धं प्रति हेतुत्वात्काव्यलिङ्ग-

---

१ ०निहस्थस्नपार्स्वाभः ।...मभ्यथयन्त. २ तपो. ३ ०यन भ युधसध्रीचा. ४ एतन्नास्ति क्वचित्. ५ अम (एसा) दाणि द (भवदो) अनुऊलो गमणवाओ (गमनम्): अपराभ्यर्थना; अपरा प्रेषणा, अनुरूपा तेऽभ्यर्थना.

उभौ—विजयस्व । ( इति निष्क्रान्तौ । )

राजा—माधव्य अप्यस्ति शकुन्तलादर्शने कुतूहलम् ।

विदूषकः—प्रथमं सपरिवाहमासीत् । इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः । ( क )

राजा—मा भैषीः । ननु मत्समीपे वर्तिष्यसे ।

विदूषकः—एष राक्षसाद्रक्षितोऽस्मि । ( ख )

( प्रविश्य । )

दौवारिकः—सज्जो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः । ( ग )

राजा—( सादरम् । ) किमम्बाभिः प्रेषितः ।

दौवारिकः—अथ किम् । ( घ )

राजा—ननु प्रवेश्यताम् ।

दौवारिकः—तथा । ( इति निष्क्रम्य करभकेण सह प्रविश्य । ) एष भर्ता । उपसर्प । ( ङ )

करभकः—जयतु जयतु भर्ता । देव्याज्ञापयति । आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति । तत्र दीर्घायुषावश्यं संभावनीयेति । ( च )

---

( क ) पढमं सपरिवाहं आसि । दाणिं रक्खसवुत्तन्तेण बिन्दू वि णावसेसिदो ।
( ख ) एस रक्खसादो रक्खिदो ह्मि ।
( ग ) सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि । एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो ।
( घ ) अह इं । ( ङ ) तह । एसो भट्टा । उवसप्प ।
( च ) जेदु जेदु भट्टा । देवी आणवेदि । आआमिणि चउत्थदिअहे पउत्तपारणो मे उववासो भविस्सदि । तहिं दीहाउणा अवस्सं संभाविदव्व त्ति ।

---

मपि ॥ १६ ॥ अनुपदं भवत्पदन्यासं लक्ष्यीकृत्य । अनन्तरमेवेत्यर्थः । 'पादन्यासे पादमुद्रा सुप्तिङन्ते पदं भवेत् ।' इति क्षीरस्वामी । सपरिवाहमासीत् । जलनिर्गमनमार्गवाची परिवाहशब्दोऽल्पस्य लक्षको निर्गमनसंबन्धेनाधिक्यं लक्षयति । यदधिकं भवति तन्निर्गच्छति । बिन्दुरपि नावशेषितः । अत्रापि बिन्दुशब्दोऽल्पस्य लक्षकः । पूर्वमुपवासवचनश्रवणमस्य दुःखदं भविष्यतीति प्रवृत्तपारण

---

१ दर्शनकौतुकम्. २ समापवर्तिना त्वया भवितव्यम्. ३ तव चक्कवट्टीभूदो म्हि. ४ पुत्तपिण्डपालणो नाम. ५ अम्हे सम्भावइदव्व ( वयं संभावयितव्याः ) लि. अवस्सं संनाहइदण होदव्वति.

राजा—इतस्तपस्विकार्यम् । इतो गुरुजनाज्ञा । द्वयमप्यनतिक्रमणीयम् । किमत्र प्रतिविधेयम् ।

विदूषकः—त्रिशङ्कुरिवान्तरा तिष्ठ । ( क )

राजा—सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो यथा ॥ १७ ॥

( विचिन्त्य । ) सखे त्वमम्बया पुत्र इति प्रतिगृहीतः । अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति ।

विदूषकः—न खलु मां रक्षोभीरुकं गणयसि । ( ख )

राजा—( सस्मितम् । ) कथमेतद्भवति संभाव्यते ।

विदूषकः—यथा राजानुजेन गन्तव्यं तथा गच्छामि । ( ग )

राजा—ननु तपोवनोपरोधः परिहरणीय इति सर्वाननुयात्रिकांस्त्वयैव सह प्रस्थापयामि ।

विदूषकः—( सगर्वम् । ) तेन हि युवराजोऽस्मीदानीं संवृत्तः । ( घ )

राजा—( स्वगतम् । ) चपलोऽयं बटुः । कदाचिदस्मत्प्रार्थनामन्तःपुरेभ्यः कथयेत् । भवतु । एनमेवं वक्ष्ये । ( विदूषकं हस्ते गृहीत्वा ।

---

( क ) तिसङ्कू विअ अन्तरा चिट्ठ । ( ख ) ण क्खु मं रक्खोभीरुअं गणेसि ।
( ग ) जह राआणुएण गन्तव्वं तह गच्छामि । ( घ ) तेण हि जुवराओ म्हि दाणिं संवुत्तो ।

---

इति प्रथममुपन्यस्तम् । प्रतिविधेयं प्रतिकर्तव्यम् । त्रिशङ्कुरिवान्तराले तिष्ठेत्यादिषु विदूषकवचनेषु हास्यप्रतीतिः स्फुटैव । एतत्स्थायी हास्य इति ज्ञेयम् । [ अत्र रामायणम्–अवाक्शिरास्त्रिशंकुश्च तिष्ठत्वमरसंनिभः । अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ॥ इति । ] कृत्ययोरिति । कार्ययोर्मनसो द्वैधीभवनं नामैकत्रापर्यवसानम् । उपमाने तु मार्गद्वयगमनम् । उभे भिन्ने अपि समानधर्मार्थमतिशयोक्त्यैकत्वेनाध्यवसिते । पुरोऽग्रे शैले प्रतिहतमवरोधं प्राप्तं स्रोतोवहो नद्याः स्रोत इव । अन्यदल्पं स्रोतः शैलावरुद्धं तिष्ठेदेवेति संबन्धिपदोपादानम् । तत्रापि नद्यादिपदाभावेन यद्विशिष्टस्य ग्रहणं तेन महानदीत्वं ध्वनितम् । वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः । उपमा च ॥ १७ ॥ भवति त्वयि । आनुयात्रिकान्सहागतान् । युवराजः । अस्मीत्यहमर्थे । इदानीं संवृत्तः । अन्तःपुरेभ्यस्तात्स्थ्यात्स्त्रीभ्यः । विदूषकं प्रत्याययितुं

---

१ उभयमप्यनुल्लंघनीयं मया । २ शैलैः. ३ स्रो–स्रौ–तोवहं, त्रिस्रोतसः. ४ व्यग्रतामस्माकमावेद्य, ०व्याप्रताः स्म इत्यावेद्य. ५ भो महाब्राह्मण कथमेत०, भवान्–नीय-६ आत्म०. ७ ०राले. ८ गमिस्सं ( गमिष्यामि । ).

प्रकाशम् । ) वयस्य ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य ।

क्व वयं क्व परोक्षमन्मथो मृगशावैः सममेधितो जनः ।
परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः ॥ १८ ॥

विदू०— अथ किम् । ( अह इं । )

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ।

## तृतीयोऽङ्कः ।

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

शिष्यः—अहो महानुभावः पार्थिवो दुष्यन्तः । यत्प्रविष्टमात्र एवाश्रमं तत्रभवति निरुपद्रवाणि नः कर्माणि संवृत्तानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः ।
हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥ १ ॥

---

तापसकन्यकायामित्युक्तिः । **क्व वयमिति** । वयं क्व । वयमित्यर्थान्तरसंक्रमितवाच्यम् । तेनानेकराजोपचारयुक्तत्वं नानावैदग्धीकुशलत्वं च व्यज्यते । मृगशावैर्हरिणबालकैः समं सहैधितो वृद्धिं प्राप्तः । अत एव परोक्षमन्मथो दूरमुक्तमनोभवः । कामकलानभिज्ञ इत्यर्थः । एधितपदार्थसमर्थनार्थं शावपदम् । तेन नावकरत्वम् । परिहासेन विविधं जल्पितं यत्र तद्वचः शकुन्तलायामनुरागकथनरूपं परमार्थेन न गृह्यताम् । पुनरुक्तवदाभासः । वृत्त्यनुप्रासः । काव्यलिङ्गं पदार्थवाक्यार्थरूपेण । पूर्वार्धे विषमस्यैको भेदः सहोक्तिश्च । वैतालीयं वृत्तम् । अन्ये त्वर्थसमं प्रबोधितं मन्यन्ते ॥ १८ ॥ 'राजा—स्वगतम्' इत्यादिनैतदन्तेन संवृतिर्नाम संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु–'संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत् ।' इति । इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां द्वितीयोऽङ्कः समाप्तः ।

---

महाननुभावः प्रभावो यस्य सः । 'अनुभावः प्रभावेऽपि' इत्यमरः । प्रविष्टेति । तत्रभवति पूज्ये । अत्र राक्षसनिराकरणे कारणे वक्तव्ये कार्यरूपकर्मनिरुपद्रवतोक्तेः पर्यायोक्तालङ्कारः । **का कथेति** । बाणसंधाने का कथा । शरसंधानं नापेक्षत इत्यर्थः । धनुषो ज्याशब्देनैव विघ्नान्दूरतोऽपोहति निराकरोति । केनेव । हुंकारेणेवेति । एकदेशविवर्तिन्युपमा । तेन राज्ञो गणपत्युपमानत्वं गम्यते । अथ वा स ज्याशब्देनैव दूरतो विघ्नानपोहति । कथंभूतेनेव । धनुषो हुंकारेणेवेति । समासोक्तिगर्भोत्प्रेक्षा धनुषश्चेतनत्वारोपात् । अनयान्यासेन रिपुनिबर्हणं ध्वनितम् । अस्मिन्पक्षे धनुर्ज्याशब्दयोरर्थपौनरुक्त्यं परि-

---

१ महर्षि०. २ ०कायां शकुन्तलायाम्. ३ सह वर्धितः. ४ विकल्पितं. ५ महाप्रभावः. ६ राजा. ७ ०मात्र एव सारथिद्वितीये तत्रभवति इदमाश्रमपदं निवृत्तरक्षोविघ्नं संवृत्तम् । निरुपप्लवानि च नः कर्माणि सिद्धानि । ८ ०भवति राजनि.

यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य उपहरामि । ( परिक्रम्यावलोक्य च । आकाशे । ) प्रियंवदे कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते । ( श्रुतिमभिनीय । ) किं ब्रवीषि । आतपलङ्घनाद्बलवदस्वस्था शकुन्तला । तस्याः शरीरनिर्वापणायेति । तर्हि यत्नादुपचर्यताम् । सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि ।

( इति निष्क्रान्तः । )

विष्कम्भकः ।

( ततः प्रविशति कामयमानावस्थो राजा । )

राजा—( सचिन्तं निःश्वस्य । )

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥ २ ॥

---

हृतं भवति ॥ १ ॥ आकाश इति । तल्लक्षणं तु दशरूपके—'किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम्' इति । नाट्यधर्मोऽयम् । आकर्ण्याकर्णनमभिनीय । विष्कम्भकः । तल्लक्षणं तु सुधाकरे—'तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः । अमुख्यपात्ररचितः संक्षेपैकप्रयोजनः ॥ द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीचमध्यमैः । शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा ॥' इति । तदयमेककृतः शुद्धः । अत्र दुष्यन्तस्याश्रमाभ्यन्तरागमनं कृततपस्विकार्यत्वेन निराकुलत्वं भूतसूचनं शकुन्तलाया आतपलङ्घनव्याजेन विरहावस्थाकथनं भविष्यत्सूचनमिति ज्ञेयम् । कामयमानो विरही तस्येवावस्था यस्य स तथा । क्वचित् 'कामयानः' इति पाठः समानार्थः । यद्वा कामस्य यान उद्गमन आरोहणे वा या अवस्था अभिलाषाद्यास्ता यस्य सः । जाने इति । अहं तपसो वीर्यं जाने । प्रसह्य धर्षणीया न भवतीति भावः । प्रसह्य धर्षणीयत्वाभावे कार्ये प्रस्तुते यदप्रस्तुतं तपसो वीर्यं जान इति कार्यमुक्तं साप्रस्तुतप्रसंशा । तर्हि सैवागमिष्यतीत्यत आह सेति । सा बालाप्रगल्भा परवती पराधीनेत्युभयं विधेयम् । अयं व्याजो भविष्यतीत्याह—इति मे विदितम् । मे इति मयेत्यर्थे निपातः । तदुक्तं वामनाचार्यैः—'ते मे शब्दौ निपातौ त्वया मयेत्यर्थे ।' इति । नपुंसके भावे क्तस्य शेषविवक्षायां चेति वा संबन्धे षष्ठी । एवं यद्यपि शकुन्तलायाः सकाशादिदं मया सह संवद्धं मां च परित्यज्य क्षणमात्रपरिचित आसक्तामिति निर्ह्रीकं हृदयं निवर्तयितुं नालं न समर्थोऽस्मि । स्वयं न निवर्तते मयाप्यशक्यं निवर्तनमित्यर्थः । वेदनाक्रियाया हृदयनिवर्तनक्रियायाश्च विरोधः ।

---

१ नयामि. २ आकर्ण्य. ३ दाह०. ४ प्रियंवदे यत्ना०, उपक्रम्यताम्; त्वरिततरं गम्यताम् । सा हि खलु भग० कुल०; तत्रभवतः कुल०. ५ समदनावस्थः. ६ न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम् । इ० पा०.

( मदनबाधां निरूप्य । ) भगवन्कुसुमायुध त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः । कुतः

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ३ ॥

अथ वा ।

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ ४ ॥

---

तदाभासस्तु रतिस्वाभाव्यात् । श्रुतिवृत्त्यनुप्रासौ ॥ २ ॥ मदनबाधां निरूप्येति । लोलितेन शिरसा दोलेन हस्तकेन शून्यया दृष्ट्येत्यादि ज्ञेयम् । विश्वसनीयाभ्यामित्यत्रोपात्तविशेष्यार्थो हेतुत्वेनोपात्तोऽवगन्तव्यः । कामिजनसार्थो विरहिसमूहः अतिसंधीयते वञ्च्यते । तदेवाह । तवेति । कुसुमशब्देनात्यन्तपेलवत्वं ध्वनितम् । कुसुमशरस्य भावः कुसुमशरत्वम् । अयथार्थम् । तेन विपरीतार्थमित्यर्थः । 'तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते' इति विरुद्धार्थोऽत्र नञ् । मद्विधेषु विरहिष्वित्यर्थः । अत्रापि मयीति विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा । अयथार्थत्व उत्तरवाक्यार्थं हेतुत्वेनाह—विसृजतीति । यत इन्दुः हिमं गर्भे येषां तैः मयूखैः किरणैरग्निं विसृजति किरति । अवज्रसारान्वज्रसारान्करोषि वज्रसारीकरोषि । यद्वा वज्रसारीकरोषि दृढीकरोषि । काव्यलिङ्गं रूपकमुपमा । क्रमेण हिमगर्भैरग्निमिति गुणद्रव्ययोर्विरोधः । विप्रलम्भस्वाभाव्यादाभासत्वं चूर्णिकया श्लोकपूर्वार्धे यथालंकारः । कुसुमेषु यद्वाणत्वमारोपितं तद्विरहदुःखदत्वेन प्रकृतोपयोगीति परिणामश्च । 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ।' इति तल्लक्षणात् । त्वंत्वेति मिन्दोर्मिदमिति छेकवृत्त्यनुप्रासौ । मालिनीवृत्तम् । उत्तरार्धे क्रमप्रक्रमभङ्गो विरहिणो राज्ञो वचनमिति परिहर्तव्यः । 'त्वमिह कुसुमबाणान्वज्रसारान्विधत्से विसृजति स च वह्निं शीतगर्भैर्मयूखैः' इति वा पाठः । अत्र च पाठे शीतपदोपादानादुद्देश्यप्रतिनिर्देश्ययोरेकपदोपादानलक्षणो गुणः । इन्दुशब्दानुपादानात्कथितपददोषाभावश्च स्वीकृतो भवति । श्लोके च यथासंख्यालङ्कारः ॥ ३ ॥ अनिशमिति । मकरकेतुः कामः । अनिशं

---

१ मदनस्य बाधां निरूप्य सासूयं; निरूपयन्. २ अतःप्राक् भगवन् कामदेव न ते मय्यनुक्रोशः । कुतश्च ते-भगवन् मन्मथ कुतस्ते—कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत् । ( विचिन्त्य । ) आं ज्ञातम् ।

अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमित्थमुष्णः ॥

३ अस्मात्परं–भगवन् कन्दर्प एवमुपालब्धस्य ते ( ०मुपालब्धस्यते ) न मां प्रत्यनुक्रोशः ।

वृथैव संकल्पशतैरजस्रमनङ्ग नीतोसि मया विवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे मय्येव ( योग्य- ) युक्तस्तव बाणमोक्षः ॥
इत्यधिकं पुस्तकान्तरे ।

( परिक्रम्य । ) क नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातः श्रमक्लान्त-मात्मानं विनोदयामि । ( निःश्वस्य । ) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् । यावदेनामन्विष्यामि । ( सूर्यमवलोक्य । ) इमामुग्रातप-वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति । तत्रैव तावद्गच्छामि । ( परिक्रम्य संस्पर्शं रूपयित्वा । ) अहो प्रवातसुभगोऽयमुद्देशः ।

शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ ५ ॥

---

रुजं पीडामावहन् जनयन् अपि मेऽभिमतो मान्यः । यदि इति एवं स्यात् । मदिरे आयते च नयने यस्याः तां शकुन्तलामधिकृत्य विपयीकृत्य मां प्रहरति । मदिर-शब्दो व्याख्यास्यते ॥ ४॥ संस्थितेऽवसिते । सदसि साधवः सदस्यास्तैरुपद्रष्टृभिः । ‘ सदस्या विधिदर्शिनः ’ इत्यमरः । क नु खलु विनोदयामीत्यन्वयः । विनोदेन कौतुकेन क्लेशमपहरामीति भावः । अन्यत्र क्वचिदपि विनोदनाभावान्निःश्वस्येत्युक्तिः । तत्र दीर्घत्वमुष्णत्वं विरहित्वादत्रसेयम् । अन्यथैतदुक्तेरेव वैयर्थ्यात्तस्य स्वभावत एव संभवात् । अन्यत्किं खलु शरणं रक्षकम् । न किंचिदित्यर्थः । ‘ ततः प्रविशति ’ इत्यादिनैतदन्तेनोद्वेगो नाम पञ्चम्यवस्था सूचिता । तल्लक्षणं तु—‘ मनसः कम्प उद्वेगः ’ इति । मालिनीति नदीसमाख्या । ‘ यावदेनाम् ’ इत्यादिना ‘ गच्छामि ’ इत्यन्तेन परिसर्पो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—‘ दृष्टनष्टानुसरणं परिसर्प इतीरितः ’ इति । अहो इति । अकस्माद्वातस्पर्शसंजातसुखेनाश्चर्यम् । प्रकृष्टो वातस्तेन सुभगो मनोहरः । स सुभगो भवतीति कार्यकारणसंबन्धेन मनोज्ञत्वं लक्षयन्विरहितमनोविनोदनत्वादिकं ध्वनति । शक्यमिति । एतादृशः पवनोऽनङ्गतप्तैरङ्गैरविरलं गाढं यथा स्यादेवमालिङ्गितुं शक्यम् । मालिनीतरं-गाणामित्यनेन तरंगोत्पादनोक्तेर्मन्दत्वं ज्ञेयम् । अत्र प्रियादर्शनेनात्मविनोदन-कार्यमारभमाणस्य पवनोऽपि तत्कार्यत्वे सहायेनोपात्त इति समाहितालंकारः । ‘ कार्यारम्भे सहायाप्तिः ’ इति तल्लक्षणात् । अत्र मालिमालीति अङ्गचतुष्टयस्यो-पादानाच्छेकानुप्रासः । श्रुत्यनुप्रासस्य त्वनेन सहैकवाचकानुप्रवेशलक्षणः संकरः । वृत्त्यनुप्रासश्च । अरविन्दवन्मनोज्ञः शीतलः पवनः पवित्रः सखालिङ्गनेन सुख-मुत्पादयतीति समासोक्तिरपि । ‘ सुगन्धौ च मनोज्ञे च वाच्यवत्सुरभिः स्मृतः । ’

---

१ सखेदं परि०. २ निरस्तविघ्नैस्तपस्विभिः. ३ खिन्नम्. ४ अस्मात्परं ( परिक्रम्याव-लोक्य च । ) अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि । कुतः ।
सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः ।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः ॥ ( स्पर्शं रूप० )
इत्यधिकं पठ्यते कैश्चित् । ५ शक्यो०. ६ सुभगः. ७ मदनग्लानिरङ्गैः पा० नः. निर्दयमा०.

( परिक्रम्यावलोक्य च । ) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया शकुन्तलया भवितव्यम् । तथा हि । ( अधो विलोक्य । )

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ६ ॥

यावद्विटपान्तरेणावलोकयामि । ( परिक्रम्य तथा कृत्वा । सहर्षम् । )

इति विश्वः । ननु पवनस्य सर्वतोवप्युद्दीपकत्वात्तस्य विरहित्वात्पवन आलिङ्गितुं शक्यमिति तस्य मनोविनोदहेतुत्वं कथमिति चेत् । 'इमामुग्रातपां वेलां मालिनीतीरेषु शकुन्तला गमयति' इति पूर्वमुक्तेरत्र च मालिनीतरंगाणां कणवाहीत्युक्तेर्नायिकासंस्पृष्टत्वं व्यज्यते । तेन विनोदकारित्वमुक्तमेव । अनेनैवान्यत्राप्युक्तम्—'आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ।' इति । ननु 'शकिसहोश्च' इति कर्मणि यकि कृते सह्यं शक्यमिति रूपम् । तेन सह पवनस्य भिन्नलिङ्गस्य सामान्याधिकरण्यं कुत इति चेन्न । महाभाष्यवचनात्सिद्धम् । 'शक्यं च श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्' इति । तथा च वामनसूत्रम्—'शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् ।' इति ॥ ५ ॥ **अभ्युन्नतेति** । पुरस्तात्पादाग्रभागेभ्युन्नता । उन्नतत्वं च सापेक्षमिति पश्चाद्भागापेक्षयोन्नतत्वं ज्ञेयम् । पश्चात्पार्ष्णिदेशे जघनगौरवान्नितम्बगौरवात् । 'जघनं कटौ । स्त्रियः श्रोणिपुरोभागे' इति हैमः । अवगाढा निम्नेति स्वभावोक्तिः । प्रतिविम्बितपदपङ्क्तिः । 'पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपि ।' इति विश्वः । अस्य वेतसलतामण्डपस्य । पाण्डुः सिकता यत्र तस्मिन् । एतेन तत्प्रतिबिम्बयोग्यत्वं ध्वनितम् । पाण्डुशब्देनोद्दीपकत्वम् । 'यावद्रम्यमुज्ज्वलं च' इत्युक्तेः । द्वारे दृश्यते । तत्प्रवेशसूचनार्थं द्वारग्रहणम् । अनेन पथा लतामण्डपं प्रविष्टेति कारणे वक्तव्ये यत्तत्कार्यरूपपदपङ्क्तिवर्णनं तत्पर्यायोक्तम् । हेतुश्च । अत्र राजा लतामण्डपद्वारि न गतोऽस्ति । तत्पृष्ठभाग एवास्ति । अत एव पदपङ्क्तौ दृष्टिः पतिता । पदपाङ्क्तिश्च प्रवेशसूचिका । अत एव पूर्वं पुरोभागस्य पश्चात्पश्चाद्भागस्य वर्णनमिति वर्ण्यक्रमभङ्गो नाशङ्कनीयः । भोजेन तु 'प्रत्यक्षमक्षजं ज्ञानम्' इति प्रत्यक्षालंकारोऽङ्गीकृतः । उदाहृतं च—'वीक्ष्यते स्म शनकैर्नववध्वा' इति । तेन पदपङ्क्तिर्दृश्यत इति प्रत्यक्षालंकारः । 'सदृशात्सदृशज्ञानमुपमानं द्विधेह तत् । स्यादेकमनुभूतेर्थेऽननुभूते द्वितीयकम् ॥' इति । तेनैवोपमानालंकार उक्तः । तेनात्राप्यभ्युन्नतेत्यादिविशिष्टपदपङ्क्तौ तस्या इयमिति ज्ञानं सोऽयमनुभूतार्थविषय उपमानालंकारः । अथ च विशिष्टपङ्क्त्या वेतसगृहे तत्सद्भावादनुमानालंकारोऽपि । यदाहुः—'अपि चास्त्यनुमानेऽपि सादृश्यं लिङ्गिलिङ्गिनोः । पदेन यत्र कुब्जेन कुब्जपादोऽनुमीयते ॥' इति । श्रुत्यनुप्रासश्च ॥ ६ ॥ विटपान्तरेण शाखावकाशेन ।

अये लब्धं नेत्रनिर्वाणम् । एषा मे मनोरथप्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामन्वास्यते । भवतु । श्रोष्याम्यासां विश्रम्भकथितानि । ( इति विलोकयन्स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

**सख्यौ**—( उपवीज्य । सस्नेहम् । ) हला शकुन्तले अपि सुखायते ते नलिनीपत्रवातः । ( क )

**शकुन्तला**—किं वीजयतो मां सख्यौ । ( ख )

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः । )

**राजा**—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । ( सवितर्कम् । ) तत्किमयमातपदोषः स्यादुत यथा मे मनसि वर्तते । ( साभिलाषं निर्वर्ण्य । ) अथ वा कृतं संदेहेन ।

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं किमपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥ ७ ॥

---

( क ) हला सउन्दले अवि सुहाअदि दे णलिणीपत्तवादो ।
( ख ) किं वीअअन्ति मं सहीओ ।

---

'अन्तरमवकाशावधि–' इत्यमरः । नेत्रनिर्वाणं नयनानन्दमित्यतिशयोक्तिः । नायिकालक्षणस्य विषयस्य निगीर्णत्वात् । मनोरथप्रियतमेति रतेरनिर्वाहात् । विश्रम्भकथितानि विश्वासभणितानि । 'समौ विश्रम्भविश्वासौ' इत्यमरः । यथोक्तव्यापारा । मदनबाधया शीतलशयनतलनिपतनादिर्व्यापारः । अपीति प्रश्ने । वीजयतो मां सख्यौ । अनेन तापाधिक्यं तेनान्यविषयासंवेद्यत्वं च ध्वनितम् । विषयनिवृत्तिश्चावस्थोक्ता । अनेन विधूतं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'विधूतं स्यादरतिः' इति । विषादं नाटयित्वेति । धुतेन शिरसा विषण्णया दृष्ट्या चेति ज्ञेयम् । 'या दृष्टिः पतितापाङ्गा विस्तारितपुटद्वया । निमेषिण्यस्ततारा च विषण्णा सा विषादिनी ॥' इति । परस्परमवलोकयत इति शङ्कासूचकम् । बलवदधिकम् । कृतमलमित्यर्थः । 'कृतमिति निवारणनिषेधयोः' इति भोजकृतसरस्वतीकण्ठाभरणवृत्तौ । **स्तनेति** । स्तनयोर्न्यस्तमुशीरं नलदानुलेपो यत्र तत् । शिथिलितं शिथिलं संजातं मृणालस्यैकं मुख्यं वलयं यत्र । संतापाच्छुष्कत्वेन शैथिल्यम् । एकमित्यनेन वलयान्तरासहत्वं ध्वन्यते । वलयस्य करनियमितस्थितेः प्राप्तत्वात्तदग्रहणम् । आसमन्ताद्बाधया पीडया सह वर्तमानम् । आङा पीडायाः सर्वाङ्गत्वं व्यज्यते । पीडायुक्तं न अपि तु

---

१ मुपास्यते. २ खलु [illegible]. ३ स्यात्किं मदनदोषो वा स्यात् (उभयं मे). ४ विचिन्त्य. ५ शिथिलित. ६ तदपि. ७ सुहअदि ( सुखयति ).

**प्रियंवदा**—( जनान्तिकम्। ) अनसूये तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला। किं नु खल्वस्यास्तन्निमित्तोऽयमातङ्को भवेत्। ( क )

**अनसूया**—सखि ममापीदृश्याशङ्का हृदयस्य। भवतु। प्रेक्ष्यामि तावदेनाम्। ( प्रकाशम्। ) सखि प्रष्टव्यासि किमपि। बलवान्खलु ते संतापः। ( ख )

**शकुन्तला**—( पूर्वार्धेन शयनादुत्थाय। ) हला किं वक्तुकामासि। ( ग )

**अनसूया**—हला शकुन्तले अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य। किं तु यादृशीतिहासनिबन्धेषु कामयमानानामवस्था

( क ) अणसूए तस्स राएसिणो पढमदंसणादो आरहिअ पज्जुस्सुआ विअ सउन्दला। किं[1] णु क्खु से तण्णिमित्तो अअं आतङ्को भवे। ( ख ) सहि ममवि ईदिसी आसङ्का हिअअस्स। होदु। पुच्छिस्सं दाव णं। सहि पुच्छिदव्वासि किंपि। बलवं क्खु दे[2] संदावो। ( ग ) हला किं वत्तुकामासि।

पीडया सह वर्तमानम्। एतेन कतिपयकालकलाजनितापि पीडा शरीरोत्पत्तिकालादारभ्यैव वर्तत इति ध्वन्यते। कीदृशम्। प्रियाया इति साभिप्रायम्। वपुः किमपि लोकोत्तरचमत्कारि। कमनीयमिति भावः। काममित्यनुमतौ। 'निकामानुमतौ कामम्' इत्यमरः। मनसिजनिदाघप्रसरयोः कामग्रीष्मवेगयोस्तापः समस्तुल्यो यद्यपि तथापि ग्रीष्मस्य निदाघस्य युवतिष्वपराद्धं तापरूपम्। एवं लावण्यशेषतया परिदृश्यमानं सुभगं न तु नैवेति व्यतिरेकः। 'तु स्याद्भेदेऽवधारणे' इत्यमरः। तेन कामकृतः परिताप इति भावः। युवतिष्विति सामान्यनिर्देशादप्रस्तुतप्रशंसा। ग्रीष्मस्येति संबन्धमात्रे षष्ठी। स्तस्तो इति किमकर्म इति छेकवृत्तिश्रुत्यनुप्रासाः। अत्र यद्यपि कथितपददोषभिया ग्रीष्मापराद्धपदे उपात्ते तथापि तन्नोचितम्। अत्रोद्देश्यविधेयभावविषयतया तदेव दातव्यं भवेत्। 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च।' इतिवत्। एतद्व्यतिरिक्तविषयत्वात् कथितपदस्यापवादविषयं परित्यज्यैवोपसर्गस्य प्रवृत्तेः। तेन 'निदाघस्यैतादृग्युवतिषु न तापस्तु सुभगः।' इति पठनीयम्। अस्मिन्पाठे षष्ठीदोषोऽपि परिहृतः॥ ७॥ पर्युत्सुकेव शकुन्तला। तस्यां मिथ्यारोपभियेवशब्दोपादानम्। ममापि हृदयस्येति संबन्धः। हृदयग्रहणेन अस्मिन्स्फुरणमात्रमुक्तं न तु तत्त्वतः। अत एवाशङ्कापदम्। पूर्वार्धेनेति। शरीरस्येति शेषः। 'पूर्वेण' इति पाठे शरीरार्धेनेत्यार्थम्। अनभ्यन्तरे तत्त्वेनाज्ञे। खलु निश्चितम्। तस्यां मिथ्यारोपभियैवाज्ञानप्रकाशनपूर्वप्रश्नः। ज्ञाने ( तदवस्थाज्ञाने ) अपि श्रवणमेव

१ पुष्पशय्यामुद्रस्य. २ अलब्धान्तरे वयं ने मनोगतस्य. ३ ण क्खु से अण्णणिमित्तो आतङ्को भवे. ४ दे अङ्गाणं.

श्रूयते तादृशीं तव पश्यामि । कथय किंनिमित्तं ते संतापः । विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य । ( क )

राजा—अनसूयामप्यनुगतो मदीयस्तर्कः । न हि स्वाभिप्रायेण मे दर्शनम् ।

शकुन्तला—( आत्मगतम् । ) बलवान्खलु मेऽभिनिवेशः । इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् । ( ख )

प्रियंवदा—सखि शकुन्तले सुष्ठु एषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनुदिवसं खलु परिहीयसेऽङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति । ( ग )

राजा—अवितथमाह प्रियंवदा । तथा हि ।

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा ।

---

( क ) हला सउन्दले अणब्भन्तरा क्खु अह्मे मदणगदस्स वुत्तन्तस्स । किंदु जादिसी इदिहासणिबन्धेसु कामअमाणाणं अवत्था सुणीअदि तादिसिं दे पेक्खामि । कहेहि किंणिमित्तं दे संदावो । विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स । ( ख ) वलवं क्खु मे अहिणिवेसो । दाणिं वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं । ( ग ) सहि सउन्दले सुट्ठु एसा भणादि । किं अत्तणो आतङ्कं उवेक्खसि । अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि ।

---

कारणमुक्तम् । न तु स्वयमन्यस्य प्रत्यक्षतो दर्शनमवस्थायाः । तस्मिन्सत्यस्य सत्यत्वसंभावना स्यात् । किं च निरूपणेऽपि तत्सादृश्येनेव निरूपणं न तत्त्वेन दर्शनं ज्ञानम् । बलवानधिकः । खलु निश्चितं मेऽभिनिवेश आग्रहः । अकथन इत्यर्थम् । 'अभिनिवेश इति ग्रहे' इति गणपाठात् । इदानीमप्येतदवस्थायामपि । एतादृक्प्रश्नसद्भावे सत्यपीत्यपिशब्दार्थः । सहसाकस्मात् । अग्रेऽवश्यं वक्ष्यमाणत्वात्सहसेत्युक्तिः । एतयोरिति सख्योः तत्रापि प्रियसख्योः रहस्याभेदिन्योर्मदर्थं प्राणपरित्यागिन्योरित्यर्थान्तरसंक्रमितम् । शक्नोमि नितरां सामस्त्येन वेदयितुम् । सुष्ठ्वेषा भणति । किमात्मन आतङ्कमुपेक्षसे । अनेन ममापि प्रश्नेऽभिप्रायोऽस्तीत्युक्तम् । अनुदिवसं खलु परिहीयसेऽङ्गैः । पूर्वं स्वभावत एव कृशा अधुना ततोऽपीति भावः । केवलं लावण्यमयी छाया त्वां न मुञ्चति । तथा कार्श्ये यथा प्रधानं लावण्यमेव दर्शनयोग्यं नावयवा इति भावः । अवितथं सत्यम् । यस्तु प्रियं वदति स सत्यं न वदति । इयं प्रियंवदा सत्यवचनापीति विरोधः । नाम्ना तदाभासः । 'तया अङ्गैः परिहीयसे' इत्युक्तम् । अतो राजापि तदेव दर्शयति—तथाहीति । **क्षामेति** । क्षामक्षामौ कृशतरौ पूर्वं कृशावधुना



१ अनसूययापि मदीयस्तर्कोवगतः । २ नेत्यादि नास्ति क्वचित् । ३ सहैणं ।

शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ८ ॥

शकुन्तला—सखि कस्य वान्यस्य कथयिष्यामि । किंत्वायासयित्रीदानीं वां भविष्यामि । ( क )

उभे—अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति । ( ख )

राजा—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ९ ॥

( क ) सहि कस्स वा अण्णस्स कहइस्सं । किन्दु आआसइत्तिआ दाणिं वो भविस्सं । ( ख ) अदो एव्व क्खु णिव्वन्धो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि ।

कृशतरौ कपोलौ यत्र तदाननं मुखम् । उरः काठिन्येन मुक्तौ स्तनौ यत्र तत् । इदमपि कार्श्यादेव । पूर्वं क्लान्तः कृशः अधुना क्लान्ततरो मध्यः । अंसौ पूर्वमेव विनतावधुना प्रकाममत्यर्थं विनतौ । छविः पाण्डुरेति विरहकार्श्यादेव । शोच्या शोचनीया च प्रियदर्शना च हृद्यदर्शना चेति विरोधः । शोच्यानुकम्पार्हेति तदाभासः । मदनेन क्लिष्टेति शोच्यत्वे हेतुत्वोपादानात्काव्यलिङ्गम् । केव । माधवी वासन्ती लतेव । कीदृशी । शोष्यतेऽनेनेति शोषणः । 'करणाधिकरणयोश्च' इति ल्युट् । तेन पत्राणां शोषणेन मरुता पश्चिमवायुना स्पृष्टा । स तु तस्या अपि शोषक इति क्लिष्टत्वम् । माधवीशब्देन प्रियदर्शनत्वमुक्तं लतामास्यत्रैव कार्श्यसंभवात् । उपमानुप्रासौ । शार्दूलविक्रीडितं वृत्तम् । 'वक्त्रं क्षामकपोलयुग्भृशमुरः' इति 'कान्ततरोंऽसयुग्ममधिकं नम्रं छविः' इति पाठ उद्देश्यप्रतिनिर्देशप्रक्रमभङ्गः प्रकामविशब्दयोरर्थपौनरुक्त्यं च परिहृतं भवति । 'संस्पृष्टा दलशोषणेन मरुता सा माधवीव प्रिया ।' इति पाठ इवप्रयोगप्रक्रमभङ्गो लताशब्दस्यावक्रत्वं च परिहृतं भवति ॥ ८ ॥ आयासयित्री युवयोरिदानीं भविष्यामि । अतो न कथयामीत्यर्थः । अत एव खलु निर्बन्धः यदेवाकथने कारणत्वेन नियद्धं तदेव कथने हेतुत्वेनोपात्तमिति व्याघातालङ्कारः । 'सौकर्येण कार्यं विरुद्धा क्रिया च' इति लक्षणात् । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवतीत्यर्थान्तरन्यासः । पृष्टेति । जनेनाधिहेतुं मनःपीडाकारणं पृष्टा । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । इयं बाला मनोगतं सत्यं न वक्ष्यतीति

१ ग्लानेयं. २ अत्रान्तरमे०. ३ क्वाणीति नास्ति क्वचित्.

शकुन्तला—सखि यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः—( इत्यर्धोक्ते लज्जां नाटयति। ) ( क )

उभे—कथयतु प्रियसखी। ( ख )

शकुन्तला—तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थास्मि संवृत्ता। ( ग )

राजा—( सहर्षम्। ) श्रुतं श्रोतव्यम्।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ॥ १० ॥

शकुन्तला—तद्यदि वामनुमतं तथा वर्तेथां यथा तस्य राजर्षेरनुकम्पनीया भवामि। अन्यथावश्यं सिञ्चतं मे तिलोदकम्। ( घ )

राजा—संशयच्छेदि वचनम्।

प्रियंवदा—( जनान्तिकम्। ) अनसूये दूरगतमन्मथाक्षमेयं काल-

---

( क ) सहि जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसी—

( ख ) कहेदु पिअसही।

( ग ) तदो आरहिअ तग्गदेण अहिलासेण एतदवत्थह्मि संवुत्ता।

( घ ) तं जइ वो अणुमदं तह वट्टह जह तस्स राएसिणो अणुकम्पणिज्जा होमि। अण्णहा अवस्सं सिञ्चह मे तिलोदअं।

---

न। अपि तु वक्ष्यत्येव। एतदर्थमेव नञ्द्वयम्। बालेति कैतवानभिज्ञत्वं ख्यन्यते। सत्यवचने हेतुगर्भं विशेषणमाह—समदुःखसुखेनेति। तेन काव्यलिङ्गम्। हि निश्चितमनया तरलायतलोचनया सतृष्णं साभिलाषं यथा स्यादेवं विवृत्य परावृत्य बहुशो दृष्टोऽप्यहमत्रान्तरेऽवसरेऽस्मिन्नवसरे तद्वचःश्रवणे कातरतां भीतिं प्राप्तोऽस्मि। किं वक्ष्यतीति भयमित्यर्थः। छेकवृत्तिश्रुत्यनुप्रासाः। वसन्ततिलका वृत्तम् ॥९॥ स्मर इति। यस्तापहेतुः स एव निर्वापयितेति विरोधाभासः। वस्तुतस्तु तद्गतः स्मरस्तापहेतुर्नायिकागतो निर्वापयितेत्यर्थः। अत एव मे प्रतिकूलं दैवं स्मरेण मा तापयतीयं तेनैव मां निर्वापयतीति प्रतीतेर्व्यङ्ग्यो व्याघातालङ्कारः। 'यथासाधितस्य तथैवान्येनान्यथाकरणं व्याघातः।' इति तल्लक्षणात्। तत्रोपमामाह—दिवस इवेति। तपात्यये निदाघात्यये। प्रावृडारम्भ इत्यर्थः। 'उष्ण ऊष्मागमस्तपः' इत्यमरः। अभ्रैश्यामोऽभ्रैर्मेघाक्रान्तत्वाच्छ्यामः सच्छायः। पूर्वाह्णे सातपोऽपरत्र सच्छायो वा। दिवसो जीवलोकस्य प्राणिवर्गस्य तापयिता निर्वापयिता च यथा भवति। वृत्त्यनुप्रासः ॥ १० ॥ शकु०—तद्यदि इति अनेन शमो नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु 'तस्योपशमनं यत्तु शमनं तदुदाहृतम्।' इति। दूरगतमन्मथाक्षमा कालहरणस्य। अत्राद्यावस्थात्रयं प्रथममेवो-

---

१ अर्धोक्तेन. २ यत ओ०. ३ वर्थे. ४ विमर्श०. ५ कहेदु कहेदु. ६ पहुदि. ७ सुमरेध मं।

हरणस्य। यस्मिन्बद्धभावैषा स ललामभूतः पौरवाणाम्। तद्युक्तमस्या अभिलाषोऽभिनन्दितुम्। (क)

**अनसूया**—तथा यथा भणसि। (ख)

**प्रियंवदा**—(प्रकाशम्।) सखि दिष्ट्यानुरूपस्तेऽभिनिवेशः। सागरमुज्झित्वा कुत्र वा महानद्यवतरति। क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते। (ग)

**राजा**—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते।

**अनसूया**—कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः। (घ)

**प्रियंवदा**—निभृतमिति चिन्तनीयं भवेत्। शीघ्रमिति सुकरम्। (ङ)

**अनसूया**—कथमिव। (च)

---

(क) अणसूए दूरगअमम्महा अक्खमा इअं कालहरणस्स। जस्सिं वद्धभावा एसा सो ललामभूदो पोरवाणं। ता जुत्तं से अहिलासो अहिणन्दिदुं।

(ख) तह जह भणासि।

(ग) सहि दिट्ठिआ अणुरूवो दे अहिणिवेसो। साअरं उज्झिअ कहिं वा महाणई ओदरइ। को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि[3]।

(घ) को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मणोरहं संपादेह्म।

(ङ) णिहुअं त्ति चिन्तणिज्जं भवे। सिग्घं त्ति सुअरं। (च) कहं विअ।

---

क्तम्। तनुतानन्तरमेवोक्ता। 'किं वीजयतो मां सख्यौ' इति विषयनिवृत्तिः। एतयोरग्रेऽभिलाषकथनादेव त्रपानाश उक्तः। परिहार्यावस्थात्रयमेवावशिष्टमिति दूरगतमन्मथत्वम्। तथा च कद्रये—'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथसंकल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः॥ उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः।' इति। तत् तस्माद्युक्तमस्या अभिलाषोऽभिनन्दितुम्। युक्तमिति प्राकृतत्वाल्लिङ्गविपर्ययः। प्रथमायां वा द्वितीया। यथा भणसि तत्तथैवेत्यर्थः। अतिमुक्तलतां पल्लविनीं सहते। स्वीयत्वेन परिगृह्णातीत्यर्थः। मालादृष्टान्तः। पूर्वत्र नायिकायाः कर्तृत्वमुक्तम्। उत्तरत्र नायकस्येति विशेषः। द्विदैवत्वाद्विशाखयोर्द्वित्वम्। युक्तमेवैतयोरेतस्या अनुमोदनमिति भावः। एतदभिप्रायमेव विशाखयोर्द्वित्वम्। शशिलेखात्वेन स्त्रीलिङ्गनिर्देशश्च। विशाखे शशाङ्कलेखा चाप्रस्तुता। तासां वचनादप्रस्तुतप्रशंसा। तया च

---

१ (जनान्तिकम्।) सहि जह भणासि। (प्रकाशम्।) सहि दिट्ठिआ... महाणई ओदरइ। प्रियं०—को दाणिं... इति क्वचित्। २ वर्जयित्वा (वज्जिअ). ३ अहिदि (अहेति).

प्रियंवदा—ननु स राजर्षिरस्यां स्निग्धदृष्टचा सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते । ( क )

राजा—सत्यमित्थंभूत एवास्मि । तथा हि ।

इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः ।
अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ११ ॥

प्रियंवदा—( विचिन्त्य । ) हला मदनलेखोऽस्य क्रियताम् । तं सुमनोगोपितं कृत्वा देवप्रसादस्यापदेशेन तस्य हस्तं प्रापयिष्यामि । ( ख )

अनसूया—रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति । ( ग )

---

( क ) णं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि । ( ख ) हला मअणलेहो से करीअदु । तं[4] सुमणोगोविदं करिअ देवप्पसादस्सावदेसेण से हत्थअं पावइस्सं ।

( ग ) रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि ।

---

सख्योः शकुन्तलायाश्च प्रकृतानां योगसमागमत्वेन समालङ्कारो व्यज्यते । ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान्प्रजागरकृशो लक्ष्यते । उक्तस्य पुरुषत्वाद्विशेषतो राजत्वात्तत्रापि स्वयं दुष्यन्त इति विषयनिवृत्तित्रपानाशलक्षणे अवस्थे एनं प्रति न वर्णिते । अधीरत्वेनानौचित्यप्रसङ्गात् । इदमिति । निशि निशि प्रतिरात्रम् । अनेन दर्शनात्प्रभृत्यद्य यावदेतदवस्था द्योतिता । भुज उपधानीकृते न्यस्तो योऽयमपाङ्गो नेत्रान्तस्तत्र प्रसर्तुं शीलं येषां तैः । अत्र प्रजागराच्छायायां परिवृत्तिविवर्तनैः सत्यप्युपधाने तस्य निष्फलत्वाद्भुजोपधानत्वमुक्तम् । अन्तस्तापादशिशिरैरुष्णैरश्रुभिर्विवर्णा मणयो यत्र तत् । अविवर्णमणि विवर्णमणि संपादितं विवर्णमणीकृतम् । अनेनापि दीर्घकालमियमवस्था व्यज्यते । स्वभावत एव वलयस्य शिथिलत्वे कामावस्थाकृततनुताप्रतीतिर्न भवतीति तस्य स्वभावस्थितिसूचकं विशेषणमाह । अनभिलुलितोऽस्पृष्टो ज्याघाताङ्को येन तत् । कनकवलयम् । कनकेति शैत्यद्योतनाय । वलयमित्येकवचनेन विरहित्वात्सर्वाभरणपरित्यागो द्योत्यते । स्रस्तं स्रस्तं वारंवारं पाणिमूलगतं कार्श्यात् । मणेर्बन्धनमत्र मणिबन्धनं भुजस्य पाणेश्च संधिः । तस्मान्मया राज्ञा दुष्यन्तेनापि सता मुहुर्वारंवारं न तु सकृत्प्रतिसार्यत ऊर्ध्वं नीयते । स्वभावोक्तिः । हरिणी वृत्तम् ॥ ११ ॥ तं मदनलेखं सुमनोगोपितं कृत्वा

---

१ अशिशिरतैररन्त...र्णमलीमसम्. २ प्रवर्तिभिः. ३ अनाति॰. ४ इमं देवसेसावदेसेण ( देवशेषापदेशेन ), देवदाप्प॰.

शकुन्तला—किं नियोगो वां विकल्प्यते । ( क )

प्रियंवदा—तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावत्किमपि ललितपदबन्धनम् । ( ख )

शकुन्तला—हला चिन्तयाम्यहम् । अवधीरणाभीरुकं पुनर्वेपते मे हृदयम् । ( ग )

राजा—( सहर्षम् । )

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ १२ ॥

सख्यौ—अयि आत्मगुणावमानिनि क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति । ( घ )

---

( क ) किं णिओओ वो विकप्पीअदि ।

( ख ) तेण हि अत्तणो उवण्णासपुव्वं चिन्तेहि दाव किम्पि ललिअपदबन्धणं ।

( ग ) हला चिन्तेमि अहं । अवहीरणाभीरुअं पुणो वेवई मे हिअअं ।

( घ ) अयि अत्तगुणावमाणिणि को दाणिं सरीरणिव्वावइत्तिअं सारदिअं जोसिणिं पडन्तेण वारेदि ।

---

देवप्रसादस्यापदेशेन व्याजेन । विरहिण्याः स्वावस्थासूचको निबद्धो लेखो मदनलेख इत्युच्यते । को नियोग आज्ञा विकल्प्यते विचार्यते । दातुमिति शेषः । ललितं च तत्पदबन्धनं चेतीदमेव विशेष्यम् । केषुचित्पुस्तकेषु 'ललिअपदबन्धणं छलियम्' इति पाठः । छलितकमित्यर्थः । छलितलक्षणं यथा—'रतिक्रोधोत्साहभावप्रधानं छलितं मतम्[१]' इति । अवधीरणा तिरस्कारस्तया भीरु पुनर्मे वेपते हृदयम् । मे हृदयं पुनर्वेपत इति संबन्धः । क्रियायां विशेषणं हेतुत्वेन योज्यम् । अयमिति । हे भीरु अनेन तिरस्कारशङ्कासंभावना व्यज्यते । यतो यस्मान्मल्लक्षणाज्जनादवधीरणां तिरस्कारं विशङ्कसे । स्यादवधीरणाशङ्का यदि केवलं मत्प्रार्थनैव त्वदीयप्राप्तिहेतुः स्यादिति भावः । सोऽयमिति प्रत्यक्षेण निर्दिशति । ते तव संगमोत्सुकस्तिष्ठतीति विशिष्टस्य विधेयत्वम् । त्वत्प्रार्थितः कथं दुर्लभो भविष्यामीत्याशयः । पूर्वापरचरणयोर्व्यत्ययपाठेनोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहरणीयः । प्रार्थयिता पुरुषः श्रियं लभेत वा न लभेत वा । श्रिया पुनरीप्सितः प्रार्थितः कथं दुरापो दुर्लभो भवेत् । अयमर्थान्तरन्यासः । व्यत्ययपठितस्य पूर्ववाक्यस्य पूर्ववाक्यं समर्थकम् । तादृगुत्तरस्योत्तरं समर्थकमिति विवेकः । श्रुतिवृत्ति-

१ को णिओओ वि॰; सत्तीणि॰. २ वीरण. ३ अवहीरणा.

शकुन्तला—( सस्मितम् । ) नियोजितेदानीमस्मि । ( इत्युपविष्टा चिन्तयति । ) ( क )

राजा—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १३ ॥

शकुन्तला—हला चिन्तितं मया गीतवस्तु । असंनिहितानि पुनर्लेखनसाधनानि । ( ख )

( क ) णिओइआ दाणिं ह्मि ।
( ख ) हला [1]चिन्तितं मए गीदवत्थु । [4]असण्णिहिदाणि उण लेहणसाहणाणि ।

च्छेकानुप्रासाः । 'कथं न लभ्येत नरः श्रियार्थितः' इति पठित्वा पर्यायप्रक्रमभङ्गः परिहरणीयः । वंशस्थं वृत्तम् ॥ १२ ॥ आत्मगुणावमानिनीति त्वद्गुणैरेव स क्रीतोऽवधीरणाशङ्कापि क्वेति भावः । क इदानीं शरीरनिर्वापयित्रीं शरीरसुखदायिनीं शारदीं शरत्कालसंबन्धिनीम् । इत्यतिशयेनाह्लादकारित्वं ध्वनितम् । ज्योत्स्नां पटान्तेन वारयति । शकुन्तलावाक्यं प्रति दृष्टान्तः । नियोजितेदानीमस्मि । कामलेख इत्यार्थमेव । विस्मृतो निमेषो येन तेन । निर्निमेषेणेत्यर्थः । एतदर्थमेव चक्षुषो विशेष्यस्योपादानम् । प्रियां न स्त्रीमात्रम् । छ्चरीमप्यनेकश इति ज्ञेयम् । यदवलोकयामि तत्स्थाने युक्तं खलु । अथ वा स्थाने प्रदेशविशेषे । उन्नमितेति । एतादृशस्य पूर्वमदर्शनादनिमेषदर्शनं युक्ततरमिति भावः । पदानि सुप्तिङन्तानि रचयन्त्या अस्या उन्नमितोत्क्षिप्तैका भ्रूलता यत्र । इदं पदं देयमिदं वेति वितर्के तस्याः प्रयोगात्तदाननं कण्टकितेन रोमाञ्चितेन । 'रोमहर्षेऽपि कण्टकः' इत्यमरः । कपोलेन यैवैका भ्रूलतोन्नमिता तद्दिक्स्थकपोलस्यैव रोमाञ्चितत्वमित्येकवचनम् । मयीति स्वस्याधिकरणत्वेन धन्यतां सुभगंमन्यतां च ध्वनति । अनुरागं प्रीतिविशेषं प्रथयति शंसति । अयमन्यस्मिन्नन्यधर्माधानलक्षणः समाधिर्नामगुणः । रतेरेव षष्ठ्यवस्थानुरागः । उक्तं च सुधाकरे—'अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तेः ॥' इति । अनुरागलक्षणं तत्रैव—'राग एव स्वसंवेद्यदशाप्राप्त्या प्रकाशितः । यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ॥' इति । भोगस्योत्तरदक्षिणभावित्वादपि स जात इवेति मत्वैतादृश्युक्तिः । जातिरलंकारोऽनुप्रासश्च । रोमाञ्चितकपोलान्यथानुपपत्त्यानुरागप्रथनादर्थापत्त्यलंकारः । केचिदनुमानालंकारमाहुः । भ्रूलतमित्यु-

१ तथा हि. २ पुलकाञ्चितेन कथ०. ३ मए विहिअं, चिन्तिदा मए गीदिआ०
४ ण क्खु संणि०.

प्रियंवदा—एतस्मिञ्शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु। (क)

शकुन्तला—(यथोक्तं रूपयित्वा।) हला शृणुतमिदानीं संगतार्थं न वेति। (ख)

उभे—अवहिते स्वः। (ग)

शकुन्तला—(वाचयति।)

तव न जाने हृदयं मम पुनः कामो दिवापि रात्रावपि।
निर्घृण तपति बलीयस्त्वयि वृत्तमनोरथाया अङ्गानि ॥ १४ ॥ (घ)

(क) इमस्सिं सुओदरसुउमारे णलिणीपत्तेणहेहिं[2] णिक्खित्तवण्णं करेहि।
(ख) हला सुणुद दाणिं संगदत्थं ण वेत्ति। (ग) अवहिदे ह्म।
(घ) तुज्झ ण आणे हिअअं मम उण कामो दिवावि रत्तिम्मि।
णिग्घिण तवइ बलीअं तुइ वुत्तमणोरहोइं अङ्गाइं ॥

पमा च उन्नमितस्य साधकत्वात् ॥ १३ ॥ तुज्झेति। निर्घृण निष्कृप तापयत्यधिकम्। त्वयि वृत्तमनोरथानीति हेतुत्वेन योज्यम्। अङ्गानीति बहुवचनेन मार्दवातिशयो ध्वन्यते। तव हृदयमिति विशेषोपादानात्स्वस्योत्कण्ठातिशयस्तस्य तदभावो ध्वन्यते। अर्थापत्त्यलंकारः। अथ च 'हृदयं मानसोरसोः' इति विश्वः। तेन तव हृदयं गोपुरकपाटायमानं रिपुदनुजनिवहशरशतैरप्यभेद्यम् एवंभूतमहं न जाने। अपि तु जाने आप्तजनवचनात्। अत एव मेऽङ्गानि सर्वाणि दिवापि रात्रावपि तापयति कामः। तव तु वक्षोमात्रमपि न तापयितुं शक्तः। यदि तापयेत्तदा निर्घृण निर्जुगुप्स निदाघसमयशीतलतरमत्कुचपरिरम्भणायागच्छेः। 'घृणा जुगुप्साकृपयोः' इति विश्वः। तादृशं तव वक्ष आलिङ्गितुमिच्छामीत्यभिलाषोक्तिः। अनुमानालंकारः। अथ च त्वयि विषये वृत्ता जाता मनोरथा येषां तानि। आलिङ्गनं भुजयोर्मनोरथः त्वत्कान्तिझरप्रवाहपानं तु चक्षुषोः त्वद्वचनामृतसरसि निमज्जनं च श्रवणयोः त्वन्मुखसरोजश्वासाघ्राणं नसः शशाङ्ककोमलत्वदङ्कारोहणं नितम्बस्य त्वत्करतलमेलनं कुचयोरित्यादि। एवंभूतमनोरथानि ममाङ्गानि कामोऽधिकं तापयति। त्वं त्वेवं निष्कृपो यत्स्वभक्तान्येवं परेण ताप्यमानान्यपि सहसे तत्तव हृदयमहं न जाने क्षत्रहृदयमिति न जाने। परैः पीड्यमानं क्षत्रियः परित्रायते स्वभक्तं तु सुतरामित्युपालम्भः। मम पुनर्मदीयं हृदयं न जाने। तत्तु त्वयि वर्तते। तदभावाद्धृदयशून्याहं वर्ते इति भावः। केवलं तदेव त्वयि गतमिति न। अपि तु कामोऽभिलाषोऽपि त्वयि विषये दिने रात्रावधिकं तपति वर्धते लक्षणया। 'कामः स्मरेऽभिलाषे च'

१ सिणिद्धे (स्निग्धे). २ अलिहीअदु (आलिख्यताम्). ३ मअणो. ४ णिक्किव (निष्कृप). ५ रथाइं (रथानि).

राजा—( सहसोपसृत्य । )

तपति तनुगात्रि मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥ १५ ॥

सख्यौ—( विलोक्य सहर्षमुत्थाय । ) स्वागतमविलम्बिनो मनोरथस्य । ( क )

( शकुन्तलाभ्युत्थातुमिच्छति । )

राजा—अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुक्लान्तविसभङ्गसुरभीणि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १६ ॥

अनसूया—इतः शिलातलैकदेशमलंकरोतु वयस्यः । ( ख )

( राजोपविशति । शकुन्तला सलज्जा तिष्ठति । )

प्रियंवदा—द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः । सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति । ( ग )

---

( क ) साअदं अविलम्बिणो मणोरहस्स ।

( ख ) इदो सिलातलेक्कदेसं अलंकरेदु वअस्सो ।

( ग ) दुवेणं पि वो अण्णोण्णाणुराओ पच्चक्खो । सहीसिणेहो उण मं पुणरुत्तवादिणिं करेदि ।

---

इति विश्वः । इत्यनुनयोक्तिः । तेन मदीयं बाह्यमभ्यन्तरं न किंचिदपि मत्संबद्धमिति शीघ्रमागच्छेति भावः । श्लेषानुप्रासौ । क्वचित् ' रत्तिं पि ' इति पाठः । तदा रात्रिमपीत्यर्थः । ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया ॥१४॥ **तपतीति** । तनूनि कृशानि गात्राणि यस्यास्तस्याः संबोधनम् । मदनस्त्वां तपति तत्रार्थो हेतुः संबोधनपदार्थः । कृशगात्रत्वं स्त्रीत्वं चेति काव्यलिङ्गम् । तनुगात्रीति पुनरुक्तवदाभासश्च । मां पुनः पुरुषं कठिनशरीरमनिशं सर्वदा अथ च निशाव्यतिरिक्तसमयेऽपि दहत्येव । किमपि नावशेष्यार्थः क्रमेण हेतुत्वेन योज्यः । दृष्टान्तोऽनुप्रासश्च । मदयतीति मदनो हर्षदः स कथं तपति दहतीति विरोधाभासश्च ] ॥ १५ ॥ स्वागतमविलम्बिनो मनोरथस्येति नृपत्वलक्षणविषयनिगरणादतिशयोक्तिः । अलमलमिति द्विरुक्तिरादरातिशयं ध्वनति । **संदष्टेति** । यतो गुरुर्महान्परितः सर्वतस्तापः संतापो येषु तानि ततो विशेषणद्वयविशिष्टानि । ते तव गात्राण्यवयवा उपचारं तत्तद्योग्यव्यवहारकरणं नार्हन्ति । ' गात्रमङ्गे कलेवरे ' इति विश्वः । दष्टं लग्नम् । केवलं लग्नं न अपि तु सम्यग्दष्टम् । केवलं कुसुमं न अपि तु कुसुमशयनीयं येषु तानि । गात्राणामुत्थापने कर्तव्ये कुसुमशय्याप्यङ्गलग्नोत्तिष्ठतीति भावः । आशु शीघ्रं क्लान्तो बिसभङ्गस्तद्वृत्तेन वा सुरभीणि चारूणि । शीघ्रत्वं च भङ्गापेक्षया । तेन तात्कालिकक्लान्तत्वमुक्तम् । काव्यलिङ्गपरिकरानुप्रासाः । पक्ष

---

१ सहर्षम्. २ आशु विमर्दित ( विवर्णित ) मृणालवलयानि. ३ सलज्जं.

राजा—भद्रे नैतत्परिहार्यम् । विवक्षितं ह्यनुक्तमनुतापं जनयति ।

प्रियंवदा—आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः । ( क )

राजा—नास्मात्परम् ।

प्रियंवदा—तेन हीयमावयोः प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितमस्या अवलम्बितुम् । ( ख )

राजा—भद्रे साधारणोऽयं प्रणयः । सर्वथानुगृहीतोऽस्मि ।

शकुन्तला—( प्रियंवदामवलोक्य । ) हला किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन । ( ग )

राजा—सुन्दरि ।

इदमनन्यपरायणमन्यथा हृदयसन्निहिते हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे मदनबाणहतोऽस्मि हतः पुनः ॥ १७ ॥

( क ) आवण्णस्स विसअणिवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो ।

( ख ) तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवता मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

( ग ) हला किं अन्तेउरविरहपज्जुस्सुअस्स राएसिणो उवरोहेण ।

उपमा च ॥ १६ ॥ आपन्नस्यापत्प्राप्तस्य विषयनिवासिनो देशनिवासिनो जनस्यार्तिहरेण पीडाहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः । 'आपन्न आपत्प्राप्तः स्यात्' । 'देशविषयौ तूपवर्तनम्' । 'आर्तिः पीडाधनुःकोट्योः' इति चामरः । तदर्हस्यभ्युपपत्त्यानुग्रहेण जीवितं तस्या अवलम्बितुम् । 'अथाभ्युपपत्तिरनुग्रहः' इति शाश्वतः । साधारण आवयोः समानः प्रणयो याच्ञा । यथा भवतीभिरेतदर्थमहमभ्यर्थ्ये एवं मयाप्येतदनुग्रहार्थे भवत्यौ प्रार्थनीये इत्यर्थः । 'प्रणयः प्रेम्णि विस्रम्भे याच्ञाप्रत्यययोरपि ।' इति विश्वः । अन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन किम् । अनेनात्मनोऽतिशयितं सौभाग्यं ध्वनितम् । इदमिति । इदं जन्मप्रभृति येन सह स्थितं तमपि परित्यज्य दर्शनात्प्रभृति त्वय्यनुरक्तमनन्यनिष्ठम् । केवलं त्वन्निष्ठमित्यर्थः । मम त्वद्ध्यानैकचित्तस्य हृदयं हे हृदयसंनिहिते मया सर्वदा ध्याते इति साभिप्रायम् । यो यत्संनिहितः स तस्य तत्त्वं जानाति त्वं च तस्य संनिहिता सा चेत्त्वमन्यथान्यनिष्ठं यदि समर्थयसे कल्पयसि तदा । मदिरा दृष्टिस्तस्या ईक्षणमिवेक्षणमवलोकनं यस्यास्तत्संबुद्धिः । 'सप्तम्युप-

१ अनसूयां. २ नास्त्येतत्क्वचित्. ३ हतोपि. ४ तुमं ज्जेव ( एव ). ५ अलं अन्तेउर०, अलस्सुएण राएसिणा उवरुद्धेण.

अनसूया—वयस्य बहुवल्लभा राजानः श्रूयन्ते। यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वाहय। (क)

राजा—भद्रे किं बहुना।

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररसना चोर्वी सखी च युवयोरियम्॥ १८॥

उभे—निर्वृते स्वः। (ख)

---

(क) वअस्स बहुवल्लहा राआणो सुणीअन्ति। जह णो पिअसही बन्धुअणसोअणिज्जा ण होई तह णिव्वाहेहि।

(ख) णिव्वुद ह्म।

---

मानपूर्वोत्तरपदस्य' इति समासः। मदिरादृष्टिलक्षणमादिभरते—'आघूर्णमानमध्या या क्षामा चाञ्चिततारका। दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे॥' इति। मदनस्य कामस्य बाणैर्हतो विद्धोऽपि पुनरत्यन्तं हतोऽस्मि। विरुद्धमनःप्रवृत्तिर्जातोऽस्मीत्यर्थः। मन्मानसं त्वन्निष्ठं तदपि चेत्त्वमन्यथा शङ्कसे तर्हि तस्य विषयान्तराभावात्प्रवृत्तिनिरोधो जात एवेति भावः। 'मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः।' इत्यमरः। उपमा। हृदयहृदयेति हतो हत इति लाटानुप्रासाः। द्रुतविलम्बितं वृत्तम्॥ १७॥ अनेन सामेति संध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'तत्र साम प्रियं वाक्यं सानुवृत्तिप्रकाशकम्।' इति। **परीति।** परिग्रहबहुत्वे स्त्रीबहुत्वेऽपि। 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः।' इति विश्वः। मे मम कुलस्य प्रतिष्ठे प्रतिष्ठाहेतू। द्वे इति सारोपा लक्षणा शुद्धा। कार्यकारणभावसंबन्धात्। उक्तं च—'सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।' इति। अन्यवैलक्षण्येन प्रतिष्ठाकारित्वं व्यङ्ग्यम्। परिग्रहबहुत्वेऽपीति व्यङ्ग्यं चकारादानीय तत्रोर्वी प्रतिष्ठाहेतुर्गौरवहेतुश्चतुरुदधिमेखलायास्तस्या आचन्द्रार्कं तद्वंशेन पालनीयत्वात्। सखी प्रतिष्ठाहेतुः स्थितिहेतुरस्यां महाचक्रवर्तिवंशोत्पादकपुत्रोत्पादादिति द्वे अपि प्रतिष्ठे अतिशयोक्त्यैकत्वेनाध्यवसिते इत्यवधेयम्। 'प्रतिष्ठा गौरवे स्थितौ' इति हैमः। के द्वे इत्यत आह—समुद्र एव वसनमाच्छादनमवधित्वेन यस्याः सोर्वी मही। मुदं प्रीतिं राति ददातीति मुद्रम्। मुद्रं च तद्वसनं च मुद्रवसनम्। तेन सह वर्तमानेति सखीविशेषणम्। 'वसनं छादनेंऽशुके' इति विश्वः। इयं लोकातिक्रान्तसौन्दर्यागणितगुणगणाभिरामा त्रिजगल्ललामभूता। तुल्ययोगितोभयोः प्रकृतत्वात्। अनया च पृथिव्या क्षनयाद्युत्सारणेन स्वास्थ्यमिवास्या बन्धुवियोगदुःखापाकरणेनानन्दयुक्ततया सौभाग्यातिशयो व्यज्यते। अथ च पृथिव्यास्ताद्रूप्येण सापत्न्याभावादस्या अपि तदभावः। सति सापत्न्ये पृथिवीभवत्सख्योरेव परस्परं तदिति च व्यजते। रूपकानुप्रासौ॥ १८॥ निर्वृते सुखिते। 'सख्यौ—सहर्षं स्वागतम्' इत्यादिनैतदन्तेन

---

१ वसना, धर्मैपोषिलिखिता लक्ष्मीः। २ णिव्वाहेहि (निर्वर्तय)।

प्रियंवदा—( सदृष्टिक्षेपम् । ) अनसूये एष इतोदत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति । एहि । संयोजयाव एनम् । ( इत्युभे प्रस्थिते । ) ( क )

शकुन्तला—हञ्ज अशरणास्मि । अन्यतरा युवयोरागच्छतु । ( ख )

उभे—पृथिव्या यः शरणं स तव समीपं वर्तते । ( इति निष्क्रान्ते । ) ( ग )

शकुन्तला—कथं गते एव । ( घ )

राजा—अलमावेगेन । नन्वयमाराधयिता जनस्तव समीपे वर्तते ।

किं शीतलैः क्लमविनोदिभिरार्द्रवाता-
न्संचारयामि नलिनीदलतालवृन्तैः ।
अङ्के निधाय करभोरु यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १९ ॥

( क ) अणसूए एसो इदोदिण्णदिट्ठि उस्सुओ मिअपोदओ मादरं अण्णेसदि । एहि । संजोएम णं ।
( ख ) हला असरण ह्मि । अण्णदरा वो आअच्छदु ।
( ग ) पुहवीए जो सरणं सो तुह समीवे वट्टइ । ( घ ) कहं गवाओ एव्व ।

प्रगयणं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—' उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं पुनः ' इति । यथा एष इति निर्गमनव्याजवचनमिदम् । अशरणास्मि । एकाकिन्यस्मीत्यर्थः । अन्यतरा वां युवयोरागच्छतु । आवेगेन संभ्रमेण । आकुलत्वेनेत्यर्थः । किं शीतलैरिति । नलिनं पद्मं विद्यते यस्याः सा नलिनी तस्या दलानि कमलिनीपलाशानि तान्येव तालवृन्तानि व्यजनानि तैः । नलिनीपदेन सौगन्ध्यं सूचितम् । अत एव न विसिनीत्यादि । ' व्यजनं तालवृन्तकम् ' इत्यमरः । आर्द्रवाताञ्शीतलतरवातान् । आर्द्रत्वेन शैत्यं लक्ष्यते । तदतिशयः फलम् । सम्यङ् मन्दंमन्दं रचयामि करोमि न तूच्चैः । किमिति प्रश्ने । कीदृशैः शीतलैः शीतलस्पर्शैः । पुनः कीदृशैः । क्लमं विशेषेण नुदन्ति तैः क्लान्तिहरैः । उतेति विकल्पे । ' मणिबन्धादाकनिष्ठं करस्य करभो बहिः ' । तद्वदूरू यस्यास्तत्संबोधनम् । अत्रानुवृत्तत्वकोमलत्वादयः सामान्यधर्माः । ते पद्मताम्रौ कुशेशयलोहितौ । पदि मातीति पद्मम् । तेन सह साम्यं नास्तीति ताम्रत्वमात्रेण साम्यम् । अत एव नारविन्दादिपदोपादानम् । करभोरुपद्मताम्राविति पदाभ्यां चरणयोः संवाहनयोग्यत्वं ध्वनितम् । चरणावङ्के निधायेत्यनेन तस्याः सौभाग्यसर्वंकषत्वं स्वस्य धन्यतरत्वं च सूचितम् । संवाहयामि संवाहनेन खेदमपनयामीत्यर्थः । नलिनीदलस्य तालवृन्तत्वारोप आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति परिणामालंकारः । पूर्वोत्तरार्धयोर्विकल्पालंकारः । ' तुल्यबलविरोधे विकल्पः ' इति तल्लक्षणात् । काव्यलिङ्गपरिकरो-

१ शीकरैः. विमर्दिभिरार्द्रवातं सञ्चालयामि...तालवृन्तम्. २ संवाहयामि. ३ अङ्के निधाय. ४ जह एसो. ५ इदो तदो.

शकुन्तला—न माननीयेष्वात्मानमपराधयिष्ये । ( इत्युत्थाय गन्तुमिच्छति । ) ( क )

राजा—सुन्दरि अनिर्वाणो दिवसः इयं च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥ २० ॥

( इति बलादेनां निवर्तयति । )

शकुन्तला—पौरव रक्ष विनयम् । मदनसंतप्तापि न खल्वात्मनः प्रभवामि । ( ख )

राजा—भीरु अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्नात्र दोषं ग्रहीष्यति कुलपतिः । पश्य ।

---

( क ) ण माणणीएसु अत्ताणं अवराहइस्सं ।

( ख ) पोरव रक्ख विणैअं । मअणसंतावि ण हु अत्तणो पहवामि ।

---

पमावृत्त्यनुप्रासाश्च ॥१९॥ वसन्ततिलका वृत्तम् । अनेनोपन्यासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके–‘ प्रसादनमुपन्यासः ’ इति । अनेन माला नाम भूषणमप्युपक्षिप्तम । तल्लक्षणं तु–‘ माला स्याद्यदभीष्टार्थप्रकाशनम् ’ इति । सुन्दरीति । एतादृगवस्थायामपि सौन्दर्यस्य परित्यागो नास्तीति भावः । अनिर्वाणोऽपरिणतः । उत्सृज्येति । परितो वाधा पीडा यस्याः सा । पेलवैः कोमलैरङ्गैरुपलक्षिता । इदं परिबाधेत्यत्रार्थहेतुत्वेन योज्यम् । अथ वा शाब्दहेतुत्वेनैव योज्यम् । पेलवैरङ्गैर्हेतुभिरिति । कुसुमशयनमुत्सृज्य नलिनीदलकल्पितं स्तनावरणमुत्सृज्येत्यनेन तापातिशयो द्योत्यते । अत आतपे घर्मे कथं गमिष्यसि । स्वस्थोऽपि वस्त्रावरणादि हित्वातपे गन्तुमसमर्थस्त्वं तु स्वभावतः सुकुमाराङ्गा तत्रापि पीडायुक्ता तत्रापीदृगवस्था तत्रापि कुसुमशयननलिनीदलादि हित्वा सुतरां गन्तुमशक्तेति कथंशब्दार्थः । काव्यलिङ्गं हेतुर्वा । श्रुत्यनुप्रासवृत्त्यनुप्रासयोः पूर्वार्धे एकवाचकानुप्रवेशलक्षणः संकरः । उत्तरार्धे तु श्रुत्यनुप्रासवृत्त्यनुप्रासयोरेव संसृष्टिः । दन्त्यानामोष्ठ्यानां च बहूनां सद्भावात् । अत्र पेलवैरित्यत्र पर्यायं पठित्वा व्रीडाश्लीलदोषः परिहर्तव्यः ॥ २० ॥ रतेरनिर्वाहात्पौरवेति संबुद्धिः । मदनसंतप्तेति स्वेच्छायां सत्यामपि गुरुजनपराधीनत्वादसामर्थ्यम् । स्वेच्छा तु मदनसंतप्तेत्यनेनोक्ता । क्वचित्पुस्तके ‘ मअणवाहिआओ वि कण्णआओ अत्तणो ण प्पहवन्ति । ’ इति पाठः । मदनबाधिता अपि कन्यका इत्यप्रस्तुतप्रशंसा । दृष्ट्वा । अर्थात्त्वाम् । ते तव अत्र मत्परिग्रहे तत्रभवान्पूज्यः कुलपतिः कण्वो दोषं न ग्रहीष्यति । यतो विदितधर्मा श्रुतिस्मृत्याचारज्ञ

---

१ अपरिनिर्वाणः. २ समवस्था. ३ [illegible]. ४ न [illegible]. ५ अविणअं.

गान्धर्वेण विवाहेन बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ २१ ॥

शकुन्तला—मुञ्च तावन्माम् । भूयोऽपि सखीजनमनुमानयिष्ये ।(क)

राजा—भवतु । मोक्ष्यामि ।

शकुन्तला— कदा । ( ख )

राजा—

अपरिक्षतकोमलस्य यावत्कुसुमस्येव नवस्य षट्पदेन ।
अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य ॥ २२ ॥

( इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला परिहरति नाट्येन । )

( नेपथ्ये । )

चक्रवाकवधुके आमन्त्रयस्व सहचरम् । उपस्थिता रजनी । ( ग )

शकुन्तला—( ससंभ्रमम् । ) पौरव असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति । तद्विटपान्तरितो भव । ( घ )

---

( क ) मुञ्च दाव मं । भूओ वि सहीजणं अणुमाणइस्सं । ( ख ) कदा ।
( ग ) चक्कवाअवहुए अमन्तेहि सहअरं । उवट्ठिआ रअणी ।
( घ ) पोरव असंसअं मम सरीरवुत्तन्तोवलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि । ता विडवन्तरिदो होहि ।

---

इत्यर्थः । 'धर्मादनिच्केवलात्' इत्यनिच् । **गान्धर्वेणेति** । 'गान्धर्वः समयान्मिथः' इति स्मरणात् । अयं गान्धर्वो विवाहः । अनेनोपदिष्टं नाम भूषणमुक्तम् । तल्लक्षणं तु-'प्रतिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते । विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते'॥ इति ॥२१॥ **अपरिक्षतेति** । सुन्दरीति व्याख्यातचरम् । न विद्यते परिक्षतं यस्य स चासौ कोमलश्च । अथ चापरिक्षतं भ्रमरादिना कोमलं च तस्य नवस्य प्रथमास्वाद्यस्य । अथ च प्रथमविकसितस्य कुसुमस्येव तवास्य सुधासहोदरस्य मत्सुकृतोपचयलभ्यस्याधरस्य पिपासता पातुमिच्छता षट्पदेन भ्रमरेणेव मया सर्वदैतच्चित्तेनाधुना धन्यतरेण सदयं यावद्रसो गृह्यतेऽधरपानं क्रियते इति । यावदित्यवधौ । तदनन्तरं मोक्ष्यामीति भावः । सदयमित्यनेन बालालालनकौशलं ध्वनितम् । श्लेषवाच्योपमा । स्यस्ये इति सदसुन्देति छेकवृत्त्यनुप्रासाः । मालभारिणी वृत्तम् ॥ २२ ॥ समुन्नमयितुमिति त्रिपताकस्योत्तानाभ्यां मध्यमातर्जनीभ्यां चिबुकदेशगताभ्यामिति ज्ञेयम् । नाट्येनेति परावृत्तेन शिरसा विनिगूहितेनाधरेण । अनेन मुग्धाव्यवहारोऽप्युक्तः । 'मुग्धा नववयःकामा रतौ वामा' इति । चक्रवाकवधुके आमन्त्रयस्वापृच्छस्व सहचरम् । उपस्थिता रजनी । इयमप्रस्तुतप्रशंसा । तेन शकुन्तले प्रियमापृच्छस्वेति प्रकृतो गम्योऽर्थः । अत एव 'शकुन्तला—ससंभ्रमम्' इत्यादि । अनेन द्वितीयं पताकास्थानकमुक्तम् ।

---

१ राजन्य०, इव मुग्ध०. २ चानुमोदिताः. ३ तावत्.

**राजा**—तथा । ( इत्यात्मानमावृत्य तिष्ठति । )

( ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च । )

**सख्यौ**—इत इत आर्या गौतमी । ( क )

**गौतमी**—( शकुन्तलामुपेत्य । ) जाते अपि लघुसंतापानि तेऽङ्गानि । ( ख )

**शकुन्तला**—आर्ये अस्ति मे विशेषः । ( ग )

**गौतमी**—अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । ( शिरसि शकुन्तलामभ्युक्ष्य । ) वत्से परिणतो दिवसः । एहि । उटजमेव गच्छामः । ( घ )

( इति प्रस्थिताः । )

**शकुन्तला**—( आत्मगतम् । ) हृदय प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि । सानुशयविघटितस्य कथं ते सांप्रतं संतापः । ( पदान्तरे स्थित्वा । प्रकाशम् । ) लतावलय संतापहारक आमन्त्रये त्वां भूयोऽपि परिभोगाय । ( इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः । ) ( ङ )

---

( क ) इदो इदो अज्जा गोदमी ।

( ख ) जादे अवि लहुसंदावाइं दे अङ्गाइं ।

( ग ) अज्जे अत्थि मे विसेसो ।

( घ ) इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भविस्सदि । वच्छे परिणदो दिअहो । एहि । उडजं एव्व गच्छह्म ।

( ङ ) हिअअ पढमं एव्व सुहोवणदे मणोरहे कादरभावं ण मुञ्चसि । साणुसअविहडिअस्स कहं दे संपदं संदावो । लदावलअ संदावहारअ आमन्तेमि तुमं भूओ वि परिभोअस्स ।

---

तल्लक्षणं दशरूपके—'प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम् । पताकास्थानवत्तुल्यं संविधानविशेषणम् ॥' इति । वृत्तिकारेण व्याख्यातमन्योक्तिसमासोक्तिभेदादिति । तत्रान्योक्त्येदम् । समासोक्त्याग्रिमसंधौ भविष्यति । ससंभ्रमं सभयम् । 'उपलम्भस्त्वनुभवः' इत्यमरः । यावद्विटपान्तारितो भव । इदं व्याजमिति राज्ञो मनसि स्यात् तन्निवारणायासंशयमित्युक्तिः । अनेन निरोधो नामाङ्गमुपाक्षिप्तम् । तल्लक्षणं तु—'या तु व्यसनसंप्राप्तिर्निरोधः स तु कीर्त्यते ।' इति । अत्र स्वाभीष्टाच्युतिरेव व्यसनम् । जाते पुत्रि । अपीति प्रश्ने । लघुः स्वल्पः संतापो येषु तानि तेऽङ्गानि । अस्ति मे विशेषः । अनेन दर्भोदकेन दर्भसहितेनोदकेन । वैतानोदकेनेत्यर्थः । निराबाधं पीडारहितमेव ते शरीरं भविष्यति । हृदय प्रथममेव । एवकारो भिन्नक्रमः । नैव मुञ्चसीति मनोरथे

राजा—( पूर्वस्थानमुपेत्य । सनिःश्वासम् । ) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः । मया हि ।

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥ २३ ॥

क्व नु खलु संप्रति गच्छामि । अथ वा । इहैव प्रियापरिभुक्तमुक्ते लतावलये मुहूर्तं स्थास्यामि । ( सर्वतोऽवलोक्य । )

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि शून्यादपि ॥ २४ ॥

विषयस्य निगीर्णत्वादतिशयोक्तिः । सानुशयविघाटितस्य सपश्चात्तापं च तद्विघटितं च तस्य । 'अथानुशयो दीर्घद्वेषानुतापयोः ।' इत्यमरः । कथं ते सांप्रतं संतापः । यत्संगमे कातरता सत्संगमाभावे तदभाव एवोचितो न तु ताप इति कथंशब्दार्थः । लतावलय लतागृह संतापहारकेति । अथ च लतागृह संतापहारकेत्येकयोक्त्या दुष्यन्तलतागृहयोः संबोधनम् । वलयशब्देनाच्छादकत्वसाधर्म्येण गृहं लक्षयता गुप्ततरत्वमनोहरत्वादि ध्वनितम् । आमन्त्रये त्वां भूयोऽपि परिभोगाय सुखाय संभोगाय च । अनेन मनोरथो नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'मनोरथस्तु व्याजेन विवक्षितनिवेदनम् ।' इति । मुहुरिति । मुहुर्वारंवारमङ्गुल्या तर्जन्या संवृत आच्छादितोऽधरोष्ठो यत्र तत् । प्रतिषेधाक्षराणि मा मालमित्यादीनि तेषां यद्वैक्लव्यं स्फुटमनुच्चारणं तेनाभिरामम् । विक्लवशब्दो धर्मपरः । अंसे विवर्तितुं शीलं यस्य तत् । वलिते पक्ष्मले अक्षिणी यस्याः सा पक्ष्मलाक्षी तस्या मुखम् । अनेन चुम्बनार्थमुन्नमने योग्यता ध्वनिता । कथमपि महता कष्टेन । उन्नमितं चुम्बनार्थमूर्ध्वीकृतम् । न चुम्बितम् । तु पश्चात्तापे । तेन तावन्मात्रचुम्बनलाभेनापि कृतकृत्यता स्यादिति ध्वन्यते । स्वभावोक्तिः । श्रुतिवृत्त्यनुप्रासौ । कथमपीत्यस्यार्थे प्रति विशेषणत्रयार्थस्य हेतुत्वोपादानात्काव्यलिङ्गम् । वृत्तमनन्तरोक्तम् ॥ २३ ॥ तस्या इति । तस्याः पुर इव परिवर्तमानायाः पुष्पमयी न पल्लवमयी । तेषां ततोऽपि मृदुत्वात् । तेन तस्याः कोमलतरत्वं ध्वन्यते । शरीरेण संतप्तदेहेन लुलितेतस्ततः क्षिप्ता । शरीरस्य संतप्तत्वं प्रकरणलभ्यमिति नोक्तम् । शिलायामियं शय्येति यथादृष्टोक्तिः । क्रान्ता । एवमेष इदमित्यत्रापि । अत्रैषशब्दः समी-

१ तत्. २ परिभुक्ते. ३ आसज्य॰. ४ शक्नोमि, ईशोऽस्मि.

( आकाशे । )

राजन्—

सायंतने सवनकर्मणि संप्रवृत्ते
वेदिं हुताशनवतीं परितः प्रयस्ताः ।
छायाश्चरन्ति बहुधा भयमादधानाः
संध्यापयोदकपिशाः पिशिताशनानाम् ॥ २५ ॥

राजा—अयमहमागच्छामि । ( इति निष्क्रान्तः । )

## तृतीयोऽङ्कः ।

पतरत्वं वदन्मदनलेखस्य स्वोद्देशेन प्रियालिखितत्वेन च हृद्यतरत्वं ध्वनति । अत एव नेदमेतदोः प्रक्रमभङ्गः शङ्कनीयः । उक्तं च—'इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम् । ' इति । अतएव पुष्पाद्यविशेषेणोक्तम् । अत्र तु नलिनीपत्रे नखैरर्पित इति । विसाभरणं क्लान्तमित्येव । इत्यमुना प्रकारेणायं स्तनन्यस्तो मृणालभरः क्लान्तः । इति प्रकारशब्दार्थः । मध्यदीपकालंकारः । आसमन्तात्सज्यमाने स्वयमेव संबध्यमाने ईक्षणे यस्य सः । शून्यादपि तया विरहितादपि वेतसगृहात्सहसाकस्मान्निर्गन्तुं न शक्नोमि । तत्त्यक्तान्युपभोगचिह्नान्यत्यन्तं मम मनो रमयन्ति तत्र सा किमु वक्तव्येति भावः । हेत्वनुप्रासौ । अत्र निर्गमनकारणे शून्यत्वे सति यस्तदभावः सा विशेषोक्तिः । अथ च तत्सद्भावस्य कारणस्याभावेऽपि गमनाभावस्तत्कार्यमुक्तमिति विभावना । अत्र च कारणाभावस्ताद्विरुद्धोक्तिः । साधकबाधकप्रमाणाभावात्संदेहसंकरः । शार्दूलविक्रीडितं वृत्तम् । अस्य तुर्यचरणेन पुष्पं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'पुष्पं वाच्यं विशेषवत्' इति । **सायंतन इति** । सायंतने सायंकालीने । सवनकर्मणि यजनकर्मणि सम्यक्प्रवृत्ते न त्वादावेव । हुताशनवतीं वेदिं परितः प्रयस्ता इतस्ततो विक्षिप्ताः । क्वचित् 'प्रकीर्णाः' इति पाठः । संध्यापयोदवत्सायंकालीनमेघवत्कपिशाः पिङ्गलाः भयमादधानाः पिशिताशनानां रक्षसां छायाः पङ्क्तयो बहुधानेकवारं चरन्ति गतागतं कुर्वन्ति । परिप्रेति पिशापिशीति छेकवृत्तिश्रुत्यनुप्रासा उपमा च । वसन्ततिलका वृत्तम् । अत्रापि भयानको रसः । उक्तं च—'भये तु मन्तुना घोरदर्शनश्रवणादिभिः । चेतस्यतीव चाञ्चल्यं तत्प्रायो नीचमध्ययोः ॥' इति । तद्भयं स्थायिभावः । पिशिताशनच्छायावलोकनं विभावः पद्यस्थभयशब्देन त्रासलक्षणो व्यभिचारी । उद्दीपनविभावादिकं स्वयमूहनीयम् ॥ २५ ॥ **इति श्रीमदभिज्ञानशकुन्तलटीकायामर्थद्योतनिकायां तृतीयोऽङ्कः समाप्तः ॥**



१ सन्ध्यात्रक्कट.

## चतुर्थोऽङ्कः ।

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ । )

**अनसूया**—हला प्रियंवदे यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृगामिनी संवृत्तेत्ति निर्वृतं मे हृदयं तथाप्येतावच्चिन्तनीयम् । (क)

**प्रियंवदा**—कथमिव । (ख)

**अनसूया**— अद्य स राजर्षिरिष्टिं परिसमाप्यर्षिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति । (ग)

**प्रियंवदा**—विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति । (घ)

---

(क) हला पिअंवदे जइ वि गन्धव्वेण विहिणा णिव्वुत्तकल्लाणा सउन्दला अणूरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं तह वि एत्तिअं चिन्तणिज्जं ।

(ख) कहं विअ । (ग) अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विसज्जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति ।

(घ) वीसद्धा होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

---

अथ चतुर्थाङ्कादिपञ्चममध्ये ' यथोक्तं करोति' इत्यन्तेन गर्भसंधिरुक्तः । तल्लक्षणमादिभरते—'उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव च । पुनश्चान्वेषणं यत्र स गर्भः परिकीर्तितः ॥ ' इति । पूर्वसंध्युपक्षिप्ताप्तिः । दुर्वाससः शापादप्राप्तिः । पुनस्तस्य प्रसादेनाभिज्ञानदर्शनेन पुनः प्राप्तिरिति । अत्राप्याशापताकानुरोधादङ्गानि कल्पयेत् । कुसुमावचयं नाट्यन्त्याविति वामहस्तेनोत्तानेनारालेन दक्षिणेन पुरः पार्श्वादिस्थितेन । ' हस्तादाने चेरस्तेये' इति घञि कृते अवचाय इति भाव्यम् । तथा च वामनसूत्रम्—'अवतारावचायशब्दयोर्दीर्घव्यत्यासो वालानाम् । ' इति । अत्रोच्यते—'हस्तादानग्रहणे प्रत्यासत्तिरादेयस्य लक्ष्यते' इति वृत्तिकारेण व्याख्यातम् । हस्तादान इति किम् 'वृक्षशिखरे पुष्पप्रचयं करोति ' इति प्रत्युदाहृतम् । इदं च पंदमञ्जरीकारेण व्याख्यातम् । आरुह्य हस्तादानेऽप्यादेयस्य प्रत्यासत्त्यभावाद्धञभावः । एवमत्रापि तासां बालत्वादादेयस्य प्रत्यासत्त्यभावाद्धञभाव इति ज्ञेयम् । निर्वृत्तकल्याणा जातमङ्गला । निर्वृतं सुखितम् । प्रहित ऋषिभिर्विसर्जितः । अन्तःपुरे स्त्रीसमाजे समागतो मिलित इतोगतं वृत्तातं स्मरति वा न वा । अनेन वक्ष्यमाणेन दुर्वाससः शापेन राज्ञो नायिकाविस्मरणकारणं सूचितम् । विस्रब्धा [illegible]



१ अभिनयन्त्यौ. २ विवाहवि०. ३ भाइणी संवुत्ता तधावि ण णिव्वु० हिअअं.

अनसूया—यथाहं पश्यामि तथा तस्यानुमतं भवेत्। (क)

प्रियंवदा—कथमिव। (ख)

अनसूया—गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः। तं यदि दैवमेव संपादयति नन्वप्रयासेन कृतार्थो गुरुजनः। (ग)

प्रियंवदा—(पुष्पभाजनं विलोक्य।) सखि अवचितानि बलिकर्मपर्याप्तानि कुसुमानि। (घ)

अनसूया—ननु सख्याः शकुन्तलायाः सौभाग्यदेवतार्चनीया। (ङ)

प्रियंवदा—युज्यते। (च)

(इति तदेव कर्माभिनयतः।)

(नेपथ्ये।)

अयमहं भोः।

अनसूया—(कर्णं दत्त्वा।) सखि अतिथीनामिव निवेदितम्। (छ)

प्रियंवदा—ननूटजसंनिहिता शकुन्तला। (ज)

---

(क) जह अहं देक्खामि तह तस्स अणुमदं भवे। (ख) कहं विअ।

(ग) गुणवदे कण्णआ पडिवादणिज्जे त्ति अअं दाव पढमो संकप्पो। तं जइ देव्वं एव्व संपादेदि णं अप्पआसेण किदत्थो गुरुअणो।

(घ) सहि अवइंदाइं बलिकम्मपज्जत्ताइं कुसुमाइं। (ङ) णं सहीए सउन्दलाए सोहग्गदेवआ अच्चणीआ। (च) जुज्जदि।

(छ) सहि अदिधीणं विअ णिवेदिदं। (ज) णं उडजसण्णिहिदा सउन्दला।

---

भव। न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। 'यत्राकृतिस्तत्र गुणा वसन्ति।' इत्युक्तेः। तेन तस्मिन्दुष्यन्ते वञ्चनाविस्मरणादिकं न संभाव्यत इति भावः। यथाहं पश्यामि। अत्र दृशिर्ज्ञानार्थः। जानामीत्यर्थः। यथाशब्दो योग्यतायाम्। योग्यतयाहं जानामि। तस्यानुमतं भवेदिति। 'यथेति योग्यतावीप्सापदार्थानुवृत्तिसादृश्येषु।' इति दण्डनाथः। प्रथमो मुख्यः संकल्पो मानसं कर्म तं यदि दैवमेव संपादयति। नन्ववधारणे। अप्रयासेन प्रयासाभावेन कृतार्थो गुरुजनः। सखि अवचितानि बलिकर्म पूजाकर्म तत्पर्याप्तानि कुसुमानि। ननु परमताक्षेपे। तदेव कुसुमावचयलक्षणमेव। निवेदितम्। भावे क्तः। ननु

---

१ [illegible] २ [illegible] ३ [illegible] ४ अदिहिणा. ५ उडजे. ६ अस्मात्परं-(आत्मगतम्।) अज्ज उण हिअएण असण्णिहिदा। अन ०होदु। अलं इ०। इ० पा०.

**अनसूया**—अद्य पुनर्हृदयेनासंनिहिता[1] । अलमेतावद्भिः कुसुमैः । ( क )

( इति प्रस्थिते । )

( नेपथ्ये । )

आः[2] अतिथिपरिभाविनि—

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि स-
न्कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

**प्रियंवदा**—हा धिक् हा धिक् । अप्रियमेव संवृत्तम् । कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला । ( पुरोऽवलोक्य । ) न खलु यस्मिन्कस्मिन्नपि । एष दुर्वासाः सुलभकोपो महर्षिः । तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । ( ख )

**अनसूया**—कोऽन्यो हुतवहाद्दग्धुं प्रभवति । गच्छ । पादयोः प्रणम्य निवर्तयैनं यावदहमर्घोदकमुपकल्पयामि । ( ग )

**प्रियंवदा**—तथा । ( इति निष्क्रान्ता । ) ( घ )

---

( क ) अज्ज उण हिअएण असण्णिहिदा । अलं एत्तिएहिं कुसुमेहिं ।
( ख ) हद्धी हद्धी । अप्पिअं एव्व संवुत्तं । कस्सिं पि पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला । ण हु जस्सिं कस्सिं पि । एसो दुव्वासो सुलहकोवो महेसी । तह सविअ वेअबलुप्फुल्लाए दुव्वाराए गईए पडिणिवुत्तो ।
( ग ) को अण्णो हुदवहादो दहिदुं पहवदि । गच्छ । पादेसु पणमिअ णिवत्तेहि णं जाव अहं अग्घोदअं उवकप्पेमि । ( घ ) तह ।

---

संबोधने । हृदयेनासंनिहिता । दुष्यन्तगतहृदयेत्यर्थः । **विचिन्तयन्तीति** । यं विचिन्तयन्त्यनन्यमानसा त्वं मां दुर्वाससमुपस्थितमागतं तपोधनम् । त्रयं विधेयम् । न वेत्सि स त्वां स्वयं न स्मरिष्यत्येव परंतु बोधितोऽपि न स्मरिष्यतीत्यपिशब्दार्थः । कः कामिव । प्रकर्षेण मत्तः प्रथमं पूर्वं कृतां कथामिव । स राजा कीदृशः । प्रमत्तोऽवधानरहितः । 'प्रमादोऽनवधानता' इत्यमरः । तेनासमर्थदोषः परिहृतः । त्वां कीदृशीम् । पूर्वं कृतामङ्गीकृताम् । काव्यलिङ्गोपमाश्लेषाः । तयतीयेति मनमानेति नससन्निति प्रप्रेति छेकवृत्त्यनुप्रासाः । वंशस्थं वृत्तम् ॥ १ ॥ कोऽन्यो हुतवहाद्दग्धुं प्रभवति । दृष्टान्तालंकारः । गच्छ ।

---

१ पुनर्नें॰. २ आः कथमतिथिं मां परिभवासि. ३ अस्मात्प्राक्-( त्वरया उभे-श्रुत्वा विषण्णे । ). ४ तं एव्व ( तदेव ). ५ चट्टलहुवाराए [illegible] अविरलपादतुवराए. ६ पिअंवदे गच्छ. ७ गोण्हिअ उवसप्पामि.

अनसूया—( पदान्तरे स्खलितं निरूप्य । ) अहो । आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम् । ( इति पुष्पोच्चयं रूपयति । )(क)

( प्रविश्य । )

प्रियंवदा—सखि प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति । किमपि पुनः सानुक्रोशः कृतः । ( ख )

अनसूया—( सस्मितम् । ) तस्मिन्बह्वेतदपि । कथय । ( ग )

प्रियंवदा—यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया । भगवन् प्रथम इति प्रेक्ष्याविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षयितव्य इति । ( घ )

अनसूया—ततस्ततः । ( ङ )

प्रियंवदा—ततो न मे वचनमन्यथाभवितुमर्हति । किं त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यत इति मन्त्रयमाण एवान्तर्हितः । (च)

---

( क ) अम्मो । आवेअक्खलिदाए गईए पब्भट्ठं मे अग्गहत्थादो पुप्फभाअणं ।

( ख ) सहि पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि । किं वि उण साणुक्कोसो किदो । ( ग ) तस्सिं बहु एदं पि । कहेहि ।

( घ ) जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए । भअवं पढम त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वो त्ति ।

( ङ ) तदो तदो ।

( च ) तदो ण मे वअणं अण्णहाभविदुं अरिहदि । किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदित्ति मन्तअन्तो एव्व अन्तरिहिदो ।

---

पादयोरिति द्वितीयार्थे सप्तमी । अम्मो इति दुःखे । 'अम्मो सूचनादुःखसंभाषण–' इत्यादिसूत्रेण निपातः । आवेगस्खलितया संभ्रमस्खालितया । अनेनापशकुनेन दुर्वाससोऽनिवृत्तिः सूचिता । अत्राग्रः स चासौ हस्तश्चेति समानाधिकरणे विशेषणसमासेऽवयवावयविसंबन्धेन लक्षणा । उक्तं च वामनेन—' हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम् । ' इति । अन्ये त्वग्रहस्त इत्यखण्ड एवायं शब्दो हस्ताग्रवाचक इत्याहुः । अपरे तु हस्तस्याग्रमित्येव विगृह्याग्रशब्दस्याहिताग्न्यादिपाठात्पूर्वनिपातमाहुः । इतरे तु प्राकृते पूर्वनिपातनियमाभावाद्धस्ताग्रशब्दमेवाहुः । किंचित्पुनः सानुक्रोशः सकृपः कृतः । ' कृपा दयानुकम्पा स्यादनुक्रोशोऽपि ' इत्यमरः । भगवन् प्रथम इति प्रेक्ष्य विचार्य । अत्र कोपः कर्तुं युक्तो न वेति विचार्येत्यर्थः । अविज्ञाततपःप्रभावस्य इति अयमर्थः—

---

१ पुप्फावचयं. २ अव्वो. ३ दाए ( स्खलितायाः ) पब्भट्टं. ४ अणं । ता पुणो वि अवचिणिस्सं । ( तथा करोति । ) ५ किंचि ( किंचित ). ६ सअं ( स्वयं ).

अनसूया—शक्यमिदानीमाश्वासितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति । ( क )

प्रियंवदा—सखि एहि । देवकार्यं तावदस्या निर्वर्तयावः । ( ख )

( इति परिक्रामतः । )

प्रियंवदा—( विलोक्य । ) अनसूये पश्य तावत् । वामहस्तोपहितवदनालिखितेव प्रियसखी । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति । किं पुनरागन्तुकम् । ( ग )

अनसूया—प्रियंवदे द्वयोरेव नौ मुख एष वृत्तान्तस्तिष्ठतु । रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी । ( घ )

प्रियंवदा—को नामोष्णोदकेन नवमालिकां सिञ्चति । ( ङ )

( इति[2] निष्क्रान्ते । )

विष्कम्भः ।

( क ) सक्कं दाणिं अस्ससिदुं । अत्थि तेण राएसिणा संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअंत्ति सअं पिणद्धं । तस्सिं साहीणोवाआ सउन्दला भविस्सदि ।

( ख ) सहि एहि । देवकज्जं दाव से णिव्वत्तेह्म ।

( ग ) अणसूए पेक्ख दाव । वामहत्थोवहिदवअणा आलिहिदा विअ पिअसही । भत्तुगदाए चिन्ताए अत्ताणं पि ण एसा विभावेदि । किं उण आअन्तुअं ।

( घ ) पिअंवदे दुवेणं एव्व णो मुहे एसो वुत्तन्तो चिट्ठदु । रक्खिदव्वा क्खु पकिदिपेलवा पिअसही ।

( ङ ) को णाम उण्होदएण णोमालिअं सिञ्चेदि ।

यथा सा कण्वदुहिता तद्वत्तव दुहिता । अथ च दुहिता बालिकात एवाविज्ञाततपःप्रभावा । अतोऽस्याः प्रथम एकोऽपराध इति सोढव्यः । मन्त्रयन्कथयन् । स्वयं पिनद्धं परिधापितम् । अस्तीत्यन्वयः । विलोक्येति । शकुन्तलामिति शेषः । वामहस्तोपहितवदना । अत्र वामहस्तग्रहणं स्त्रीस्वभावात् । आलिखितेवेत्युत्प्रेक्षा । अतिनिश्चलत्वं सादृश्यं गम्यम् । प्रियसखी शकुन्तला । भर्तृगतया चिन्तयात्मानमपि नैषा विभावयति जानाति । काहं किं करोमि कुत्र तिष्ठामीत्याद्यात्मविषयकमपि ज्ञानं नास्तीत्यर्थः । किं पुनरागन्तुकम् । विभावयतीत्यनुषज्यते । तज्ज्ञानं दूरापास्तमित्यर्थः । द्वयोरेव । नन्वनुमतौ आवयोर्मुख एष वृत्तान्तस्तिष्ठतु । स्थितेः प्राप्तकालतेत्यर्थः । रक्षितव्येति. पूर्ववाक्यं प्रत्यार्थो हेतुः । को नामोष्णोदकेन नवमालिकां सिञ्चति । वैधर्म्य-

१ अवलोक्य. २ उभे नि०. ३ एव्व पं ( नन्नु ). ४ दाणिं ( इदानीं ).

( ततः प्रविशति सुप्तोत्थितः शिष्यः । )

शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन काश्यपेन । प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च । ) हन्त प्रभातम् । तथा हि ।

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवात्मदशान्तरेषु ॥ २ ॥

अपि च ।

---

दृष्टान्तः 'दुष्योः' इत्यादिनैतदन्तेन शकुन्तलां प्रति शापाकथनच्छद्मनाभूताहरणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कपटाश्रयं यद्वाक्यमभूताहरणं विदुः ।' इति । विष्कम्भलक्षणं पूर्वोक्तम् । अयमपि शुद्धविष्कम्भः केवलं प्राकृतेन कृतत्वात् । वेलोपलक्षणार्थं समयज्ञानार्थम् । 'वेला काले च जलधेस्तीरनीरविकारयोः ।' इति विश्वः । यातीति । ओषधीनां पतिश्चन्द्रः । अतिदुःसहमरणादिविपत्तिसहस्रविनाशका ओषधयस्तासां पतिरप्यस्तशिखरं यातीतीममर्थमभिद्योतयितुमेतत्पदव्यपदेशः । शिखरपदेनात्युच्चैःपतनायेति सूचितम् । अरुणोऽनूरुः पुरःसरो यस्य स तादृशोऽर्क एकतः पूर्वत आविष्कृतः प्रकटीभूतः । [ पाठान्तरे—आविष्कृतोऽरुणः पुरःसरो येन । ] तेजोद्वयस्य चन्द्रसूर्यरूपस्य युगपदेकदा एकसमयोभयदर्शनेनैव नियमः कर्तुं शक्यते न तु क्रमिकदर्शनेनेति युगपदित्युक्तिः । व्यसनोदयाभ्यामस्तसमयोदयाभ्यां विपत्संपद्भ्यां च हेतुभ्याम् । लोको जनः । आत्मदशान्तरेषु स्वदशाविशेषेषु । अन्तरशब्दो विशेषवाची । नियम्यत इवेत्युत्प्रेक्षा । स्वस्वविपत्तिदशायां केनापि दुःखहर्षौ न कार्याविति भावः । अत्र पूर्वार्धे यः कश्चिदतिसमृद्धभृत्योऽपि नाशं यात्यन्यो यं कंचनासमर्थं सर्वदा स्वाश्रितमुदयन्नेव स्वयमुदयं गच्छतीति सत्पुरुषद्वयव्यवहारसमारोपात्समासोक्तिः । उत्तरार्धे च नियम्यत इति तत्सदाचरणे प्रयोगात्तेन तद्वस्तु (?) संबन्धसामर्थ्याद्बिम्बप्रतिबिम्बकल्पनरूपा निदर्शना व्यङ्ग्या । उत्प्रेक्षाया वाच्यत्वात् । अत्र प्रभातवर्णने प्रकृत उभयोरपि प्राकरणिकत्वादरुणपुरःसरत्वस्य समानतया तुल्ययोगितापि । तेजोद्वयस्य व्यसनोदयाभ्यामिति यथासंख्यमपि । हेतुश्च । कतोकतोइति द्वयद्वयेति छेकवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् । उद्देश्यप्रतिनिर्देश्ययोरेकपदोपादाननियमे सत्यप्यत्रौषधिपत्यर्कशब्दोद्देश्यत्वेऽपि सर्वनामवत्तेजोद्वयस्य प्रतिनिर्देशेऽपि तत्र तयोरिति तेजोरूपस्फुरणाज्जगत्स्थितिकारणस्य तेजोद्वयस्येदृशी गतिरन्यस्य किमु वक्तव्यमित्यर्थस्फुरणाच्च सहृदयानामर्थपो-

---

१ प्रभासात्प्रतिनिवृत्तेनोपाध्यायकाश्यपेन । तत्काश्यपेन । निर्गत्य, ०सात्प्रतिनिवृत्तेन कण्वेन. २ ०ष्टं विर्भावयति ० प्रभातप्राया रजनी. ३ ०ष्कृतारुण. ४ इवैष.

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य
दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ३ ॥

( प्रविश्यापटीक्षेपेण । )

**अनसूया**—यद्यपि नाम विषयपराङ्मुखस्य जनस्यैतन्न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम् । ( क )

**शिष्यः**—यावदुपस्थितां होमवेलां गुरवे निवेदयामि । ( इति निष्क्रान्तः । )

---

( क ) जइ वि णाम विसअपरम्मुहस्स जणस्स एदं ण विदिअं तह वि तेण रण्णा सउन्दलाए अणज्जं आअरिदं ।

---

येण चमत्कारमेवावहतीत्येतादृशस्थले न दोषावकाश इति ज्ञेयम् ॥ २ ॥ अन्तरिति । शशिनि चन्द्रेऽन्तर्हिते । ' अन्तर्धा व्यवधा ' इत्यमरः । यतः स शशयुक्तः कलङ्की अतस्तस्यान्तर्धानमुचितमिति भावः । या पूर्वं विकसितकुसुमा कमलोपहारकारिणी सैव तत्रापि या काचन न भवति । अपि तु पृथिवीहर्षकारिणी मे तापसस्य विषयादिविवेकशून्यस्य दृष्टिं न नन्दयति न हर्षयति । तत्रार्थो हेतुः । कीदृशी । संस्मरणीयादृश्या शोभा यस्याः सा । इष्टः प्रियस्तस्य प्रवासो देशान्तरस्थितिस्तेन जनितानि दुःखानि । अबलाजनस्येति सुदुःसहत्वेनोक्तम् । अन्यथा स्त्रीजनस्येत्येव ब्रूयात् । जनशब्देन जातिमात्रग्रहणम् । नूनं निश्चितम् । अतिमात्रमत्यर्थं सुदुःसहानि । अतिमात्रसुशब्दौ दुःसहत्वस्याप्यशक्यानुष्ठानं बोधयतः । अत्र पूर्वार्धे नायकेऽन्तर्हिते नायिका दृष्टिं न नन्दयतीति नायकयोर्व्यवहारसमारोपात्समासोक्तिः । उत्तरार्धेन सामान्येन विशेष्यस्य समर्थनादर्थान्तरन्यासः । इष्टेति जनिजनेति मतिमात्रेति छेकवृत्तिश्रुत्यनुप्रासाः । काव्यलिङ्गं च । वृत्तमनन्तरोक्तमेव । अथ च कौ पृथिव्यां मुद्वती हर्षयुक्ता सैव पूर्वं दृष्टा शकुन्तला शशिनीति दुष्यन्ते विषयनिगरणात्तद्वंशोद्भवत्वाद्वान्तर्हितेऽसंनिहिते इत्यादि पूर्वार्धे सर्वं योज्यम् । तेनास्या राजगृहं प्रति प्रस्थापनसूचकं तृतीयं पताकास्थानमुपक्षिप्तम् । तल्लक्षणमुक्तं मातृगुप्ताचार्यैः—' अर्थोपक्षेपणं यत्र गूढं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयं तन्मतं तथा ॥ ' इति ॥ ३ ॥ अपटीक्षेपेण प्रवेशः । ' नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च ' इत्युक्तेः । अपटी जवनिका । ' अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्कारिणी । ' इति हलायुधः । यद्यप्येवमपि नाम विषयपराङ्मुखस्यापि जनस्याप्येतन्निवेदितमपि न विदितमेवेति योज्यम् । अपेरवधारणा-

---

१ पटीक्षे०, अपटा०. २ एवं णाम० स्सवि इमस्स जनस्स ण एदं ण, एवं वि णाम० ॰नस्स एदं ण विदितं जधा तेण. ३ इस्स वि.

**अनसूया**—प्रतिबुद्धापि किं करिष्यामि । न म उचितेष्वपि निजकरणीयेषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु येनासत्यसंधे जने शुद्धहृदया सखी पदं कारिता । अथवा दुर्वासःशाप एष विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावतः कालस्य लेखमात्रमपि न विसृजति । तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् । ननु सखीगामी दोष इति व्यवसितापि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकाश्यपस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभिः किं करणीयम् । ( क )

( प्रविश्य । )

**प्रियंवदा**—( सहर्षम् । ) सखि त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् । ( ख )

---

( क ) पडिबुद्धा वि किं करिस्सं । ण मे उइदेसु वि णिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु जेण असच्चसंधे जणे सुध्धहिअआ सही पदं कारिदा । अहवा दुव्वाससंसावो एसो विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्स लेहमेत्तं पि ण विसज्जेदि । तों इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम । दुक्खसीले तवस्सिजणे को अब्भत्थीअदु । णं सहीगामी दोसो त्ति व्यवसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकस्सवस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदुं । इत्थंगदे अह्मेहिं किं करणिज्जं ।

( ख ) सहि तुवर तुवर सउन्दलाए पत्थाणकोदुअं णिवत्तिदुं ।

---

र्थत्वात् । होमवेलानिवेदनार्थं गते शिष्येऽस्यास्तत्र संमार्जनादि कर्तुमार्यया एव प्रबोधकाल इति वदति । प्रतिबुद्धोत्थितापि । काम इदानीं सकामो भवतु । अयमर्थः । सर्वदा वक्रोऽनार्येष्वेव प्रवर्तत इति साभिलाषो भवतु । तस्याभिलाषः पूर्यतामिति । येन कामेनासत्यसंधेऽसत्यप्रतिज्ञे । 'संधा प्रतिज्ञा मर्यादा' इत्यमरः । जने शून्यहृदया सखी पदं स्थानं कारिता । शून्यहृदयपदं हेतुत्वेनोपात्तम् । अथवा दुर्वाससः कोप एष विकारयत्यन्यथा कारयति । 'वर्णासहर्षो अन्यथात्वपरिणामेषु' इति गणपाठात् । अन्यथा कथं स राजर्षिरिति साभिप्रायम् । तपस्विजने कोऽभ्यर्थ्यते । तत्र गन्तुमिति शेषः । व्यवसितापि जातव्यवसायापि । आपन्नसत्त्वां गुर्विणीम् । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।' इत्यमरः । शकुन्तलां निवेदयितुं सखीगामी दोष इति निवेदयितुं न पारयामीति संबन्धः । अनेन देववाण्यास्या अन्तर्वत्नीत्वं श्रावयिष्यत इति

---

१ णं पहादा रअणी । ता सिग्घं सहणं परिच्चआमि । अहवा लहुलहु उत्थिदावि किं; ०देसु पहादकर. २ पिअसही सु०,सुण्णहि०;सही सउन्दला. ३ ससो, व्वासकोवो ( कोपः ) ( सत्वरा । ) अहवा ण तस्स तावसिणो अवराहो ( अपराधः ) दु... कोवो एत्थ विप्पकरेदि, ०कोवो क्खु एसो पहवदि. ४ (विचिन्त्य ।) ता. ५ दुस्सीले. ६ णु क्खु कर.

अनसूया—सखी कथमेतत् । ( क )

प्रियंवदा—शृणु । इदानीं सुखशयितपृच्छिका शकुन्तलासकाशं गतास्मि । ( ख )

अनसूया—ततस्ततः । ( ग )

प्रियंवदा—यावदेनां लज्जावनतमुखीं परिष्वज्य तातकाश्यपेनैवमभिनन्दितम् । दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से सुशिष्यपरिदत्ता विद्येवाशोचनीयासि संवृत्ता । अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति । ( घ )

अनसूया—अथ केन सूचितस्तातकाश्यपस्य वृत्तान्तः ।

प्रियंवदा—अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या । ( च )

---

( क ) सहि कहं एदं ।

( ख ) सुणाहि । दाणिं सुहसइदपुच्छिआ सउन्दलासआसं गदह्मि ।

( ग ) तदो तदो ।

( घ ) जावें एणं लज्जावणदमुँहिं परिस्सजिअ तादकस्सवेण एव्वं अहिणन्दिदं । दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स पावए एव्व आहुदी पडिदा । वच्छे सुसिस्सपरिदिण्णा विज्जा विअ असोअणिज्जासि संवुत्ता । अज्ज एव्व इसिरँक्खिदं तुमं भत्तुणो सआसं विसज्जेमित्ति ।

( ङ ) अह केण सूइदो तादकस्सवस्स वुँत्तन्तो ।

( च ) अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाँणिआए ।

---

सूचितम् । प्रस्थाने गमनसमये कौतुकं पारम्पर्यागतमङ्गलं निर्वर्तयितुं संपादयितुम् । 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि । पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः ॥' इति हैमः । सुखशयनपृच्छिका प्रातर्गत्वा रात्रौ तव सुखशयनं जातमिति या पृच्छति सा सुखशयनपृच्छिकेत्युच्यते । तेन प्रातः सुखशयनं प्रष्टुं गतास्मीत्यर्थः । पावक एवाहुतिः पतिता । अनेन दृष्टान्तेन स्वस्य कृतकृत्यता ध्वनिता । ममायासं विनैव वाञ्छितस्थले संबन्धो जात इत्यर्थः । वत्से सुशिष्यपरिदत्ता विद्येवाशोचनीयासि संवृत्ता । अनेन तस्याः कृतकृत्यता ध्वनिता । विसर्जयामीति 'वर्तमानसामीप्ये—' इति लट् । अथ केन सूचितः कथितस्तातकाश्यपस्य वृत्तान्तः । अग्निशरणमग्निहोत्रगृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । प्रविष्टस्य शरीरं विनाशरीरिण्या छन्दोमय्या वाण्या सूचित इत्यर्थः । संस्कृतमाश्रित्येति । अत्र चाशरीरिणीवाण्यनुवाद एव

---

१ शयन, सुखसुप्तिकाप्रच्छननिमित्तम्. २ ह्मि. ३ मुहं णअं ( वदनां ). ४ इसि-परिग्गहिदं. ५ अभ वु०. ६ वाआए ( वाचा ).

**अनसूया**—( सविस्मयम् । ) कथमिव । ( क )

**प्रियंवदा**—( संस्कृतमाश्रित्य । )

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४ ॥

**अनसूया**—( प्रियंवदामाश्लिष्य । ) सखि प्रियं मे । किं त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि । ( ख )

**प्रियंवदा**—सखि आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु । ( ग )

**अनसूया**—तेन ह्येतस्मिंश्चूतशाखावलम्बिते नालिकेरसमुद्गक एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसंनिहितां कुरु । यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि । ( घ )

---

( क ) केहं[1] विअ ।

( ख ) सहि पिअं मे[2] । किंदु अज्ज एव्व सउन्दला णीअदित्ति उक्कण्ठासाहारणं परितोसं अणुहोमि ।

( ग ) सहि वअं दाव उक्कण्ठं विणोदइस्सामो । सा तवस्सिणी णिव्वुदा होदु ।

( घ ) तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए केसरमालिआ । ता इमं हत्थसण्णिहिदं करेहि । जाव अहंपि से मि[3]अलोअणं तित्थमित्तिअं दुव्वाकिसलआणित्ति मङ्गलसमालम्भणाणि विरएमि ।

---

कारणम् । यथास्थितस्यैवानुवादः । स च संस्कृतमन्तरेण न संभवतीति संस्कृताश्रयणम् । दुष्यन्तेनेति । नामानुकीर्तनेन सोमवंशोद्भवत्वेन किमप्याभिजात्यमौदार्यधैर्यविनयादिगुणसंपन्नत्वं च व्यज्यते । भुवः भूतय ऐश्वर्यायेति । अनेन तस्य भाविचक्रवर्तित्वं ध्वन्यते । आहितं निषिक्तं तेजो दधानाम् । तेज इति विषयनिगरणेनातिशयोक्तिः । तेन तेजस्त्रयरूपत्वं गर्भस्य ध्वनितम् । तनयामेवेहि जानीहि । अग्निगर्भां शमीमिवेति सहजपूतत्वं ध्वनितम् । उपमानुप्रासौ ॥ ४ ॥ अनेन मार्गलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—‘ भूतार्थवचनं चैष मार्ग इत्यभिधीयते । ’ इति । अशरीरिण्या वाचा सत्यार्थकथनात्प्राप्त्याशानुगमत्वम् । प्रियं मे । तेनोत्कण्ठा परितोषश्च । उभयमप्यनुभवामीत्यर्थः । वयं तावदुत्कण्ठां विनोदयिष्यामः । सा तपस्विन्यनुकम्पार्हा निर्वृता सुखिता भवतु । ‘ तपस्वी चानुकम्पार्हः ’ इत्यमरः । समुद्गके संपुटके । केसरमालिका बकुलमाला । तदिमां हस्तसंनिहितां कुरु गृहाणेत्यर्थः । यावदहमपि तस्यै

---



१ कहंहि ( कथय ). २ मे पिअं मे. ३ गोरोअणं.

**प्रियंवदा**—तथा क्रियताम् । ( क )

( अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति । )

( नेपथ्ये । )

गौतमि आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।

**प्रियंवदा**—( कर्णं दत्त्वा । ) अनसूये त्वरस्व त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषयः शब्दाय्यन्ते । ( ख )

( प्रविश्य समालम्भनहस्ता । )

**अनसूया**—सखि एहि । गच्छावः । ( ग )

( इति परिक्रामतः । )

**प्रियंवदा**—( विलोक्य । ) एषा सूर्योदय एव शिखामज्जिता प्रतीष्टनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एनाम् । ( घ )

( इत्युपसर्पतः । )

( ततः प्रविशति यथोद्दिष्टव्यापारा आसनस्था शकुन्तला । )

**तापसीनामन्यतमा**—( शकुन्तलां प्रति । ) जाते भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व । ( ङ )

---

( क ) तह करीअदु ।

( ख ) अनसूए तुवर तुवर । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दावीअन्ति ।

( ग ) सहि एहि । गच्छह्म ।

( घ ) एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणिकाहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उवसप्पह्म णं ।

( ङ ) जादे भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि ।

---

तदर्थम् । ' तादर्थ्ये ङिव ' इति विकल्पेन षष्ठीविधानात् । मृगरोचनां गोरोचनाम् । ' मृगः पशौ कुरङ्गे च ' इति विश्वः । तीर्थमृत्तिकां दूर्वाकिसलयानि दूर्वाङ्कुरा इत्येतद्रूपाणि मङ्गलसमालम्भनानि मङ्गलालंकरणानि विरचयाम्येकत्र करोमीत्यर्थः । ' समालम्भनमालेपे तिलकेऽलंकृतावपि । ' इति यादवप्रकाशः । शिखामज्जिता मज्जनं स्नानं कारिता । अभ्यङ्गस्नानं कारितेति यावत् । प्रतीष्टा गृहीता नीवारा यैरेवंभूता हस्ता यासां ताभिः । शून्यहस्तानामागमनमनुचितमिति नीवारेत्याद्युक्तिः । स्वस्तिवाचनिकाभिः पारम्पर्येण स्वस्तिवाचनाधिकारिणीभिस्तापसीभिस्तपस्विसुवासिनीभिराशीर्भिः अभिनन्द्यमानानुगृह्यमाणा । जाते पुत्रि ।

द्वितीया—वत्से वीरप्रसविनी भव । ( क )

तृतीया—वत्से भर्तुर्बहुमता भव । ( ख )

( इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः । )

सख्यौ—( उपसृत्य । ) सखि सुखमज्जनं ते भवतु । ( ग )

शकुन्तला—स्वागतं मे सख्योः । इतो निषीदतम् । ( घ )

उभे—( मङ्गलपात्राण्यादाय । उपविश्य । ) हला सज्जा भव । यावत्ते मङ्गलसमालम्भनं विरचयावः । ( ङ )

शकुन्तला—इदमपि बहु मन्तव्यम् । दुर्लभमिदानीं मे सखीमण्डनं भविष्यति । ( इति बाष्पं विसृजति । ) ( च )

उभे—सखि उचितं न ते मङ्गलकाले रोदितुम् । ( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । ) ( छ )

प्रियंवदा—आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते । (ज)

( प्रविश्योपायनहस्तावृषिकुमारकौ । )

उभौ—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

( सर्वा विलोक्य विस्मिताः । )

गौतमी—वत्स नारद कुत एतत् । ( झ )

प्रथमः—तातकाश्यपप्रभावात् ।

---

( क ) वच्छे वीरप्पसविणी होहि । ( ख ) वच्छे भत्तुणो बहुमदा होहि ।
( ग ) सहि सुहमज्जणं दे होदु । ( घ ) साअदं मे सहीणं । इदो णिसीदह ।
( ङ ) हला सज्जा होहि । जाव दे मङ्गलसमालम्भणं विरएम ।
( च ) इदं पि बहु मन्तव्वं । दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि ।
( छ ) सहि उइअं ण दे मङ्गलकाले रोइदुं ।
( ज ) आहरणोइदं रूपं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।
( झ ) वच्छ णारअ कुदो एदं ।

---

[ वीरं प्रसूते इति ] वीरप्रसविनी । [ गौतमीं वर्जयित्वा ] गौतमीवर्जम् । सुखमज्जनं सुस्नानं ते भवतु । उचितं न ते मङ्गलकाले रोदितुम् । अनेन भविष्यद्वियोगः सूचितः । अश्रूणि प्रमृज्येति त्रिपताकानामिकया नेत्रदेशगतया । त्रिपताकलक्षणमुक्तं प्राक् ( २९ पृष्ठे ) । आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते । विकृतं क्रियत इत्यर्थः । आभरणोचितमित्यनेन सूचितमाभरणम् । तद्द्वारा तदानयनकर्तॄणामपि सूचनमार्थम् । इत्यृषिकुमारयोः प्रवेशः । विस्मिता इति । अकस्मादलंकारदर्शनेन तेषां चा-



१ विहरन्ति, विकिरति. २ दाव, दाव पुणो. ३ नि[illegible]. ४ हा[illegible].

**गौतमी**—किं मानसी सिद्धिः । ( क )

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-
र्दत्तान्याभरणानि तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ५ ॥

**प्रियंवदा**—( शकुन्तलां विलोक्य । ) हला अनयाभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीः । ( ख )

( शकुन्तला व्रीडां रूपयति । )

---

( क ) किं माणसी सिद्धी । ( ख ) हला इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छिं ।

---

तिरमणीयत्वदर्शनेन न खल्विति पूर्वस्योत्तररूपं भिन्नं वाक्यम् । क्षौममिति । केनचित्तरुणेन्दुवत्पाण्डु श्वेतम् । मङ्गलकर्मणि साधु मङ्गल्यम् । अनुपहतदशं गोरोचनाचित्रितपर्यन्तं युगलं चेत्यर्थः । अत एवाग्रे ' परिधेहि संपदं खोमजुअलं ' इति । क्षौमं दुकूलमाविष्कृतं दत्तम् । केनचित्तरुणेत्यनुषज्यते । चरण उपभोगो रञ्जनादिस्तत्र सुलभो योग्यः । अनेन विशेषणेनानेकप्रयत्नजनितचरणालेपनयोग्यतायत्नसिद्धेति ध्वनितम् । लाक्षारसोऽलक्तकद्रवो निष्ठ्यूतो दत्तः । पूर्वोक्तरीत्यात्राप्यश्लीलपरिहारः । अन्येभ्यो वृक्षेभ्यः किसलयोद्भेदा उद्भिद्यमानपल्लवाः लक्षणया रक्ततरत्वकोमलत्वादि व्यङ्ग्यम् । तत्प्रतिद्वन्द्विभिस्तत्प्रतिस्पर्धिभिः । तादृशैरिति यावत् । पर्वभागं मर्यादीकृत्योत्थितैर्वनदेवताकरतलैराभरणानि दत्तानीत्यन्वयः । अत्र वनदेवताकरतलदत्ताभरणेन तस्या आजन्मावैधव्यसौभाग्ये आभरणानामनर्घत्वादि च व्यज्यते । तत्किसलयेति विशेषणावकाशदानाय तलग्रहणम् । आपर्वेति विशेषणेन वनदेवतानामदृश्यत्वं सूचयता करतलभागस्यैव दृश्यत्वं वदता तासामेव करणत्वमस्तु किं तद्धस्ततलैरिति शङ्का निरस्ता । स्वभावोक्तिपर्यवसितेन तत्किसलयेति तद्विशेषणेन तेषूद्भेदयोग्यता ध्वनिता । उपमयोः संसृष्टिः । श्रुतिवृत्त्यनुप्रासौ । अर्थावृत्तिर्हेतुश्च । शार्दूलविक्रीडितं वृत्तम् । ' अन्यैस्तैः ' इति पठित्वा कर्तृप्रक्रमभङ्गः परिहर्तव्यः ॥ ५ ॥ अनयाभ्युपपत्त्यानुग्रहेण । ' प्रविश्योपायनहस्तौ ' इत्यादिनैतदन्तेनोदाहरणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—' यत्तु सातिशयं वाक्यं तदुदाहरणं स्मृतम् ' इति । वृक्षाणां चेतनवद्वनदेवताहस्तैरलंकारदानवचनात्सातिशयत्व-

---

१ चरणोपरागसुभगः. २ मूल. ३ नः ४ [illegible]
५ [illegible]नि. [illegible] ( पार ) [illegible]भिः.

प्रथमः—गौतम एह्येहि । अभिषेकोत्तीर्णायै काश्यपाय वनस्पतिसेवां निवेदयावः ।

द्वितीयः—तथा ।

( इति निष्क्रान्तौ । )

सख्यौ—अये अनुपयुक्तभूषणोऽयं जनः । चित्रकर्मपरिचयेनाङ्गेषु त आभरणविनियोगं कुर्वः । ( क )

शकुन्तला—जाने वां नैपुणम् । ( ख )

( उभे नाट्येनालंकुरुतः । )

( ततः प्रविशति स्नानोत्तीर्णः काश्यपः । )

काश्यपः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ६ ॥

( इति परिक्रामति । )

---

( क ) अए अणुवजुत्तभूसणो अअं जणो । चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह । ( ख ) जाणे वो णेउणं ।

---

प्राप्त्याशानुगमत्वं प्रकटमेव । अनुपयुक्तभूषणोऽधृतालंकारोऽयं जनः । नाट्येनेति कर्तरीमुखेनालक्तकेन पादरञ्जनम् । हंसास्येन च्युतसंदंशेनोर्मिकापरिधापनम् । एवमन्यदप्यनुसंधेयम् । कर्तरीमुखलक्षणं यथा—'अश्लिष्टा मध्यमा पृष्ठे संस्थिता तर्जनी यदा । त्रिपताकस्य हस्तस्य तदा स्यात्कर्तरीमुखः ॥ अलक्तकादिना पादरञ्जने' इति । यास्यतीति । अद्याधुना शकुन्तला यास्यति न तु याता नापि याति अपि तु यास्यतीति मनसि कृतमात्र एवेति भावः । इति कृत्वा हृदयमुत्कण्ठया संस्पृष्टम् । समातिशयो द्योत्यते । अत्रोद्देश्यप्रतिनिर्देश्यप्रक्रम इन्द्रियाणां स्वविषयाग्राहकत्वं च हृदयपदोपादानमन्तरेण न स्फुरतीति तत्पदोपादानम् । तेन नार्थपौनरुक्त्यम् । स्तम्भिता या बाष्पस्य वृत्तिः प्रवृत्तिः । आरम्भ इति यावत् । तया कलुषः स्वरभङ्गवान्कण्ठः । स्तम्भितत्वे कारणं पुरुषगतधैर्यम् । तेन निर्हेतुत्वं न शङ्क्यम् । हेत्वलंकारस्य गम्यत्वम् । प्रवृत्तस्य स्तम्भयितुमशक्यत्वाद्वृत्तिपदोपादानम् । एतेन स्फुटं वाचोऽप्रवृत्तिर्ध्वनिता । दर्शनं तत्तदिन्द्रियजं ज्ञानम् । चिन्तया जडं स्वस्वविषयाग्राहकम् । मनसश्चिन्तया ग्रस्तत्वात्तेन विना तदग्राहकत्वं तेषाम् । मम तावदादावेवेदृशमनिर्वचनीयमिदमनुभूयमानं स्नेहात्प्रीतिभावाद्वैक्लव्यं वि-

---

१ हारीतः. २ कावतीर्णाय, अभिषेकार्थं मालिनीमवतीर्णाय. ३ अनसूया. ४ कण्वतातमि०. ५ [illegible], अन्तरा [illegible] ०दितं [illegible]. ६ ईदृशमपि. ७ ईदृशमहो. ६ न. ७ अणणुभूद.

**सख्यौ**—हला शकुन्तले अवसितमण्डनासि । परिधत्स्व सांप्रतं क्षौमयुगलम् । ( क )

( शकुन्तलोत्थाय परिधत्ते । )

**गौतमी**—जाते एष त आनन्दपरिवाहिना चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व । ( ख )

**शकुन्तला**—( सव्रीडम् । ) तात वन्दे । ( ग )

**काश्यपः**—वत्से ।

ययातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ७ ॥

**गौतमी**—भगवन् वरः खल्वेषः । नाशीः । ( घ )

**काश्यपः**—वत्से इतः सद्यो हुतानग्नीन्प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति । )

**काश्यपः**—( ऋक्छन्दसाशास्ते । )

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।

---

( क ) हला सउन्दले अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं ।

( ख ) जादे एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स । ( ग ) ताद वन्दामि ।

( घ ) भअवं वरो क्खु एसो । ण आसिसा ।

---

हुलता । कीदृशो मम । अरण्यौकसो वनवासिनः । अनेन तद्योग्यताप्यसंभावनीयेति व्यज्यते । गृहिणो गृहनिवासिनः । तद्दुःखाभिज्ञा इति भावः । नवैः प्रथमोत्पन्नैः । द्वितीयवारादौ पूर्वानुभूतत्वान्न तथा दुःखमिति भावः । गृहिणः इति व्यतिरेकः । वृत्त्यनुप्रासच्छेकानुप्रासौ । इतिशब्दोपादानाद्धेतुरपि । अनन्तरोक्तमेव वृत्तम् । 'दृष्टिर्जडा चिन्तया' इति पठित्वोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गः परिहर्तव्यः । 'दृष्टिर्ज्ञानेऽक्षिदर्शने' इति कोशादर्थः स एव । 'कथं न तनया—' इति पाठे काक्वा योज्यम् ॥ ६ ॥ अवसितमण्डना समाप्तभूषणासि । परिष्वजन्निवेत्युत्प्रेक्षा । गुरुः कण्व उपस्थितः प्राप्तः । आचारमभ्युत्थानवन्दनादिकं प्रतिपद्यस्व । **ययातेरिति** । अनेन क्रमलक्षणमङ्गमुपक्षिप्तम् । 'तत्त्वोपलब्धिरिष्टस्य क्रम इत्यभिधीयते ।' इति । आशीर्वादव्याजेन, तस्य वरत्वेन च कथनादाशीर्लक्षणो नाट्यालंकारोऽपि । 'आशीरिष्टजनाशंसा' इति तल्लक्षणात् ॥ ७ ॥ ऋक्छन्दस्तेन ऋक्छन्दोग्रथितेन वाक्येनेति यावत् । **अमी इति** । अमी पु-

---

१ नाट्येन परि० लतागृहनिर्गमन ... पुनः आवर्ज्योपविष्टा । २ काश्यप उपसर्पति ।. ३ हुताग्नीन्. ४ वत्से.

अपघ्नन्तो दुरितं हव्यगन्धै-
वैतानास्त्वां वह्नयः पावयन्तु ॥ ८ ॥

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् । ) क्व ते शार्ङ्गरवमिश्राः ।

( प्रविश्य । )

**शिष्याः**—भगवन् इमे स्मः ।

**काश्यपः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इत इतो भवती ।

( सर्वे परिक्रामन्ति । )

**काश्यपः**—भो भोः संनिहितास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ९ ॥

( कोकिलरवं सूचयित्वा । )

---

रतः परिदृश्यमानाः । क्लृप्तधिष्ण्याः क्लृप्तस्थानाः । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इत्यमरः । अनेन त्रित्वमुक्तम् । समिद्वन्तः ससमिधः । पदसंज्ञाया जश्त्वम् । प्रान्तसंस्तीर्णेति च विशेषणद्वयेन सद्यउद्गततत्वेन प्रकाशमानत्वाच्छुभसूचकत्वं ध्वन्यते । अपघ्नन्तो नाशयन्तः । वैताना यज्ञसंबन्धिनः । परिकरालंकारः ॥ ८ ॥
तपोवनतरव इत्यस्य श्लोकेन संबन्धः । **पातुमिति** । न विद्यते पीतं पानमेषां तेऽपीताः । अर्शआदित्वादच् । तथा च महाभाष्ये—'अकारो मत्वर्थीयः । विभक्तमेषामस्तीति विभक्ताः पीतमेषामस्तीति पीताः ।' इति । तत्र लोपशब्दार्थमाह कैयटः—'गम्यमानस्याप्रयोग एव लोपोऽभिमतः । विभक्ता भ्रातर इत्यत्र धनस्य यद्विभक्तत्वं तद्भ्रातृषूपचर्यते । पीतोदका गाव इत्यत्राप्युदकस्य पीतत्वं गोष्वारोप्यते ।' इति । तदभिप्रायेणैव पूर्वव्याख्या । युष्मास्वपीतेषु सा जलं पातुं न व्यवस्यतीत्येतावत्युच्यमाने पूर्वकालतायाः प्राप्तत्वात्प्रथममिति पदमनर्थकमिति चेन्न । तदायमर्थः संपन्नः । यदा यदास्या जलपानव्यवसायस्तदा तदा युष्मास्वपीतेषु नेति । अयं चार्थो नाभिप्रेतः । ततः प्रथममिति पानक्रियाविशेषणम् । तेन युष्मास्वपीतेषु प्रथमं जलं पातुं न व्यवस्यति भवत्सूदकव्यतिरेकेण प्रथमं जलपानं न करोतीत्यर्थः । व्यवस्यतीति वर्तमानप्रत्ययेनाधुनाप्येतदवस्थाया अपि तन्निर्वाह इति ध्वन्यते । एवमाग्रिमवर्तमानप्रत्यययोरपि व्यञ्जकत्वं बोद्धव्यम् । प्रियमण्डनापीत्यनेन ग्रहणयोग्यता सूचि-

---

१ पालयन्तु. २ अस्मात्प्राक्—शकुन्तला प्रदक्षिणं करोति. ३ [illegible]
४ व्वसिकेपु. ५ आदौ. ६ प्रवृत्ति.

अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः ।
परभृताविरुतं कलं यथा प्रतिवचनीकृतमेभिरीदृशम् ॥ १० ॥

( आकाशे । )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥ ११ ॥

---

ता । भवतां पल्लवमवतंसादि कर्तुं स्नेहेन नादत्ते । वो युष्माकमाद्ये प्रथमे कुसुमप्रसूतिसमये पुष्पोत्पत्तिकाले यस्या उत्सवो भवति । फलसमयजो हर्षातिशयो वक्तुमेव न शक्यत इत्याशयः । सेयं प्रत्यक्षपरिदृश्यमाना शकुन्तला पतिगृहं याति । सर्वैः । संभूयेत्यर्थः । अनुज्ञायताम् । प्रत्येकानुज्ञादाने कालविलम्बो भविष्यतीत्याशयः । पतिगृहमित्यनेनानुज्ञानस्योचितसमयत्वं ध्वनितम् । चेतनव्यवहारसमारोपात्समासोक्तिः । वृत्तिश्रुतिच्छेकानुप्रासाः । हेतुश्च । वृत्तमनन्तरोक्तम् ॥ ९ ॥ कोकिलारवं सूचयित्वेति नेपथ्यगतनटत्वेन । ते हि सुशिक्षिताः सर्वं शकुन्तशब्दं कुर्वन्ति । **अनुमतेति** । इयं शकुन्तला वनवासबन्धुभिरिति रूपकम् । तरुभिरनुमतगमना यथा कलं परभृतविरुतं कोकिलकूजितं तरुभिरीदृशं प्रत्यक्षतोऽनुभूयमानं प्रतिवचनीकृतम् । विरुतस्य प्रतिवचनेन रूपेण प्रतिरूपयोगात्परिणामः । एवं पूर्वत्रापि । अनुप्रासश्च । अपरवक्त्रं वृत्तम् ॥ १० ॥ **रम्यान्तर इति** । कमलिनीभिर्हरितैः श्यामलैरिति तद्गुणालंकारः । अनेन कमलिनीव्याप्तत्वं ध्वन्यते । कमलिनीशब्देन कमलसंयोगोऽपि । अत एव न बिसिन्यादिपदप्रयोगः । एतादृशैः सरोभी रम्याण्यन्तराणि मध्यानि यस्य सः । एतेन कोमलाङ्ग्यास्तन्व्याः कदाचनादृष्टशरणस्तृषादिपीडाभावो ध्वन्यते । सरोभिरिति बहुवचनेन प्रतिपदं सरसः सत्त्वं सूचितम् । छायाप्रधाना द्रुमास्तैः । तरुमात्रेणार्कतापनिरासः कर्तुं न शक्यत इति छायाप्रधानत्वविशेषणं बहुवचनमपि । तेन विश्रान्तिस्थलसत्त्वं व्यज्यते । विशेषणप्रक्रमभङ्गश्च निरस्तः । नियमितो निषिद्धोऽर्कस्य मयूखा दीप्तयस्तासां तापो यत्र सः । अत्रार्कस्य दीप्त्याविनाभावेऽपि पुनर्दीप्तिग्रहणेन मध्याह्नस्था दीप्तिर्लक्ष्यते । तापाधिक्यं फलम् । 'अर्कमरीचितापः' इति पाठे 'उष्णमरीचिः' इति पठनीयम् । अनेन पूर्वव्यङ्ग्यसहकृतो गमने दुःखभावो व्यज्यते । कुशेशयस्याम्बुजस्य रजोवन्मृदू रेणुर्यत्र सः । अनेन चरणानुपघातो व्यज्यते । शान्तो मन्दोऽनुकूलः पवनो यत्र सः । अत एव शिवः शुभः पन्था अस्या भूयात् । अत्रैकश्चकारो विशेषणानां समुच्चये द्वितीयस्त्वनुपपन्नः । शिवश्चेत्यस्य समुच्चये भविष्यतीति चेत्तर्हि पूर्वविशेषणचतुष्टयेपि चकार उपदातव्यः स्यान्न चोपात्तः । तेनायमर्थः । शान्तानुकूलश्चासौ पवनश्च स [illegible] पन्थाश्च शिवो माङ्गल्य-



---

१ यतः. २ रात्मनः. ३ नेपथ्ये. ४ मरीचि.

( सर्वे सविस्मयमाकर्णयन्ति । )

गौतमी—जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः । प्रणम भगवतीः । ( क )

शकुन्तला—( सप्रणामं परिक्रम्य । जनान्तिकम् । ) हला प्रियंवदे आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते । ( ख )

प्रियंवदा—न केवलं तपोवनविरहकातरा सख्येव । त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते । ( ग )

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ १२ ॥

---

( क ) जादे णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । पणम भअवदीणं ।

( ख ) हला पिअंवदे अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा पुरदो पवट्टन्ति ।

( ग ) ण केवलं तवोवणविरहकादरा सही एव्व । तुए उवट्ठिदविओअस्स तवोवणस्स वि दाव समवत्था दीसइ ।

उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा मोरा ।
ओसारिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥

---

रूपः सुखप्रदश्च । अर्शआदित्वादच् । भूयादिति । 'शिवं मोक्षे सुखे भद्रे' इति विश्वः । वायुमार्गयोरुभयोः प्राकरणिकत्वात्तुल्ययोगिता । विशेषणत्रयमत्रापि योज्यम् । अत एव शान्त्येत्यादिपदं समस्तं कृतम् । तत्राद्यविशेषणद्वयेन सौगन्ध्यं शीतलत्वं चोक्तम् । शान्तेति मन्दत्वम् । अनुकूलेति शकुनसूचकम् । कुशेशयेत्यनेन वायौ पारुष्यमुक्तम् । तेन किंचिदशकुनसूचकत्वम् । योग्येन वायुना योग्यस्य पथः संबन्धद्योतनात्समालंकारो व्यङ्ग्यः । परस्परोपकरणादन्योन्यालंकारोऽपि । वृत्तिश्रुत्यनुप्रासौ । उपमाहेतुपरिकरालंकाराः । वसन्ततिलका वृत्तम् ॥ ११ ॥ जाते ज्ञातिजनवत्स्निग्धाभिः । दुःखेन मे चरणौ पुरतः प्रवर्तेते । अनेन वधूनां नाभिगृहत्यागे दुःखातिशयो व्यज्यते । त्वयोपस्थितवियोगस्य संप्राप्तविरहस्यापि । न तु भूतवियोगस्य । न च भवद्वियोगस्येत्यपेरर्थः । तपोवनस्याचेतनस्यापि । समवस्था दृश्यते । अवस्थामेव गाथिकया कथयति—उग्गलिएति । उद्गलिताश्चर्विता अपि मुखाद्बहिर्निर्गमिता इत्यर्थः । णिच्चा दुःखातिशयो ध्वन्यते । उभयोस्तिर्यक्त्वेऽपि



१ णं ( नहु ) अज्ज०. २ अवत्थं पेक्ख दाव, समवत्थं पेक्ख.

**शकुन्तला**—( स्मृत्वा । ) तात लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये । ( क )

**काश्यपः**—अवैमि ते तस्यां सोदर्यास्नेहम् । इयं तावद्दक्षिणेन ।

**शकुन्तला**—( उपेत्य लतामालिङ्गय । ) वनज्योत्स्ने चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्तिनी ते खलु भविष्यामि । ( ख )

**काश्यपः**—

संकल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥ १३ ॥

इतः पन्थानं प्रतिपद्यस्व ।

---

( क ) ताद लताबहिणिअं वणजोसिणिं दाव आमन्तइस्सं ।

( ख ) वणजोसिणि चूदसंगता वि मं पच्चालिङ्ग इदोगदाहिं साहाबाहाहिं । अज्जप्पहुदि दूरपरिवत्तिणी दे खु भविस्सं ।

---

सहवासिनाभ्यासात्तथोक्तम् । अनेन वध्वाः प्रतिगृहगमने पितृकुलजनस्य दुःखातिशयो व्यज्यते । बन्धुव्यवहारसमारोपात्समासोक्तिः उत्प्रेक्षानुप्रासश्च ॥ १२ ॥ लताभगिनीमिति परिणामालंकारः । वनज्योत्स्ने इत्याद्येकदेशविवर्ति रूपकम् । चूतसंगतापीत्यत्र भर्तुः स्नेहादप्यधिकः सोदर्यस्नेह इत्यपिना ध्वन्यते । अद्यप्रभृति दूरमत्यर्थं परिवर्तनं व्याघुट्य गमनं यस्याः सा तादृशी भविष्यामि । संकल्पितमिति । मया तपोनिधिना सदा तवार्थे त्वत्प्रयोजननिमित्तम् । प्रयोजनं च योग्यसमागम एव । प्रथममेव संकल्पितं मनसाभीप्सितं त्वं सुकृतैः पुण्यैर्मत्कृतैः स्वयं पूर्वजन्मोपार्जितैर्वात्मसदृशमभिजनगुणैः सौन्दर्येण च वयसा च । केवलं त्वद्भरणान्नापि तु त्रिभुवनभरणाद्भर्तारं गता प्राप्तासि । योग्यसमागमश्चिन्तितोऽपि पुण्यातिशयादेव भवतीति भावः । इयं पुरतो दृश्यमाना सुष्ठु कृतैः करणैर्निकटरोपणैरालवालादिपूरणैर्नवमालिका चूतेन सह संश्रितवती । अत्र नायकव्यवहारारोपात्समासोक्तिः । उभयोः प्राकरणिकत्वात्तुल्ययोगिता च । अत एवाह—संप्रत्यस्यां त्वयि वीतचिन्तो विशेषेण गतचिन्तः । योग्येन योग्यसमागमात्समालंकारः । परस्परोपकरणादन्योन्यालंकारो व्यङ्गयः । हेत्वनुप्रासौ । वृत्तमनन्तरोक्तम् । शकुन्तलापरिगृहीता सेति तस्याः संतोषोत्पादनार्थमस्यामिति पूर्वनिर्देशः । तेन क्रमप्रक्रमभङ्गः परिहृतो भवति । 'त्वय्यत्र चाहमिति संप्रति' इति पठित्वा वा परिहर्तव्यः । अस्मिन्पाठे

---

१ सोदर्य°, सौहार्दम्. २ [illegible] ३ अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः कान्तं समीपसहकारमहं करिष्ये. ४ गदेहिं °बाहाहिं, साखामएहिं बा°.

शकुन्तला—( सख्यौ प्रति । ) हला एषा द्वयोर्युवयोर्हस्ते निक्षेपः । ( क )

सख्यौ—अयं जनः कस्य हस्ते समर्पितः । ( इति बाष्पं विहरतः । ) ( ख )

काश्यपः—अनसूये अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

( सर्वे परिक्रामन्ति । )

शकुन्तला—तात एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ । ( ग )

काश्यपः—[१]नेदं विस्मरिष्यामः ।

शकुन्तला—( गतिभङ्गं रूपयित्वा । ) को नु खल्वेष निवसने मे सज्जते । ( इति परावर्तते । ) ( घ )

काश्यपः—वत्से

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १४ ॥

---

( क ) हला एसा दुवेणं वो हत्थे णिक्खेवो ।
( ख ) अअं जणो कस्स हत्थे समप्पिदो ।
( ग ) ताद एसा उडअपज्जन्तचारिणी गब्भमन्थरा मअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सह ।
( घ ) को णु क्खु एसो णिवसणे मे सज्जइ ।

---

यथासंख्यालंकारः ॥ १३ ॥ एषा वनज्योत्स्ना द्वयोर्ननु निश्चितं युवयोर्हस्ते निक्षेपः । इति परिणामः । अनघप्रसवा सुखप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ । यस्येति । त्वयात्यन्तदयार्द्रया । मातृभूतयेत्यर्थान्तरसंक्रमितम् । यस्य कुशानां सूचिभिः सूच्याकारैरग्रैर्विद्धे कृतक्षते । सूचीशब्दस्तीक्ष्णाग्रत्वेन संबन्धेनाग्रं लक्षयन्वेधयोग्यतातिशयं ध्वनति । मुखे व्रणविरोपणं व्रणशमकमिङ्गुदी तापसतरुस्तत्फलतैलं न्यषिच्यत सिक्तम् । दत्तमिति यावत् । सोऽयमग्रे दृश्यमानो मृगः श्यामाको धान्यविशेषस्तन्मुष्टिभिः परिवर्धितः । कः समासान्तः । स्वयमत्तुमसमर्थस्य श्यामाकान्मुष्टौ गृहीत्वा मुखेऽर्पितवतीत्यादि पोषणप्रकारं सूचयितुं मुष्टिपदोपादानम् । सोऽयमित्यादिना

---

१ विसृजत. २ मघत्नु मेद्यं. ३ लीनां. ४ हस्तयोः. ५ तए कस्स. ६ पुणो पुणो वि णि०.

शकुन्तला—वत्स किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् । ( इति रुदती प्रस्थिता । ) (क)

काश्यपः—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १५ ॥

शार्ङ्गरवः—भगवन् ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

काश्यपः—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

( सर्वे परिक्रम्य स्थिताः । )

---

( क ) वच्छ किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए विणा वड्ढिदो एव्व । दाणिं पिं मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव ।

---

जन्मारभ्य यावन्मृगत्वं प्राप्तस्तावत्त्वयैव पोषित इति व्यज्यते । ते तव पुत्रकृतकः कृत्रिमपुत्रः । आहिताग्निपाठात्परनिपातः । पदवीं मार्गं न जहाति । त्वदनुगामी भवतीत्यर्थः । मृगस्वभावोक्तिः । त्वविरो तकोतक इति छेकश्रुतिवृत्त्यनुप्रासाः । वृत्तमनन्तरोक्तम् ॥ १४ ॥ इदानीमपि मया विरहितमपि त्वाम् । इत्यनेन स्वस्य मातृतुल्यस्नेहत्वं ध्वनितम् । उत्पक्ष्मणोरिति । उदूर्ध्वे पक्ष्मणी ययोर्लोचनयोर्विषय उपरुद्धा वृत्तिः प्रवर्तनं यस्य तं बाष्पं स्थिरतया स्थैर्येण । धैर्येणेति यावत् । विहतो दूरीकृतोऽनुबन्धः पुनः पुनरुत्पत्तिर्यस्य तं कुरु । उत्पन्नमश्रूर्ध्वीकृतैः पक्ष्मभी रुद्धं तदधिकं चेत्तदधःपतनेऽमङ्गलमिति त्वं निरुन्धीति भावः । उत्पक्ष्मणोरिति विशेषणदानार्थं नयनपदम् । अन्यथा बाष्पस्य तदविनाभावित्वाद्वार्थे पौनरुक्त्यं स्यात् । अत्र हेतुमाह—अस्मिन्निति । खलु यस्मादर्थे न लक्षितो दृष्टो नतोन्नतो भूमिभागो यत्र तस्मिन्मार्गे ते तव पदानि विषमीभवन्ति । उच्चावचेषु निपतन्तीत्यर्थः । अत्र यात्रासमयेऽमङ्गलशब्दोच्चारणमपि नोचितमिति तच्छ्रवणेन तस्या आशङ्का भविष्यतीति विषमपदत्वं हेतुत्वेनोक्तम् । पदार्थवाक्यार्थरूपयोः काव्यलिङ्गयोः संसृष्टिः । छेकवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् ॥ १५ ॥ क्षीरवृक्षेति प्लक्षादेरुपलक्षणम् ।

---

१ का०—वत्से अलं रुदितेन । स्थिरा भव । ... पन्थानमालोकय । २ विरता०, शिथिल० ३ उदकान्त, ओदकान्तात्.

काश्यपः—( आत्मगतम् । ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् । ( इति चिन्तयति । )

शकुन्तला—( जनान्तिकम् । ) हला पश्य । नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति दुष्करमहं करोमीति । ( क )

अनसूया—सखि मैवं मन्त्रयस्व ।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ १६ ॥ ( ख )

काश्यपः—शार्ङ्गरव इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः—

शार्ङ्गरवः—आज्ञापयतु भगवान् ।

काश्यपः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १७ ॥

---

( क ) हला पेक्ख । णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमित्ति ।

( ख ) सहि मा एव्वं मन्तेहि ।

एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं ।
गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥

---

तेन छायाधिक्यं ध्वनितम् । प्रशस्तं युक्तं युक्तरूपम् । पश्य । नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति । एतावद्दिनं भर्त्रा विना स्थितास्मीति भावः । सखि एवं मा मन्त्रयस्व । एषेति । गाथा । एषा चक्रवाकी क्षणमपि तेन विना तिष्ठन्ती । सापीत्यपिशब्दार्थः । रञ्जयति लोकानिति रजनीमात्रम् । अपि तु विषादेन दुःखेन दीर्घतराम् । अथ च विषादो येषां ते विषादा विरहिणः । अर्शआद्यच् । तेषां दीर्घा केवलं न । दीर्घतरामपीति पञ्चसु स्थानेष्वपियोंज्यः । गुर्वपि विरहदुःखमाशाबन्धः साहयति । अर्थान्तरन्यासः ॥ १६ ॥ अस्मानिति । संयम एव धनं येषां तानस्मान्साधु सम्यक्तया विचिन्त्य । मुन्यादिपदत्यागेन संयमधनपदग्रहणमङ्गीकारानङ्गीकारयोर्भयानुग्रहौ दर्शयति । आत्मन उच्चैः कुलम् । साधु विचिन्त्येत्यनुषज्यते । तादृशकुलोत्पन्नस्यालीकप्रतारणादिसंभावना नास्तीति भावः । अस्या-



१ भवान्, अत्रभ०. २ परीक्ष्य संयमपरान्.

**शकुन्तला**—वत्स किं सहवासपरित्यागिनीं मामनुसरसि । अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् । ( इति रुदती प्रस्थिता । ) ( क )

**काश्यपः**—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया विहतोऽनुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥ १५ ॥

**शार्ङ्गरवः**—भगवन् ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

( सर्वे परिक्रम्य स्थिताः । )

---

( क ) वच्छ किं सहवासपरिच्चाइणिं मं अणुसरसि । अचिरप्पसूदाए जणणीए विणा वड्ढिदो एव्व । दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव ।

---

जन्मारभ्य यावन्मृगत्वं प्राप्तस्तावत्त्वयैव पोषित इति व्यज्यते । ते तव पुत्रकृतकः कृत्रिमपुत्रः । आहिताग्निपाठात्परनिपातः । पदवीं मार्गं न जहाति । त्वदनुगामी भवतीत्यर्थः । मृगस्वभावोक्तिः । त्रविरो तकोतक इति छेकश्रुतिवृत्त्यनुप्रासाः । वृत्तमनन्तरोक्तम् ॥ १४ ॥ इदानीमपि मया विरहितमपि त्वाम् । इत्यनेन स्वस्य मातृतुल्यस्नेहत्वं ध्वनितम् । उत्पक्ष्मणोरिति । उदूर्ध्वे पक्ष्मणी ययोर्लोचनयोर्विषय उपरुद्धा वृत्तिः प्रवर्तनं यस्य तं वाष्पं स्थिरतया स्थैर्येण । धैर्येणेति यावत् । विहतो दूरीकृतोऽनुबन्धः पुनः पुनरुत्पत्तिर्यस्य तं कुरु । उत्पन्नमश्रूर्ध्वीकृतैः पक्ष्मभी रुद्धं तदधिकं चेत्तदधःपतनेऽमङ्गलमिति त्वं निरुन्धीति भावः । उत्पक्ष्मणोरिति विशेषणदानार्थं नयनपदम् । अन्यथा बाष्पस्य तदविनाभावित्वाद्द्वार्थे पौनरुक्त्यं स्यात् । अत्र हेतुमाह—अस्मिन्निति । खलु यस्मादथें न लक्षितो दृष्टो नतोन्नतो भूमिभागो यत्र तस्मिन्मार्गे ते तव पदानि विषमीभवन्ति । उच्चावचेषु निपतन्तीत्यर्थः । अत्र यात्रासमयेऽमङ्गलशब्दोच्चारणमपि नोचितमिति तच्छ्रवणेन तस्या आशङ्का भविष्यतीति विषमपदत्वं हेतुत्वेनोक्तम् । पदार्थवाक्यार्थरूपयोः काव्यलिङ्गयोः संसृष्टिः । छेकवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् ॥ १५ ॥ क्षीरवृक्षेति प्लक्षादेरुपलक्षणम् ।

---

१ का०—वत्से अलं रुदितेन । स्थिरा भव । इतः पन्थानमालोकय । २ विरता०, शिथिला० ३ उदकान्तं, ओदकान्तात्.

काश्यपः—( आत्मगतम् । ) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् । ( इति चिन्तयति । )

शकुन्तला—( जनान्तिकम् । ) हला पश्य । नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति दुष्करमहं करोमीति । ( क )

अनसूया—सखि मैवं मन्त्रयस्व ।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् ।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ १६ ॥ ( ख )

काश्यपः—शार्ङ्गरव इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः—

शार्ङ्गरवः—आज्ञापयतु भगवान् ।

काश्यपः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु तद्वाच्यं वधूबन्धुभिः ॥ १७ ॥

---

( क ) हला पेक्ख । णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमित्ति ।

( ख ) सहि मा एव्वं मन्तेहि ।

एसा वि पिएण विणा गमेइ रअणिं बिसाअदीहअरं ।
गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥

---

तेन छायाधिक्यं ध्वनितम् । प्रशस्तं युक्तं युक्तरूपम् । पश्य । नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारौति दुष्करमहं करोमीति । एतावद्दिनं भर्त्रा विना स्थितास्मीति भावः । सखि एवं मा मन्त्रयस्व । एषेति । गाथा । एषा चक्रवाकी क्षणमपि तेन विना तिष्ठन्ती । सापीत्यपिशब्दार्थः । रञ्जयति लोकानिति रजनीमात्रम् । अपि तु विषादेन दुःखेन दीर्घतराम् । अथ च विषादो येषां ते विषादा विरहिणः । अर्शआद्यच् । तेषां दीर्घां केवलं न । दीर्घतरामपीति पञ्चसु स्थानेष्वपियोंज्यः । गुर्वपि विरहदुःखमाशाबन्धः साहयति । अर्थान्तरन्यासः ॥ १६ ॥ अस्मानिति । संयम एव धनं येषां तानस्मान्साधु सम्यक्तया विचिन्त्य । मुन्यादिपदत्यागेन संयमधनपदग्रहणमङ्गीकारानङ्गीकारयोर्भयानुग्रहौ दर्शयति । आत्मन उच्चैः कुलम् । साधु विचिन्त्येत्यनुषज्यते । तादृशकुलोत्पन्नस्यालीकप्रतारणादिसंभावना नास्तीति भावः । अस्या-

---

१ भवान्, अत्रभ०. २ परीक्ष्य संयमपरान्.

शार्ङ्गरवः—गृहीतः संदेशः।

काश्यपः—वत्से त्वमिदानीमनुशासनीयासि। वनौकसोऽपि सन्तो लौकिकज्ञा वयम्।

शार्ङ्गरवः—न खलु धीमतां कश्चिदविषयो नाम।

काश्यपः—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥ १८॥

---

स्त्वयि तां स्नेहप्रवृत्तिं स्नेहप्रवाहम्। आधिक्यमिति यावत्। साधु विचिन्त्येत्यनुषज्यते। 'प्रवृत्तिः कथिता वृत्तौ प्रवाहोदन्तयोरपि।' इति विश्वः। तेनात्र कारकक्रियादीपकम्। अस्यास्त्वयीत्यनेन भवद्दर्शनमारभ्य प्रतिक्षणोपचीयमानरागसागरत्वं ध्वनितम्। अत एव तवास्यामिति नोक्तम्। यद्यपि नायकयोः परस्परानुरागजीवातुरेव रतिस्तथाप्यस्याः प्रेषणेन प्रकृतत्वात्तथोक्तिः। स्नेहप्रवृत्तिं विशिनष्टि—कथमपि वचनेन परद्वारेङ्गितेन वा न बान्धवैः कृताम्। अन्यकर्तृकतां प्रयत्नेन निषेधता कविनास्याः स्नेहप्रवृत्तेः स्थायित्वं स्थिरीकुर्वता कोऽपि लोकोत्तरश्चमत्कारातिशयो व्यज्यते। इयं सामान्या साधारणी या प्रतिपत्तिर्गौरवं तत्पूर्वकं दारेषु स्त्रीषु। बहुवचनेन पूर्वोक्तस्य युक्तता ध्वन्यते। त्वया प्रसिद्धगुणवता सता तादृशकुलोत्पन्नेन सुजनतजन्मना धर्मधुरीणेनेत्यर्थान्तरसंक्रमितम्। दृश्या ज्ञातव्या न तु कर्तव्या। अस्माकं तत्र नियोगासंभवात्। 'प्रतिपत्तिः पदे प्राप्तौ प्रवृत्तौ गौरवेऽपि च।' इति विश्वः। नन्वेतादृशप्रेम्णि कथं सामान्यप्रतिपत्तीत्याद्युक्तमत आह—भाग्यायत्तमिति। अतः परं वधूबन्धुभिर्न वाच्यम्। यतो वयं वधूबन्धवः। अस्मदुच्यमानं तु पक्षपातितया पर्यवसन्नं सदौदासीन्यमेव गमयेदिति भावः। अत्र मयैतन्न वक्तव्यमिति विशेषे प्रस्तुते यत्सामान्यवचनं तेनाप्रस्तुतप्रशंसा। किं तर्हि तत्। भाग्यायत्तं दैवायत्तम्। अथ वधूबन्धुभिरस्माभिरतः परं न वाच्यम्। नियोगत्वेन पर्यवसानादिति भावः। अतो भाग्यायत्तं येन भाग्येन युवयोरेतादृशोऽनुरागस्तदधीनमेव सर्वमिति भावः। खलुर्हेत्वर्थस्तेन काव्यलिङ्गमपि। यद्वातः परं महिषीत्वाभिषेकादिकं भाग्यायत्तं दैवायत्तं तत्खलु निश्चितं वधूबन्धुभिर्न वाच्यम्। वचनमात्रेण तदसंपत्तेरिति भावः। श्रुतिवृत्त्यनुप्रासौ। शार्दूलविक्रीडितं वृत्तम्॥ १७॥ न खलु धीमतामिति कण्ववाक्यं प्रत्यर्थान्तरन्यासः। सा त्वमित्यस्य श्लोकेनान्वयः। शुश्रूषस्वेति। गुरूञ्श्वश्रूश्वशुरादीञ्शुश्रूषस्व सेवां कुरु। सपत्नीनां जने समूहे प्रियसखीवृत्तिं कुरु प्रियसखीवद्वर्तस्व। विप्रकृता निकृतापि। 'निकारो

---

१ पदस्य वनौ०. २ भोगेषु.

कथं वा गौतमी मन्यते ।

गौतमी—एतावान्वधूजनस्योपदेशः । जाते एतत्खलु सर्वमवधारय । (क)

काश्यपः—वत्से परिष्वजस्व मां सखीजनं च ।

शकुन्तला—तात इत एव किं प्रियंवदानुसूये सख्यौ निवर्तिष्येते । (ख)

काश्यपः—वत्से इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

शकुन्तला—( पितरमाश्लिष्य । ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि ।(ग)

काश्यपः—वत्से किमेवं कातरासि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।

(क) एत्तिओ वहूजणस्स उवदेसो । जादे एदं क्खु सव्वं ओधारेहि ।
(ख) ताद इदो एव्व किं पिअंवदाअणसूआओ सहीओ णिवत्तिस्सन्ति ।
(ग) कहं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअतडुम्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं ।

विप्रकारः स्यात्' इत्यमरः । रोषणतयेर्ष्यया भर्तुः प्रतीपं वैपरीत्यं मा स्म गमो मा यासीः । परिजने सेवकवर्गे भूयिष्ठमतिशयेन दक्षिणानुकूला भव । भाग्येषु सपत्नीदैवेष्वनुत्सेकिन्यस्खलिता । भवेत्यनुषज्यते । अस्या भाग्यं मम नास्तीति दुःखं न कार्यमित्यर्थः । अथ च भाग्येषु निजेष्वनुत्सेकिनी निर्गर्वा । ममैतादृशं सौभाग्यमिति गर्वो न कार्य इत्यर्थः । एवं सति युवतयः स्त्रीमात्रम् । त्वं तु किं पुनरिति भावः । गृहिण्याः पदं स्थानम् । यद्वा गृहिणीति पदमधिकारम् । यान्ति प्राप्नुवन्ति । अन्या वामाः स्त्रियः । कुलस्याधयः । भवन्तीत्यर्थः । 'वामौ वल्गुप्रतीपौ वा' इत्यमरः । रूपमकर्थान्तरन्यासो वा । कुलस्याधयः कुलाधिष्ठानानि । वामा वक्राणीत्यर्थः । 'आधिर्मानसपीडायां प्रत्याशायां च बन्धने । व्यसने चाप्यधिष्ठाने' इति विश्वः । वृत्तमनन्तरोक्तम् । तातस्याङ्कात्क्रोडात् । देशान्तरे परदेशे स्थानान्तरे च जीवितं धारयिष्ये । कथमिदानीमिति संबन्धः । उपमया तत्रत्यैर्बहुमानिताया अपि पितृवियोगाविस्मरणं ध्वन्यते । अभिजनेति । अभिजनवतः कुलवतः । 'अभिजनान्वयौ' इत्यमरः । अत्रैतदनुक्तैरपि

१ तत ०२ [illegible] ( [illegible] सख्यौ निवर्तिष्येते ). ४ तड, मलअपव्वदु०, ५पव्वदादो उम्मू०.

तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ १९ ॥
( शकुन्तला पितुः पादयोः पतति । )

**काश्यपः**—यदिच्छामि ते तदस्तु ।

**शकुन्तला**—( सख्यावुपेत्य । ) हला द्वे अपि मां सममेव परिष्वजेथाम् । ( क )

**सख्यौ**—( तथा कृत्वा । ) सखि यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्मायिदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय । ( ख )

( क ) हला दुवे वि मं समं एव्व परिस्सजह ।

( ख ) सहि जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणामहेअङ्किअं अङ्गुलीअअं दंसेहि ।

सिद्धेस्तात्पर्यानुपपत्त्या लक्षणया सामान्यशब्दो विशिष्टं कुलं लक्षयति । तदुत्पत्तिमत्त्वं त्वर्थाक्षिप्तम् । एतद्दयादानदाक्षिण्यधर्मभीरुत्वादि धर्मशतं व्यनक्ति। अथवाभिजनपदेन तदुत्पन्ना जना लक्ष्यन्ते । तद्वतस्तद्बहुजनवतोऽभितः समन्ततो जनवतः स्वजनवत इति वा । अनेन विशेषणेन सकलबन्धुजनकृत्यचिन्तया गृहिणीगतोऽतिशयो व्यज्यते । एवंभूतस्य भर्तुः श्लाघ्ये सर्वोत्कृष्टे। तादृशप्रेम्णानुमितत्वात् । गृहिणीपदे गृहिणीस्थाने । अथवा गृहिणीलक्षणाधिकारे। अथ च गृहिणीति त्र्यक्षरं पदं तत्र । जगति गृहिणीपदवाच्या त्वमेवेत्यर्थः । अतः 'गृहिणी गृहमुच्यते' इत्युक्तेस्तदीयं सर्वं गृहं त्वदायत्तमिति भावः । स्थिता चापल्यनिवृत्त्या स्थिरीभूता । अत एव भर्तुरित्युचितपदोपन्यासः । भरतीति भर्ता । सकलजगद्भरणशीलस्येति षष्ठ्या गृहिणीगतोऽतिशयो व्यज्यते । तावता किं तत्राह—विभवेति । विभवः संपत्तिस्तेन गुरुभिर्गरिष्ठैः । अनेन कृत्यानामनन्यनिर्वाहित्वं सूचितम् । तस्य भर्तुः प्रतिक्षणं कृत्यैः । इत्यव्ययबहुवचनाभ्यां विशिष्टकार्याणामन्यतमता ध्वन्यते । व्याकुला व्यग्रा । स्वगृहकार्यसहस्रनिमग्ना विगलितवेद्यान्तरा भविष्यसीति भावः । अचिराच्छीघ्रं प्राची प्राग्दिगिव त्वं पावनमर्कमिव तनयं प्रसूय चेति । चः समुच्चये । पावयतीति पावनः । स स्वयं पूत इति किं वक्तव्यम् । तन्नामग्रहणेनान्येऽपि पावना भवन्तीति भावः । अर्कोपमानत्वेन तनयस्य जगद्विलक्षणतेजस्वित्वं लोकत्रयातिक्रान्तपौरुषत्वं चतुर्दशभुवनगीयमानकीर्तित्वमत एव चक्रवर्तित्वमित्यादि धर्मसहस्रं व्यज्यते । हे वत्से मम पितुर्विरहजां वियोगजां शुचं न गणयिष्यसि । न तु सा न भविष्यति । गृहकार्यव्यग्रतया त्वया शोको न गणनीय इत्यर्थः । पितृवियोगदुःखमविस्मरणीयप्रकृत्या व्यज्यते । चतुर्थचरणार्थं प्रति पूर्वोक्तद्वयं हेतुत्वेन योज्यम् । उपमासमुच्चयकाव्यलिङ्गश्रुतिवृत्त्यनुप्रासाः । हरिणी वृत्तम् ॥१९॥



१ अस्मात्पर-( अङ्गुलीयकं ददतः । ). २ राएसी; अत्तणो णाम०...दंसइस्ससि.

शकुन्तला—अनेन संदेहेन वामाकम्पितास्मि । ( क )

सख्यौ—मा भैषीः । अतिस्नेहः पापशङ्की । ( ख )

शार्ङ्गरवः—युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

शकुन्तला—( आश्रमाभिमुखी स्थित्वा । ) तात कदा नु भूयस्तपोवनं प्रेक्षिष्ये । ( ग )

काश्यपः—श्रूयताम् ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् २० ॥

गौतमी—जाते परिहीयते गमनवेला । निवर्तय पितरम् । अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते । निवर्ततां भवान् । ( घ )

---

( क ) इमिणा संदेहेण वो आकम्पिदह्मि ।
( ख ) मा भाआहि । अदिसिणेहो पावसङ्की ।
( ग ) ताद कदा णु भूओ तवोवणं पेक्खिस्सं ।
( घ ) जादे परिहीआदि गमणवेला । णिवत्तेहि पिदरं । अहवा चिरेण वि पुणो पुणो एसा एव्वं मन्तइस्सदि । णिवत्तदु भवं ।

---

द्वावपि मां सममेकदैव परिष्वजेथाम् । तथा कृत्वेत्येकदा परिष्वज्य । प्रत्यभिज्ञाने तत्तेदंतावगाहिनि सेयं शकुन्तलेति ज्ञाने मन्थरः शिथिलो झटित्येतादृग्ज्ञानरहित इत्यर्थः । ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय । युगान्तरं हस्तचतुष्कावधि । 'युगं हस्तचतुष्केऽपि' इति विश्वः । भूत्वेति । चिराय चिरकालम् । चत्वारः समुद्राः । विशेषणेनैव विशेष्यप्रतिपत्तिः । तेऽन्तो यस्याः सा चासौ मही च तस्याः सपत्नी भूत्वा । चतुरुदधिमेखलितभूमिवलयोपभोगमुपभुज्येति भावः । दुष्यन्तस्यापत्यं दौष्यन्तिस्तम् । अत इञ् । न विद्यते प्रति संमुखं रथो यस्य स तम् । प्रतिपक्षाभावात् । अनेन विशेषणद्वयेन महीभारक्षमत्वं ध्वनितम् । निवेश्य स्थापयित्वा । अर्थान्महीसपत्न्याम् । अत्र सपत्नीग्रहणेन तस्या अपि मातृत्वं सूचितम् । यद्यपि सपत्नी तथापि त्वयि सत्यामेव सपत्नभावः । त्वया समर्पिते तु तन्नास्तीति भावः । भर्त्रा सहेति गौणत्वमेतां प्रत्युत्तरदानेनास्याः प्रकृतत्वान्नानुपपन्नम् । अत्र तस्यां महीसपत्नीत्वं तस्यां तन्निवेशनं तस्मिंश्च कुटुम्बभरनिवेशनमिति मालादीपकम् । शान्ते प्रकरणानुसाराद्वयसीति गम्यते । इदमाश्रमविशेषणत्वेनापि ॥ २० ॥

---

१ युगान्तमा०, ०रमधिरूढः, दूरमधि०. २ सदिगन्त०......प्रसूय । तत्संनिवेशितभरेण सहैव भर्त्रा शान्त्यै. ३ संदंसण. ४ पावं ...

**काश्यपः**—वत्से उपरुध्यते तपोऽनुष्ठानम् ।

**शकुन्तला**—( भूयः पितरमाश्लिष्य । ) तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृत उत्कण्ठस्व । ( क )

**काश्यपः**—( सनिःश्वासम् । )

> शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
> उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २१ ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

( निष्क्रान्ता शकुन्तला सहयायिनश्च । )

**सख्यौ**—( शकुन्तलां विलोक्य । ) हा धिक् हा धिक् । अन्तर्हिता शकुन्तला वनराज्या । ( ख )

**काश्यपः**—( सनिःश्वासम् । ) अनसूये गतवती वां सहचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

**उभे**—तात शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशामः । ( ग )

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य । ) हन्त भोः शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

---

( क ) तवच्चरणपीडिदं तादसरीरं । ता मा अदिमेत्तं मम किदे उक्कण्ठस्स ।
( ख ) हद्धी हद्धी । अंन्तलिहिदा सउन्दला वणराईए ।
( ग ) ताद सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसामो ।

---

तपश्चरणेन पीडितं तातशरीरम् । तस्मान्मम कृते । अतिमात्रमुत्कण्ठा । मेति निषेधे । उत्कण्ठयालमित्यर्थः । 'क्त्वस्तुमत्तूणतुआणाः' इति क्त्वाप्रत्ययस्य तुमादेशः । **शममिति** । मम काश्यपस्य । बाल्यादारभ्य त्वत्कृतपरिपालनस्येत्यर्थान्तरसंक्रान्तत्वम् । एवंभूतस्य शोकः कथं शममेष्यति । कष्टेन शममेष्यतीत्यर्थः । ईदृशस्त्वया तादृशगुणवत्या तथा सकलनिपुणयेत्यादि द्योतयति । पूर्वं रचितो रचितपूर्वस्तम् । नीवारैस्तृणधान्यैर्बलिं पूजां विलोकयतः । कीदृशं बलिम् । उटजद्वारे विरूढं संजातम् । 'विरूढस्तु संजाताङ्कुरितेऽन्यवत्' इति विश्वः । काव्यलिङ्गानुप्रासौ ॥२१॥ हा धिक् हा धिक् । शून्यमिव तपोवनं कथं प्रविशामः । कण्वप्रवेशानन्तरमेतदन्तेन करुणो रसो ध्वनितः ।

---

१ ०पः-अयि किं मां जडीकरोषि. २ निःश्वस्य. ३ अपयास्यति मे-कथमिव द्वारि. ४ गता वां सहचरी; सहधर्मचा०. ५ ०गच्छ माम् । (प्रस्थितं) [illegible] प्रस्थिताः । ) ६ [illegible] ७ [illegible] शसिमो. ८ उक्कण्ठिदु. ९ अन्तरिदा पिअसही स०.

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥ २२ ॥
( इति निष्क्रान्ताः सर्वे । )

इति चतुर्थोऽङ्कः ।

---

## पञ्चमोऽङ्कः ।

( ततः प्रविशत्यासनस्थो राजा विदूषकश्च । )

विदूषकः—( कर्णं दत्वा । ) भो वयस्य संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति । ( क )

राजा—तूष्णीं भव । यावदाकर्णयामि ।

( आकाशे गीयते । )

अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ १ ॥ ( ख )

---

( क ) भो वअस्स संगीतसालन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअं करेदि त्ति ।

( ख ) अहिणवमहुलोलुओ तुमं तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो महुअर विह्मरिदो सि णं कहं ॥

---

अर्थ इति । हि निश्चितं कन्यार्थः परकीय एव उत्पत्त्यनन्तरमेव परकीयत्वेन ज्ञात इत्यर्थः । अद्य परिग्रहीतुः परिणेतुस्तां संप्रेष्य ममायमात्मा प्रकाममत्यर्थं विशदो निर्मलो जातः । पूर्वं सामान्यतोऽन्यदीयत्वमुक्त्वा परिग्रहीतुस्तामित्यनेन नियतविषयत्वेन परकीयत्वं वदतावश्यप्रस्थापनीयत्वं ध्वनितम् । इदमेवोत्प्रेक्षायां न्यासेन सह साधर्म्यं ज्ञेयम् । प्रत्यर्पितो न्यासो येनेदृश इवेत्युत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥ २२ ॥ इति श्रीमदभिज्ञानशकुन्तलटीकायामर्थद्योतनिकायां चतुर्थोऽङ्कः समाप्तः ॥

भो वयस्य सखे । कला मधुरास्फुटध्वनियुक्ता । अनेन सुशारीरमुक्तम् । 'शारीरं तु ध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः । ' इत्यादिना सुशारीरस्य गुणा उक्ता रत्नाकरे । अत एवाग्रे ' लक्ष्यते रागभरिता ' इति । विशुद्धा शुद्धा नाम गीतिः । ग्रामरागजनिकेत्यर्थः । तस्याः स्वरसंयोगः तत्संबन्धी स्वरालाप इत्यर्थः । तदुक्तं तत्रैव—' गीतयः पञ्च शुद्धाख्या भिन्ना गौडा निवेसरा । साधारणी विशुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥ ' इति । जाने तत्रभवती हंसपदिका वर्णपरिचयं स्थाप्यारोह्यवरोह्यात्मकगानक्रियाभ्यासं करोति । अभिनवेति । अभिनवेत्य-

---

१ तामेव. २ जातोस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेपमिवार्पयित्वा. ३ प्रस्थिताः.

**काश्यपः**—वत्से उपरुध्यते तपोऽनुष्ठानम् ।

**शकुन्तला**—( भूयः पितरमाश्लिष्य । ) तपश्चरणपीडितं तातशरीरम् । तन्मातिमात्रं मम कृत उत्कण्ठस्व । ( क )

**काश्यपः**—( सनिःश्वासम् । )

शममेष्यति मम शोकः कथं नु वत्से त्वया रचितपूर्वम् ।
उटजद्वारविरूढं नीवारबलिं विलोकयतः ॥ २१ ॥

गच्छ । शिवास्ते पन्थानः सन्तु ।

( निष्क्रान्ता शकुन्तला सहयायिनश्च । )

**सख्यौ**—( शकुन्तलां विलोक्य । ) हा धिक् हा धिक् । अन्तर्हिता शकुन्तला वनराज्या । ( ख )

**काश्यपः**—( सनिःश्वासम् । ) अनसूये गतवती वां सहचारिणी । निगृह्य शोकमनुगच्छतं मां प्रस्थितम् ।

**उभे**—तात शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशामः । ( ग )

**काश्यपः**—स्नेहप्रवृत्तिरेवंदर्शिनी । ( सविमर्शं परिक्रम्य । ) हन्त भोः शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः ।

---

( क ) तवचरणपीडिदं तादसरीरं । ता मा अदिमेत्तं मम किदे उक्कण्ठस्स ।
( ख ) हद्धी हद्धी । अन्तलिहिदा सउन्दला वणराईए ।
( ग ) ताद सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसामो ।

---

तपश्चरणेन पीडितं तातशरीरम् । तस्मान्मम कृते । अतिमात्रमुत्कण्ठा । मेति निषेधे । उत्कण्ठयालमित्यर्थः । 'क्त्वस्तुमत्तूणतुआणाः' इति क्त्वाप्रत्ययस्य तुमादेशः । शममिति । मम काश्यपस्य । बाल्यादारभ्य त्वत्कृतपरिपालनस्येत्यर्थान्तरसंक्रान्तत्वम् । एवंभूतस्य शोकः कथं शममेष्यति । कष्टेन शममेष्यतीत्यर्थः । ईदृशस्त्वया तादृशगुणवत्या तथा सकलनिपुणयेत्यादि द्योतयति । पूर्वं रचितो रचितपूर्वस्तम् । नीवारैस्तृणधान्यैर्बलिं पूजां विलोकयतः । कीदृशं बलिम् । उटजद्वारे विरूढं संजातम् । 'विरूढस्तु संजाताङ्कुरितेऽन्यवत्' इति विश्वः । काव्यलिङ्गानुप्रासौ ॥२१॥ हा धिक् हा धिक् । शून्यमिव तपोवनं कथं प्रविशामः । कण्वप्रवेशानन्तरमेतदन्तेन करुणो रसो ध्वनितः ।

---

१ ०पः-अयि किं मां जडीकरोषि. २ निःश्वस्य. ३ अपयास्यति मे-कथमिव द्वारि. ४ गता वां सहचरी; सहधर्मचा० ५ [illegible] माम् । (प्रस्थितः; सर्वे प्रस्थिताः । ). ६ वृत्तिः. ७ शासनी. ८ उक्कण्ठिदुं. ९ अन्तरिदा पिअसही स०-

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥ २२ ॥
( इति निष्क्रान्ताः सर्वे । )

इति चतुर्थोऽङ्कः ।

---

## पञ्चमोऽङ्कः ।

( ततः प्रविशत्यासनस्थो राजा विदूषकश्च । )

विदूषकः—( कर्णं दत्वा । ) भो वयस्य संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति । ( क )

राजा—तूष्णीं भव । यावदाकर्णयामि ।

( आकाशे गीयते । )

अभिनवमधुलोलुपस्त्वं तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ॥ १ ॥ ( ख )

---

( क ) भो वअस्स संगीतसालन्तरे अवधाणं देहि । कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदि त्ति ।

( ख ) अहिणवमहुलोलुवो तुमं तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो महुअर विह्मरिदो सि णं कहं ॥

---

अर्थ इति । हि निश्चितं कन्यार्थः परकीय एव उत्पत्त्यनन्तरमेव परकीयत्वेन ज्ञात इत्यर्थः । अद्य परिग्रहीतुः परिणेतुस्तां संप्रेष्य ममायमात्मा प्रकाममत्यर्थं विशदो निर्मलो जातः । पूर्वं सामान्यतोऽन्यदीयत्वमुक्त्वा परिग्रहीतुस्तामित्यनेन नियतविषयत्वेन परकीयत्वं वदतावश्यप्रस्थापनीयत्वं ध्वनितम् । इदमेवोत्प्रेक्षायां न्यासेन सह साधर्म्यं ज्ञेयम् । प्रत्यर्पितो न्यासो येनेदृश इवेत्युत्प्रेक्षा । इन्द्रवज्रा वृत्तम् ॥ २२ ॥ इति श्रीमदभिज्ञानशाकुन्तलटीकायामर्थद्योतनिकायां चतुर्थोऽङ्कः समाप्तः ॥

भो वयस्य सखे । कला मधुरास्फुटध्वनियुक्ता । अनेन सुशारीरमुक्तम् । 'शारीरं तु ध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः ।' इत्यादिना सुशारीरस्य गुणा उक्ता रत्नाकरे । अत एवाग्रे 'लक्ष्यते रागभरिता' इति । विशुद्धा शुद्धा नाम गीतिः । ग्रामरागजनिकेत्यर्थः । तस्याः स्वरसंयोगः तत्संबन्धी स्वरालाप इत्यर्थः । तदुक्तं तत्रैव—'गीतयः पञ्च शुद्धाख्या भिन्ना गौडा निवेसरा । साधारणी विशुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥' इति । जाने तत्रभवती हंसपदिका वर्णपरिचयं स्थाप्यारोह्यावरोह्यात्मकगानक्रियाभ्यासं करोति । **अभिनवेति** । अभिनवेत्य-

---

१ तामेव. २ जातोऽस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेपमिवार्पयित्वा. ३ प्रस्थिताः.

राजा—अहो रागपरिवाहिणी गीतिः ।

विदूषकः—किं तावद्गीत्या अवगतोऽक्षरार्थः । ( क )

राजा—( स्मितं कृत्वा । ) सकृत्कृतप्रणयोऽयं जनः । । तदस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माधव्य मद्वचनादुच्यतां हंसपदिका । निपुणमुपालब्धोऽस्मीति ।

विदूषकः—यद्भवानाज्ञापयति । ( उत्थाय । ) भो वयस्य गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः । ( ख )

राजा—गच्छ । नागरिकवृत्त्या संज्ञापयैनाम् ।

( क ) किं दाव गीदीए अवगओ अक्खरत्थो ।

( ख ) जं भवं आणवेदि । भो वअस्स गहीदस्स ताए परकीएहिं हत्थेहिं सिहण्डए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो ।

परवक्रम् । नूतनपुष्परससतृष्णः । नूतनत्वं प्रत्यग्रत्वेन समयविशेषजातत्वेन च । अत एव तथा तेन प्रकारेण । यथा स्वाभिलषितपरिपूर्तिर्भवतीत्यर्थः । चूतमञ्जरीमाम्रमञ्जरीम् । 'मञ्जरी वल्लरी स्त्रियाम्' इत्यमरः । परितः समन्ततश्चुम्बित्वा कमलं सर्वदानुभूतं न त्वपूर्वं चूतमञ्जर्यादि । तत्रापि वसतिमात्रं न तु मध्वास्वादस्तेनापि निर्वृतः सुखित एनां चूतमञ्जरीं कथं विस्मृतोऽसि । अत एव मधुकरेति साभिप्रायम् । इत्यनुप्रासौ । अत्र सारूप्यनिमित्तया प्रशंसया राज्ञो दुष्यन्तस्य शकुन्तलाविस्मरणस्य प्रस्तुतस्य गम्यत्वादाक्षेपनामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—'गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः ।' इति । 'मधुव्रते मधुकरः कामुकेऽपि प्रकीर्तितः ।' इति विश्वः । कमलाया लक्ष्म्या वसतिस्तया निर्वृत इति । 'दीर्घह्रस्वे मिथो वृत्तौ' इत्यनेन ह्रस्वत्वम् । अभिनवं यन्मध्वधरमधु तत्र लोलुप इति सर्वेषां श्लिष्टत्वम् ॥ १ ॥ रञ्जनं रागस्तत्परिवाहिणी । अत्यन्तरञ्जिकेत्यर्थः । अत्र धातुसंबद्धा न तु गीतिशब्दवाच्या । सकृदेकवारं कृतः प्रणयो याच्ञा येनेदृशोऽयं जनो हंसपदिकालक्षणः । तस्याः सकाशाद्देवीं वसुमतीमन्तरेण विना क्षणमपि न तिष्ठामीति मत्संबन्धमुपालम्भमवगतोऽस्मि । क्वचित् 'तदद्य देवीं वसुमतीमन्तरेणोपालम्भमुपाकृतोऽस्मि ।' इति पाठः सुबोध एव । शिखण्डके काकपक्षके । कोऽप्यर्थे । ताड्यमानस्य । तया शिखण्डके गृहीतस्येति योज्यम् । अप्सरसा वीतरागस्येव नास्तीदानीं मोक्षो मोचनं कैवल्यं च । अप्सरसा गृहीतस्य वीतरागस्येति योज्यम् । श्लेषोपमा । नागरिकवृत्त्येति त्रिपताकस्य मध्यमातर्ज-

१ महदुपालम्भनं गतोऽस्मि; हंसवतीम०. २ भो मघव्य ... ३ ... ४ नास्त्येतत्पुस्तकान्तरे.

विदूषकः—का गतिः। (इति निष्क्रान्तः।) (क)

राजा—(आत्मगतम्।) किं नु खलु गीतमेवंविधार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि। अथवा।

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ २ ॥

(क) का गई।

नीभ्यां वक्राभ्यामधोमुखं कम्पिताभ्यामित्यर्थः। का गतिः। राजवचनमनुल्लङ्घनीयमिति भावः। 'गीतमाकर्ण्य' इति पाठः। गीतार्थमाकर्ण्य इति पाठे गीतं चार्थश्चेति गीतार्थमाकर्ण्य श्रुत्वा ज्ञात्वेति व्याख्येयम्। इष्टजनविरहादृत इति शापप्रभावाद्वस्तुतस्तस्मादेव बलवदधिकम्। रम्याणीति। रम्याणि वस्तूनि वीक्ष्य। विशेषणेनैव विशेष्यावगतेस्तदनुपादानम्। अत एव प्रक्रमभङ्गः। मधुरान् श्रुतिसुखदाञ्छब्दान्गीतादीन्निशम्य श्रुत्वा च सुखितोऽपि। विरही भवत्येवेत्यपिशब्दार्थः। जन्तुः प्राणिमात्रं पर्युत्सुकीभवत्युत्कण्ठीभवति। रम्याणि वीक्ष्येति प्रसङ्गसंगत्योक्तम्। यद्वा। हृदि स्फुरितं चूतमञ्जर्यादिकमर्थे पुरः साक्षादिव कुर्वत इतीयमुक्तिः। नूनं निश्चितं तद्भावैर्वासनाभिः स्थिराणि निश्चलानि। जन्मसहस्रैरपि दूरीकर्तुमशक्यानीति भावः। जननान्तरसौहृदान्यन्यजन्मसौहार्दान्यबोधपूर्वं विषयविशेषज्ञानाभावपूर्वं चेतसा स्मरति। यतो जननान्तरसौहृदमत एव पूर्वमिति हेतुत्वेनेह योज्यम्। सामान्यतो जन्मान्तराणामनुरागं स्मृत्वा समुत्सुकत्वं भवतीत्यर्थः। अत्र स्वस्य शकुन्तलाविषये जन्मान्तरीयोऽधुनातनशापाच्छादितोऽनुरागो गम्यः। यतो विशेषे प्रस्तुते सामान्योक्तेरप्रस्तुतप्रशंसा तेन स्थायिन्या रतेरविच्छेदो ध्वनितः। अत्र नूनमित्युत्प्रेक्षायामिति कश्चित्तन्न। अत्र जन्मान्तरीयस्मरणं शास्त्रासिद्धमेव। तस्यासंभवात्संबन्धः क्वचिदुत्प्रेक्षणीयः। अत्र सामान्यत उक्तेः क्वचित्कालाभावान्न तदुत्प्रेक्षा। अथ समयविशेषेऽसदुत्प्रेक्ष्यत इति चेत्तदपि न। रसोत्पादकारणस्योक्तेः। तेन काव्यलिङ्गमेव। तयोश्च पदार्थवाक्यार्थरूपत्वात्संसृष्टिः। अबोधपूर्वं स्मरतीति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः। म्याम्येति युत्सुयत्सु इति नूननेति छेकवृत्तिश्रुत्यनुप्रासाः। वसन्ततिलका वृत्तम्। औत्सुक्यलक्षणं सुधाकरे—'कालाक्षमत्वमौत्सुक्यमिष्टवस्तुवियोगतः। तद्दर्शनाद्रम्यवस्तुदिदृक्षादेश्च' इति। क्वचित् 'भावास्थितानि' इति पाठः। सोऽपि सांप्रदायिक

१ गीतमा०, गीतार्थमा०. २ कीभव०. ३ स्थितानि.

( इति पर्याकुलस्तिष्ठति । )

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि ।

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥ ३ ॥

भोः कामं धर्मकार्यमनतिपात्यं देवस्य । तथापीदानीमेव धर्मासनादुत्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदयितुम् । अथवाऽविश्रमोऽयं लोकतन्त्राधिकारः । कुतः ।

---

एव ॥ २ ॥ पर्याकुल इति विरहित्वादेव । सत्यपि शापे स्थायिन्या रतेरविच्छेदार्थमेतादृगुक्तिः । एवमग्रेऽपि ज्ञेयम् । अन्यथा मध्ये विच्छेदान्महान्रसदोषः स्यात् । तत इति । स्वकार्यवशात्सूचनामकृत्वैव कञ्चुकिनः प्रवेशः । कञ्चुकिलक्षणं मातृगुप्ताचार्यैरुक्तम्—'ये नित्यं सत्यसंपन्नाः कामदोषविवर्जिताः । ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥' इति । ईदृशीमिति वृद्धावस्था । आचार इति । अवहितेन सावधानेन मया । शक्तेनापीत्यर्थः । राज्ञोऽवरोधगृहेष्वन्तःपुरेष्वाचार इति रक्षाधिकारिणा वेत्रयष्टिर्गृहीतव्येत्याचाराद्या वेत्रयष्टिर्गृहीता । बहुतिथे काले ह्यायुर्लक्षणे गते । 'बहुपूगगणसंघस्य तिथुक्' । मम सैव वेत्रयष्टिरवलम्बनार्था शरीरावलम्बप्रयोजना जाता । अर्थेन सह नित्यसमासः स्त्रीलिङ्गता चेति समासः स्त्रीलिङ्गता च । कीदृशो मम । प्रस्थाने गमनारम्भे विक्लवा गतिर्गमनक्रिया यस्य । अत्र पूर्वार्धे उक्तनिमित्ता विभावना । असक्तत्वस्य प्रसिद्धकारणस्य निषेधोऽवहितेनेति तद्विरुद्धमुखेनोक्तः । निमित्तं चाचार इत्युक्तम् । उत्तरार्धे वार्द्धकगमनलक्षणकार्यस्यारम्भे वेत्रयष्टेः सहायतोपादानात्समाहितम् । 'कार्यारम्भे सहायाप्तिः' इति तल्लक्षणात् । अत्र प्रस्थानगतिशब्दयोरन्यतराग्रहणे विह्वलत्वं मनोगतमपि प्रतीयत इत्युभयग्रहणम् । गतिशब्दस्य ज्ञानार्थत्वादपि । 'वृद्धस्य विक्लवगतेः' इति वा पठनीयम् । एवमवरोधनियोगकालेन तदप्यर्थपौनरुक्त्यं परिहरणीयम् । त्यतायेति हितेहीतेति गृहीगृहेति गतेगत इति छेकवृत्तिश्रुत्यनुप्रासाः । वृत्तमनन्तरोक्तम् ॥ ३ ॥ काममिति अकामानुमतौ । अनतिपात्यमनतिक्रमणीयम् । न विद्यते विश्रमो यस्य सोऽविश्रमः । लोके भुवने तन्त्राधिकारः प्रधानाधिकारः । विश्रान्तिरहित इत्यर्थः । 'लोकस्तु भुवने जने' । 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः ।

१ अधिकृतेन. २ नाय, नार्थम्. ३ अविश्रमः; कार्यो नियोगो लोकपालानाम्.

भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥ ४ ॥

यावन्नियोगमनुतिष्ठामि । ( परिक्रम्यावलोक्य च । ) एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः
शीतं दिवा स्थानमिव द्विपेन्द्रः ॥ ५ ॥

( उपगम्य । ) जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्य-

---

'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इत्यविश्रमपदे वृद्ध्यभावः । **भानुरिति** । भानुः सूर्यः सकृदेकवारमेव युक्ता योजितास्तुरङ्गा येन सः । एतेन तुरङ्गमात्रयोजनेऽप्यस्याविश्रान्तिर्ध्वनिता । एतादृश एवास्त इति शेषः । यस्य तुरङ्गयोजने विश्रान्त्यभावस्तस्यान्यकार्येऽविश्रान्तिः किमु वक्तव्येत्यविश्रान्तगमनं ध्वन्यते । केचिद्रात्रिंदिवं यातीत्यत्रापि योजयन्ति तन्न सम्यक् । यतः प्रतिवस्तूपमायां प्रतिवाक्यसामान्यधर्मस्य भिन्नपदोपादानत्वमपेक्ष्यते तद्धीयेत । किं चैतद्विशेषणोपादानं व्यर्थं स्यात् । भानू रात्रिंदिवं प्रयातीत्येतावतैवाभिमतार्थसिद्धेः प्रक्रमभङ्गश्चापद्येत । अग्रिमयोर्विशेषणानुपादानात् । गन्धवहो वायुरावहप्रवहादी रात्रिंदिवं प्रयाति । 'अचतुर—' इति निपातनाद्रात्रिंदिवमिति सिद्धम् । शेषोऽनन्तः सदैव सर्वदाहितभूमिभारो धृतवसुंधराभारः अस्तीति शेषः । सामान्यक्रियानिर्देशादध्याहारदोषाभावः । लट्प्रत्ययो नित्यवृत्तत्वं द्योतयति । प्रजाभिरुपार्जितस्य द्रव्यस्य य षष्ठोंऽशः स वृत्तिर्वर्तनं यस्य तस्य राज्ञः । अपिशब्दः समुच्चये । एष धर्मः स्वीकृतभूमिभारत्वम् । अत्र भारो रक्षणरूपः सार्वकालिकत्वलक्षणसमानधर्मस्य सकृद्युक्तपदेन रात्रिंदिवपदेन सदैवपदेन चोक्तेर्मालाप्रतिवस्तूपमा । दुष्यन्तस्येति विशेषे वक्तव्ये सामान्यवचनादप्रस्तुतप्रशंसापि । श्रुत्यनुप्रासः । इन्द्रवज्रा वृत्तम् ॥ ४ ॥ नियोगं स्वाधिकारं मुनिनिवेदनलक्षणम् । **प्रजा इति** । प्रजाः स्वापत्यानीव स्वाः प्रजाः स्वीयलोकांस्तन्त्रयित्वा संव्यवहार्याशान्तमना उद्विग्नमनाः सन्विविक्तं विजनं स्थानं निषेवते । 'प्रजा स्यात्संततौ जने' । 'विविक्तौ पूतविजनौ' इति चामरः । संचार्य चारयित्वा । रविप्रतप्तः सूर्यप्रतप्तो द्विपेन्द्रो गजो दिवा शीतं स्थानमिव । उपमयोश्छेकवृत्त्यनुप्रासयोश्च संसृष्टिः । श्रुत्यनुप्रासः । उपेन्द्रवज्रा वृत्तम् । अत्र दिवेति रात्र्यादिसमयं निवर्तयन्नवितापस्याधिक्यं द्योतयति । 'शान्तमनाः' इति तु छेदे रवितप्त इत्युपमानेन सह विरोधः स्यात् ॥ ५ ॥ एते क्लान्तमनस इति वक्ष्यमाणेन राजवचनेन विरोधापत्तिश्च । हिमगिरेर्हिमाचलस्य । क्वचित् 'हिमवतो गिरेः' इति पाठः । तत्र हिमं विद्यते यस्मिन्निति यौगिकत्व-

---

१ कण्वशिष्यान्०. २ अशान्तमनाः. ३ गुहा०. ४ हिमवतः.

वासिनः काश्यपसंदेशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः । श्रुत्वा देवः प्रमाणम् ।

राजा—( सादरम् । ) किं काश्यपसंदेशहारिणः ।

कञ्चुकी—अथ किम् ।

राजा—तेन हि मद्वचनाद्विज्ञाप्यतामुपाध्यायः सोमरातः । अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसीति । अहमप्यत्र तपस्विदर्शनोचिते प्रदेशे स्थितः प्रतिपालयामि ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

राजा—( उत्थाय । ) वेत्रवति अग्निशरणमार्गमादेशय ।

प्रतीहारी—इत इतो देवः । ( क )

राजा—( परिक्रामति । अधिकारखेदं निरूप्य । ) सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः । राज्ञां तु चरितार्थता दुःखोत्तरैव ।

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ६ ॥

( क ) इदो इदो देवो ।

मङ्गीकृत्य तेन च तन्निवासिनां दुष्करतपश्चरणं तेन गौरवातिशयो द्योत्यत इति परिहर्तव्यमर्थपौनरुक्त्यम् । उपत्यकारण्यं पर्वतासन्नभूमिवनं तद्वासिनः । 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः । सोमरात इत्युपाध्यायनाम । श्रौतेन वेदोक्तेन । सत्कृत्य पूजयित्वा । स्वयमेवेत्यनेन गौरवातिशयो द्योत्यते । वेत्रवतीति प्रतिहारीनाम । द्वारदेशस्थितायास्तस्या राज्ञोऽपि तत्रैव संनिधानादप्रवेशः । अग्निशरणमग्निगृहम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । इत इतो देवः । दुःखान्तरैव दुःखावधिकैव । 'दुःखोत्तरा' इति पाठे दुःखाधिकेत्यर्थः । औत्सुक्येति । प्रतीष्ठा सर्वोत्कृष्टं गौरवम् । सा कर्त्री । एतमित्यग्रे वक्ष्यमाणत्वादस्येति विपरिणम्यते । अस्य राज्ञ औत्सुक्यमात्रं यावद्विषयजन्यामुत्कण्ठामवसाययति समाप्तिं नयति । अन्यजनस्य तु यत्किंचिद्विषयिणी समुत्पन्नोत्कण्ठा तथैव तिष्ठति तत्तद्विषयलाभात् । राज्ञस्तु फललाभादुत्कण्ठापरिपूर्तिः । एतावदाभिमानिकं सुखमिति भावः । लब्धस्य प्राप्तस्य फलस्य यत्परितः सर्वतोभावेन पालनं रक्षणं तत्र या वृत्तिर्वर्तना कदाचित्सर्वरात्रिजागरणं तत्रैव कदाचिदच्छिन्नधारावृष्ट्यनुभव इत्यादिकमेनं राजानं क्लिश्नाति । अतः कारणाद्राज्यम् । कर्तृ । अत्यन्तं यः श्रमस्तदपनयनायेति न । अपि त्वतिश्रमापनयनायैव

१ सविस्मयम्. २ कण्व०, सस्त्रीकास्तपस्विनः इत्यधि० ३ [illegible] ४ [illegible] परिक्रामतीत्यधिकं क्वचित्. ५ चरित्राणि दुःखोत्तराण्येव. ६ सादयति. ७ रेनम्. ८ न च.

( नेपथ्ये । )

वैतालिकौ—विजयतां देवः ।

प्रथमः—

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ७ ॥

द्वितीयः—

नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ८ ॥

---

सुखदत्वात् । श्रमायेति न । अपि तु श्रमायैव क्लेशदत्वात् । किमिव । स्वहस्ते धृतो दण्डो यस्य तदातपत्रं छत्रमिवेति । अत्र राज्यं पक्षः । श्रमापनयश्रमौ साध्यौ । पूर्वार्धे हेतुः । चतुर्थचरणो दृष्टान्त इत्यनुमानालंकारः । उपमानानुमानयोरङ्गाङ्गिभावः संकरः । यच्छ्रमापनयनाय तच्छ्रमायेति विरोधाभासः । यथासंख्यमपि । अथ च संबन्धेऽसंबन्धरूपासंबन्धे संबन्धरूपा द्वयातिशयोक्तिरपि । श्रमाश्रमेति नयनायेति यनायेनेति वा छेकवृत्त्यनुप्रासयोः संसृष्टिः । श्रुत्यनुप्रासोऽपि । एकान्तसुखायतनत्वभ्रमेण राज्य आसक्ततया न भवितव्यमित्युपदेशो व्यज्यते । वसन्ततिलका वृत्तम् ॥ ६ ॥ अधिकारखेदं निरूप्येत्यादिना यः खेदो निबद्धः स निरुपधिपरोपकारप्रवृत्तानां भवदादीनामेतत्स्वभावान्नायं खेद इति वैतालिकवचसा स्तौति—**स्वसुखेति** । नैकाहं न पञ्चषाहमपि तु प्रतिदिनं प्रत्यहम् । निरन्तरमित्यर्थः । त्वं लोकहेतोर्लोककारणात् । लोकनिमित्तमिति यावत् । खिद्यसे परितप्यसे । तत्रार्थे हेतुमाह—स्वस्मिन्यत्सुखं तत्र निरभिलाषो निर्गतवाञ्छः । प्रासङ्गिकसुखायापि न प्रवृत्तिरिति भावः । अत्र खिद्यस इति 'खिद परितापे' अस्य तुदादिकस्य कर्मकर्तरि प्रयोगः । अथवेति पूर्वाक्षेपे । एवंविधैव ते वृत्तिर्वर्तनम् । हि यस्मात्पादपो वृक्षः । पादांश्चरणान्पाति रक्षतीति च । अत एव न वृक्षादिपदोपादानम् । मूर्धाग्रभागेनाथवोत्तमाङ्गेन । तीव्रमुष्णं मध्याह्नसंभवमनुभवति । संश्रितानामथ उपविष्टानामथ चाश्रितानां छाययातपाभावेन पालनेन च परितस्तापमौष्ण्यं तापं खेदं च शमयतीति । व्यवहारसमारोपात्समासोक्तिः । काव्यलिङ्गाक्षेपदृष्टान्ताः । वृत्तिश्रुत्यनुप्रासौ । मालिनी वृत्तम् ॥ ७ ॥ **नियमयसीति** । आत्तदण्डो गृहीतदण्डः । प्राप्ताभिमानश्च । 'अभिमाने ग्रहे दण्डः' इति विश्वः । कुमार्गप्रस्थितानुद्धता-

---

१ सर्वभक्ताः.

**राजा**—एते क्लान्तमनसः पुनर्नवीकृताः स्मः । (इति परिक्रामति ।)

**प्रतीहारी**—एष अभिनवसंमार्जनसश्रीकः संनिहितहोमधेनुरग्निशरणालिन्दः । आरोहतु देवः । (क)

**राजा**—(आरुह्य परिजनांसावलम्बी तिष्ठति ।) वेत्रवति किमुद्दिश्य भगवता काश्यपेन मत्सकाशमृषयः प्रेषिताः स्युः ।

किं तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित्प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-
मित्यारूढवहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ९ ॥

(क) एसो अहिणवसम्मज्जणसस्सिरीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो । आरोहदु देवो ।

नियमयसि विनीतान्करोषि । मार्गस्थान्करोषीत्यर्थः । विवादं परस्परकलहं शमयसि । रक्षणाय कल्पसे प्रभवसि । भयात् शत्रुभ्यो धनदानेन इत्यादि रक्षणं बहुप्रकारम् । अतनुषु बह्वीषु संपत्सु । नामेति संभावनायाम् । ज्ञातयः सन्तु भवन्तु । बन्धुकृत्यकारिण इत्यर्थः । तुः पूर्वतो विशेषे । सति विभवेऽसति च विभवे । प्रजानां प्रजासु विषये । षष्ठीसप्तम्योरभेदाद्बन्धूनां ज्येष्ठबन्धूनां कृत्यममार्गान्निवर्तनं कलहशमनं रक्षणं च तत्त्वयि परिसमाप्तं त्वय्येव निष्पाद्यते । नान्येनेत्यर्थः । अत्र पूर्वार्धार्थौ हेतुत्वेनोपात्तः । काव्यलिङ्गव्यतिरेकानुप्रासाः । पूर्वार्धे यमकं च । वृत्तमनन्तरोक्तम् । अनेन च पद्येन पूर्वं लोकहेतोरिति यदुक्तं तदेव विवृतम् ॥ ८ ॥ नवीकृताः । अधिकारचिन्तन इति शेषः । अत एवास्माभिस्तत्र 'अशान्तमनाः' इति व्याख्यातम् । यतस्तस्यैवानुवादोऽयं 'क्लान्तमनसः' इति अभिनवं नूतनं यत्संमार्जनं तेन सश्रीकः सशोभः । संनिहितहोमधेनुः । इति विशेषणद्वयेन पावित्र्यातिशयो द्योत्यते । अग्निशरणालिन्दोऽग्निहोत्रगृहबहिर्द्वारप्रकोष्ठः । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ।' इत्यमरः । स्वभावोक्तिः तस्य खेदविनोदं द्योतयति । आरोहतु देवः । परिजनांसावलम्बीति खेदविनोद एव । **किं तावदिति** । व्रतिनां नियमवतामत एवोपोढमत्यूढमधिकं तपो येषाम् । ईदृशां तपस्विनाम् । विशेषणेनैव विशेष्यप्रतिपत्तेर्न तदुपादानम् । तपो विघ्नैर्विघ्नकर्तृभी राक्षसादिभिः । साध्यवसानेयं लक्षणा । तस्या विघ्नातिशयः फलं दर्शितम् । किमिति वितर्के । उत धर्मारण्यचरेषु धर्मवनगेषु प्राणिषु जन्तुषु । धर्मपदेन ऋषीणां महत्त्वं सूचयता चेष्टितस्यात्यन्तमनुचितत्वं ध्वन्यते । ... केनापि कामादिना

१ तिष्ठन्.

प्रतीहारी—सुचरितनन्दिन ऋषयो देवं सभाजयितुमागता इति तर्कयामि । ( क )

( ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः । पुरश्चैषां कञ्चुकी पुरोहितश्च । )

कञ्चुकी—इत इतो भवन्तः ।

शार्ङ्गरवः—शारद्वत

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ १० ॥

---

( क ) सुचरिदणन्दिणो इसीओ देवं सभाजइदुं आअदेत्ति तक्केमि ।

---

सत् । वाचापि वक्तुमशक्यमिति भावः । चेष्टितं कृतम् । आहोस्विन्ममापचरितैर्वीरुधां लतानां प्रसवः पल्लवपुष्पादिर्विष्टम्भितः प्रतिबद्धः । 'पुष्पं फलं च पत्रं च वृक्षाणां प्रसवं विदुः ।' इति धरणिः । तदुक्तम्– 'राज्ञोऽपराचात्पृथिवी स्वल्पसस्या भवेत्किल । अल्पायुषः प्रजाः सर्वा दरिद्रा व्याधिपीडिताः ॥' इति । तपतप इति खिसवो इति छेकानुप्रासवृत्तिश्रुत्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् । षष्ठीसप्तम्योरभेदान्न विभक्तिप्रक्रमभङ्गः । विशेषणप्रक्रमभङ्गोऽपि नाशङ्कनीयः । आदौ विशेषणद्वयं ततस्तदभाव इत्येव क्रमस्य विवक्षितत्वात् ॥ ९ ॥ महाभाग इति । न भिन्ना त्यक्ता स्थितिर्मर्यादा येन सः [ अभिन्नस्थितिः असौ ] नरपतिः । काममतिशयेन महाभागः श्रेष्ठ इति विधेयम् । [ पाठान्तरे ] अहो इत्याश्चर्ये । वर्णानां ब्राह्मणादीनां मध्येऽपकृष्टो हीनोऽपि कश्चिदपथममार्गं न भजते । 'अपथं नपुंसकम्' इति नपुंसकत्वम् । इति यद्यपि तथापीदं जनाकीर्णं जनव्याप्तं स्थानं शश्वन्निरन्तरं परिचितं विविक्तं विजनस्थानं यस्य तेन मनसोपलक्षितोऽहं मनसा हेतुना वा हुतवहपरीतं गृहमिव मन्ये । अत्र पूर्वार्धे यत्कारणमुक्तं विजनस्य तत्सम्यक्त्वं कार्यं तदभावस्तद्विरुद्धमुखेनोक्त इति विशेषोक्तिः । अथ च यदग्निपरीतत्वं कार्यं तत्कारणाभावस्य तद्विरुद्धमतेन पूर्वार्धे उक्तेन विभावना । उभे अप्युक्तनिमित्ते शश्वत्परिचितेत्यनुक्तेः । साधकबाधकप्रमाणाभावात्संदेहसंकरः । 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इत्युक्तेर्मन्येशब्दस्योत्प्रेक्षाद्योतकत्वेऽप्यत्र न तथा । तत्सामग्र्यभावात् । उपमयैव गतार्थत्वात् । तेनात्र मन्येशब्दस्य बुद्धित्वमात्रमर्थः । अनुप्रासाः । वक्तुर्वैराग्यं ध्वन्यते । शिखरिणी वृत्तम् ॥ १० ॥

---

१ भविशतः महती ०लाभादाय कण्वशिष्यौ । २ रहो० ३ ब्राह्मण०.

शारद्वतः—स्थाने भवान्पुरप्रवेशादित्थंभूतः संवृत्तः। अहमपि

अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि ॥ ११ ॥

शकुन्तला—( निमित्तं सूचयित्वा। ) अहो किं मे वामेतरं नयनं विस्फुरति। (क)

गौतमी—जाते प्रतिहतममङ्गलम्। सुखानि [ शुभानि ] ते भर्तृकुलदेवता वितरन्तु। ( इति परिक्रामति। ) (ख)

पुरोहितः—( राजानं निर्दिश्य। ) भो भोस्तपस्विनः असावत्रभवान्वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनो वः प्रतिपालयति। पश्यतैनम्।

शार्ङ्गरवः—भो महाब्राह्मण काममेतदभिनन्दनीयं तथापि वयमत्र मध्यस्थाः। कुतः।

भवन्ति नम्रास्तरवः फलागमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥

---

(क) अम्महे किं मे वामेदरं णअणं विप्फुरदि।

(ख) जादे पडिहदं अमङ्गलं। सुहाइं दे भत्तुकुलदेवदाओ वितरन्दु।

---

अहमपीति श्लोकेनान्वेति— अभ्यक्तमिति। अहं सुखसङ्गिनं जनमीदृशमवैमि। त्वं त्वग्निपरीतगृहमिव जानासि। अहमप्येतादृशमित्यपिशब्दार्थः। एतादृक्त्वं च विशिष्टोपमारूपम्। कः कमिव। स्नातोऽभ्यक्तं तैलाभ्यक्तमिव। अनेन पापश्लिष्टत्वं ध्वन्यते। शुचिरशुचिमिवेत्यनेन पत्यादिषु स्नेहादिविद्धत्वं ध्वन्यते। प्रबुद्धः सुप्तमिवेत्यनेनाज्ञानाविद्धत्वं व्यज्यते। स्वैरगतिबद्धमिवेत्यनेन प्रयत्नसहस्रानयने परवशंवदत्वं ध्वन्यते। मालोपमेयम्। तेन पारतन्त्र्यलक्षणो भिन्नोऽत्रावगम्यः सामान्यधर्मः। छेकवृत्त्यनुप्रासौ। 'स्नातोऽभ्यक्तमिव शुचिरशुचिमिव प्रबुद्धः सुप्तमिव स्वैरगतिः संयतमिव' इति निर्वेदे ॥ ११ ॥ किं मे वामेतरं दक्षिणं नयनं विस्फुरति। 'किं मे वामं दक्षिणं नयनम्' इति पाठे वामं प्रतीपम्। विरोधाभासः। अत्रभवान्पूज्यो वर्णाश्रमाणां रक्षितेत्यनेन भवदादीनामस्मदादीनां च सर्वदा पालनासक्तत्वम्। प्रागेव मुक्तासन इत्यनेन विनयातिशयः। वः प्रतिपालयतीति भक्त्यतिशयो व्यज्यते। महाब्राह्मणेति राजपुरोहितत्वात्तं प्रति मुनेरुक्तिरिति नानौचित्यम्। काममतिशयेनैतद्विनयातिशयत्वादिकमभिनन्दनीयं स्तुत्यं यद्यपि तथापि वयमत्र मध्यस्था निस्पृहाः। एतदस्माकं वर्णनीयं न भवतीति भावः। वर्णनीयत्वाभावे च स्वाभाव्यं हेतुत्वेनोद्दिशति—कुत इति। भवन्तीति। तरवो वृक्षाः फलानामागमैरागमनैर्नम्रा भवन्ति। नवाम्बुभिर्नूतनजलैः घना मेघाः दूरविलम्बिनो भवन्ति। सत्पुरुषाः समृद्धिभिः सम्पत्तिभिः अनुद्धता भवन्ति। परोपकारिणाम् एष स्वभाव एव। ... प्रसिद्धस्तै



---

१ जाने. २ अहं तु. ३ दुर्निमित्तं; सूचयन्ती, अभिनीय.

**प्रतीहारी**—देव प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विश्रब्धकार्या ऋषयः । (क)

**राजा**—( शकुन्तलां दृष्ट्वा । ) अथात्रभवती ।

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १३ ॥

( क ) देव पसण्णमुहवण्णा दीसन्ति । जाणामि विस्सद्धकज्जा इसीओ ।

अनेन समृद्धिकाष्ठा तेषां द्योतिता । नम्रा अधोमुखा विनीताश्च भवन्ति । अत्र तरुशब्देन सामान्यविशेषभावसंबन्धेन चूतप्रभृतयो विशेषा लक्ष्यन्ते तत्सजातीयबहुत्वप्रतिपत्तिश्च फलेषु । वनस्पतिप्रभृतिषु तदभावादर्थासंगतिः । किं च सत्पुरुषाणां विशिष्टानामेवोपमेयत्वात्तैः सहोपमानतापि न संगच्छते । तर्ह्युत्तरवाक्येऽप्येतद्दोषावकाश इति चेन्न । मेघादिपदत्यागेन घनपदोपादानात् । तथा च व्याख्यास्यते । केचनैतादृशस्थले 'वाच्य एवार्थो लक्षणा' इति मन्यन्ते । घना मेघा अथ च निबिडाः । नवाम्बुभिरिति वर्षाकालारम्भो ध्वन्यते । तेषां तत्रैव समृद्धत्वाद्दूरविलम्बिनोऽतिशयवर्षुकाः । अथ च विनीता भवन्तीत्यनुषज्यते । अत्र तरुघनयोरुन्नेतनयोर्नम्रदूरविलम्बित्वाभ्यां च वस्तुतो भिन्नाभ्यामभेदेनाध्यवसिताभ्यामतिशयोक्तिः सत्पुरुषाः समृद्धिभिरनुद्धता नम्रा भवन्तीत्यनुषज्यते । तेन क्रियादीपकम् । विनयस्य साधारणधर्मस्य नम्रदूरविलम्ब्यनुद्धतशब्देनोक्तेर्मालाप्रतिवस्तूपमा च । अत्र दुष्यन्तलक्षणे विशेषे प्रस्तुते सत्पुरुषस्य वचनादप्रस्तुतप्रशंसापि । स्वभाव इत्यादिस्तु हिशब्दानुपादानेऽप्यर्थान्तरन्यासः । 'क्व नासि शुभप्रदः' इतिवत् । हेत्वनुप्रासौ च । वंशस्थं वृत्तम् ॥ १२ ॥ देव प्रसन्नमुखवर्णा दृश्यन्ते । जानामि विश्रब्धं शान्तमक्रूरं कार्यं येषां ते तादृशा ऋषयः । **का स्विदिति** । स्विदिति वितर्के । सशिरोमुखप्रावरणमवगुण्ठनं तद्वती । अत एव नातिपरिस्फुटे शरीरलावण्ये यस्याः सा । नञ्समासः । इदमनूद्यम् । तपोधनानां मध्ये कास्विदिति विधेयम् । अत एवैतन्मात्र उपमा पाण्डुपत्राणां मध्ये किसलयं कोमलपल्लवमिवेति । अस्याश्च भिन्नलिङ्गत्वेऽपि कोमलत्वादेः साधारणधर्मस्य गम्यत्वात्सहृदयमनोनुरञ्जकत्वमेव । हेत्वनुप्रासौ । ननु नातिपरिस्फुटेत्यादौ शरीरमात्रग्रहणेऽप्युभयलाभ इति चेत्सत्यम् । स्यादेवं यदि निषेधमात्रे तात्पर्यं स्यात्किं त्वत्र विधौ तात्पर्यम् । अत एवातिपर्योरुपादानम् । तेनेषद्व्यक्ते इत्यर्थः । अत्र चोभयग्रहणमन्तरेण विवक्षितार्थालाभात् । यत आद्यमात्रोपादाने द्वितीयाप्राप्तेः द्वितीयमात्रग्रहणे कनकचम्पकाभतनुवर्णाप्तेः । लावण्यलक्षणं सुधाकरे 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु लावण्यं



१ केयम०, २ राआ.

प्रतीहारी—देव कुतूहलगर्भः प्रहितो न मे तर्कः प्रसरति । ननु दर्शनीया पुनरस्या आकृतिर्लक्ष्यते । ( क )

राजा—भवतु । अनिर्वर्णनीयं परकलत्रम् ।

शकुन्तला—( हस्तमुरसि कृत्वा । आत्मगतम् । ) हृदय किमेवं वेपसे । आर्यपुत्रस्य भावमवधार्य धीरं तावद्भव । ( ख )

पुरोहितः—( पुरो गत्वा । ) एते विधिवदर्चितास्तपस्विनः । कश्चिदेषामुपाध्यायसंदेशः । तं देवः श्रोतुमर्हति ।

राजा—अवहितोऽस्मि ।

ऋषयः—( हस्तानुद्यम्य । ) विजयस्व राजन् ।

राजा—सर्वानभिवादये ।

ऋषयः—इष्टेन युज्यस्व ।

राजा—अपि निर्विघ्नतपसो मुनयः ।

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

राजा—अर्थवान्खलु मे राजशब्दः । अथ भगवाँल्लोकानुग्रहाय कुशली काश्यपः ।

( क ) देव कुतूहलगब्भो पहिदो[1] ण मे तक्को पसरदि । णं दंसणीआ उण से आकिदी लक्खीअदि ।

( ख ) हिअअ किं एव्वं वेवसि । अज्जउत्तस्स भावं ओहारिअ धीरं दाव होहि ।

तदिहोच्यते ' इति । एवंभूतैतदवलोकनेन स्थायिन्या रतेरनुसंधानम् ॥ १३ ॥ देव कुतूहलेन गर्भे मध्य उपहितो युक्तो न मे तर्कः प्रसरति । क्वचिद्धृतपुस्तके ' कुतूहलगब्भोपहद ' इत्यादिपाठः । क्वचित्पुस्तके तु नास्त्येवायं पाठः । दर्शनीया सुन्दरा । भवत्विति निषेधे । ' अस्तु भवतु पूर्यंत इति निषेधे ' इत्युक्तेः । अनिर्वर्णनीयमद्रष्टव्यम् । हस्तमुरसि कृत्वेति स्वभावोक्तिः । भावं चित्ताभिप्रायम् । कुत इति । त्वयि रक्षितरि सति कुतो धर्मक्रियाविघ्नः । सर्वमेवैतद्विधेयम् । त्वं रक्षिता । त्वयि रक्षितरि सर्वे सन्तः । तेषां क्रियामात्रविघ्नोऽपि न संभाव्यते सुतरां धर्मक्रियाविघ्न इत्यर्थः । तम इति । घर्मांशौ सूर्ये उदयाद्रिमारूढ एव तमोनाशः अपि तु तस्मिन्सुतरामाविर्भूते तदभाव इत्यर्थः । दृष्टान्तालंकारः । हेत्वनुप्रासौ ॥ १४ ॥ अर्थवान्सप्रयोजनः । तापयुक्तत्वादिति भावः । लोकानुग्रहाय जनानुग्रहाय । भुवनानुग्रहाय चेत्यर्थः । ' लोकस्तु भुवने जने ' इत्यमरः ।

१. तोध्वर०. २ ०ब्भो पहिदो ( प्रहितः ), पडिहदो.

ऋषयः—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

राजा—किमाज्ञापयति भगवान् ।

शार्ङ्गरवः—यन्[1]मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त तन्[2]मया प्रीतिमता युवयोरनुज्ञातम् । कुतः ।

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च[3] सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

तदिदानीमापन्नसत्त्वे[4]यं प्रतिगृह्यतां सहधर्मचरणायेति ।

त्रिभुवनानुग्राहकत्वेन लोकोत्तरा तपःसिद्धिर्ध्वनिता । तदभिप्रायेणैवोत्तरयन्ति— स्वाधीनेति । अनामयप्रश्नपूर्वमिति तस्य क्षत्रियत्वात् । तदुक्तं भृगुसंहितायाम्— 'ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च' इति । मिथःसमयात् । गान्धर्वेण विवाहेनेत्यर्थः । उपायंस्त विवाहितवान् । 'उपाद्यमः स्वीकरणे' इत्यात्मनेपदम् । त्वमिति । यद्यस्मात्त्वमर्हतां पूज्यानां प्राग्रसरो मुख्यः स्मृतोऽसि । लोकैरिति शेषः । क्वचित् 'स्मृतोऽसि नः' इति पाठः । सरतीति सरः । 'नन्दिग्रहिपचादिभ्यः' इत्यत्र पचादेराकृतिगणत्वादच् । ततः प्रकर्षेणाग्रे सरतीति प्राग्रसरः । 'त्वमर्हतां प्राग्रहरः' इति वा पाठः । 'पराध्याग्र्यप्राग्रहराः' इत्याद्यमरः । यद्यस्माच्छकुन्तला मूर्तिमती शरीरधारिणी । सती पूज्या चासौ क्रिया च सत्क्रिया । इवेत्युत्प्रेक्षा । अनया चाखिलजनपूज्यत्वमस्या ध्वनितम् । अत एव तुल्यगुणत्वम् । तत्तस्मादित्यार्थेन तच्छब्देनान्वयः । 'न' इति पाठे तूभावप्यार्थौ । तुल्यगुणं समानगुणं वधूवरं समानयन् । चिरस्य चिरकालेन प्रजापतिर्वाच्यं निन्दां न गतो न प्राप्तः । 'वाच्यं वक्तव्यमित्येतौ प्रवर्तेते प्रपादने । वचो हे कुत्सिते हीने दूषणेऽभिधयोदिते' इति धरणिः । चिरस्येति विभक्तिप्रतिरूपकमव्ययम् । 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' इत्यमरः । अन्यत्र यत्र वधूवरं मेलयति तत्र तत्रातुल्यगुणम् । जगतीदमेवेति भावः । अत एव चिरस्येत्युक्तिः । प्रजापतिरिति साभिप्रायम् । समहेत्वनुप्रासाः । वंशस्थं वृत्तम् । 'स्मृतोऽसि सत्क्रियेव यन्मूर्तिमती शकुन्तला' इति पठित्वाक्रमलक्षणो दोषः परिहरणीयः ॥ १५ ॥ आपन्नसत्त्वा गर्भवती । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । धर्मचरणायेत्यनेन विधिवदूढत्वं व्यज्यते । आर्य किमपि वक्तुकामास्मि न मे वचनावसरोऽ-



१ यत्. २ तांव. ३ गुणौ वधूवरौ. ४ सत्त्वा पति.

गौतमी—आर्य किमपि वक्तुकामास्मि । न मे वचनावसरोऽस्ति । कथमिति ।

नापेक्षितो गुरुजनोऽनया त्वया पृष्टो न बन्धुजनः ।
एकैकमेव चरिते भणामि किमेकैकम् ॥ १६ ॥ (क)

शकुन्तला—( आत्मगतम् । ) किं नु खल्वार्यपुत्रो भणति । (ख)
राजा—किमिदमुपन्यस्तम् ।
शकुन्तला—( आत्मगतम् । ) पावकः खलु वचनोपन्यासः । (ग)
शार्ङ्गरवः—कथमिदं नाम । भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः ॥ १७ ॥

---

(क) अज्ज किंपि वत्तुकामह्मि । ण मे वअणावसरो अत्थि । कहंत्ति ।
णावेक्खिओ गुरुअणो इमाए तुए पुच्छिदो ण बन्धुअणो ।
एक्कक्कमेव्व चरिए भणामि किं एक्कमेक्कस्स ॥
(ख) किं णु क्खु अज्जउत्तो भणादि । (ग) पावओ क्खु वअणोवण्णासो ।

---

स्तीति भविष्यदाक्षेपः । तस्यैवोपादानं कथमिति । णेति । [ इमाएण हुं पुच्छिदो अ बन्धुअणो इत्यत्र ] क्वचित्पुस्तके ‘ इमाए तुए पुच्छिदो ण बन्धुजणो ’ इति पाठः । त्वया पृष्टो न बन्धुजन इत्यर्थः । उभयोरप्यपराधाविष्करणम् । परस्परानुरागेण भवद्भ्यामिदं विहितम् । तत्रैकः पर्यनुयोज्यो न भवतीति भावः । गाथेयम् ॥ १६ ॥ पावकोऽग्निः खलु वचनोपन्यासः इति भिन्नरूपकम् । क्वचित् ‘ सावलेपः ’ इति पाठः । निष्णाताः कुशलाः । ‘ निष्णातः कुशलेऽपि च ’ इत्यजयः । ‘ निनदीभ्यां स्नातेः कौशले ’ इति णत्वम् । सतीमिति । जनो लोकः भर्तृमतीं विद्यमानधवां प्रमदां सतीं पतिव्रतामपि ज्ञातिकुलं पितृगृहं तत्संश्रयामथ च सगोत्रगणसंश्रयामन्यथा दोषयुक्तत्वेन विशङ्कते । अनौचित्यपरिहाराय कविना दोषादिपदत्यागेनान्यथापदं दत्तम् । अतः कारणात्प्रियाप्रिया वा । अर्थाद्भर्तुः । प्रमदा स्त्रीमात्रम् । अथ च प्रकृष्टो मदरतारुण्यमदो यस्याः । सैतादृशी स्वबन्धुभिर्वधूबन्धुभिः परिणेतुः समीप इष्यते । ‘ प्रियाप्रिया च ’ इति समीचीनः पाठः । ‘ तदप्रियापि ’ इति पाठे तस्य भर्तुरप्रिया । अपिशब्दात्प्रियापीति व्याख्येयम् । अत्र शकुन्तलायास्त्वत्समीपे स्थितियोग्यतेति विशेषे प्रस्तुते यत्सामान्यवचनं तेनाप्रस्तुतप्रशंसा । हेत्वनुप्रासौ । वृत्तमनन्तरोक्तम् । अत्र स्त्रीसामा-

---

१ तत्कथं २ तत्किम [illegible] ३ वकासो ( अवकाशः ). ४ तुए इमाए न पुच्छिदो बंधू, इमाए ण तुए वि पुच्छिदो बन्धू । ५ एक्कक्कस्स च चरिते भणादु किं एक एक्कस्सिं

राजा—किमत्रभवती मया परिणीतपूर्वा ।

शकुन्तला—( सविषादम् । आत्मगतम् । ) हृदय सांप्रतं त आशङ्का । ( क )

शार्ङ्गरवः—

किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृतावज्ञा ।

राजा—कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी—जाते मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताभिज्ञास्यति । ( इति यथोक्तं करोति । ) ( ख )

---

( क ) हिअअ संपदं दे आसंङ्का ।

( ख ) जादे मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि ।

---

न्ये वक्तव्ये यत्प्रमदेति विशेषवचनं तेन विशेषपरिवृत्तलक्षणं दूषणमिति चेन्न । शब्दशक्त्युद्भावध्वनेः सत्त्वात्तदभिप्रायेणैव व्याख्यातम् । अनेनार्थविशेषणनामा नाट्यालंकार उपक्षिप्तः ॥ १७ ॥ किमिति । कृतं यत्कार्यं गान्धर्वो विवाहस्तत्र द्वेषः किम् । धर्मं प्रति विमुखता किम् । कृते विदितेऽनुभूतेऽवज्ञा किम् । यावदनुभूतं तावदेव तद्दुर्लभमिति भावः । 'कृतं युगेऽपि पर्याप्ते विहिते' इति विश्वः । असत्कल्पनामुत्तरार्धेन निरस्यति—ऐश्वर्यमत्तेषु संपदुद्धतेषु प्रायेण बाहुल्येनामी विकारा उक्ता मूर्च्छन्ति वर्धन्ते । 'मूर्च्छा मोहसमुच्छ्राययोः' इति विश्वः । आदिकारकदीपकसंशयहेत्वर्थान्तरन्यासानुप्रासाः ॥ १८ ॥ जाते पुत्रि । यथोक्तमवगुण्ठनापनयनम् । इत आरभ्य षष्ठाङ्कसमाप्तिपर्यन्तमवमर्शसंधिः । तल्लक्षणं तु सुधाकरे—'यत्र प्रलोभनक्रोधव्यसनाद्यैर्विमृश्यते । बीजादौ गर्भनिर्भिन्नः सोऽवमर्श इतीर्यते' इति । अत्र शापलक्षणव्यसनेन विमर्शः । यथा 'इदमुपनतम्' इत्यादि । प्रकरीनियताप्त्यानुगुण्यादत्राङ्गकल्पना । प्रकरीलक्षणं भावप्रकाशिकायाम्—'शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः । अथर्तुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत्' इति । यथात्रैव षष्ठेऽङ्के 'ततः प्रविशति चूताङ्कुरम्–' इत्यादिना 'नेपथ्ये' इत्यन्तेन । अनेन तु 'फलं तु कल्प्यते यस्याः परार्थायैव केवलम् । अनुबन्धविहीनानां प्रकरी श्रूयते यथा' ॥

---

१ यत्र. किं यत्र. द्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः । २ नामसङ्गः ४ मत्तानां. ५ ०का आसि ( आसीत् ).

**राजा**—( शकुन्तलां निर्वर्ण्य । आत्मगतम् । )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नापि शक्नोमि हातुम् ॥ १९ ॥

( इति विचारयन्स्थितः । )

**प्रतीहारी**—अहो धर्मापे ( वे )क्षिता भर्तुः । ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति । ( क )

**शार्ङ्गरवः**—भो राजन् किमिति जोषमास्यते ।

**राजा**—भोस्तपोधनाः चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि । तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये ।

---

( क ) अहो धम्मावेक्खिआ भट्टिणो । ईदिसं णाम सुहोवणदं रूवं देक्खिअ को अण्णो विआरेदि ।

---

इति लक्षणानुसारेण मातलिवृत्तान्तं प्रकरीवृत्तमाहुस्तन्न । संधिसमाप्तिविषये तस्योद्देशादङ्गानां तदनुगामित्वं नायाति । नियताप्तिलक्षणमादिभरते—'नियतां तु फलप्राप्तिं यदा भावेन पश्यति । नियतां तु फलप्राप्तिं स गुणः परिचक्षते' इति । निर्वर्ण्य दृष्ट्वा । इदमिति । एवमुपनतमयत्नप्राप्तम् । न क्लिष्टा कान्तिर्यस्य तत् । अनेन प्रथमं तारुण्यं ध्वनितम् । इदं रूपं प्रथमगृहीतं स्यान्न वा स्यादिति व्यवस्यन्विचारयन् । 'अव्यवस्यन्' इति पाठे स्वव्यवसायं न जानन् । खलु निश्चयेन । परिभोक्तुं न शक्नोमि निश्चयेन हातुं न च शक्नोमीत्येवं प्रकारेण रतेरनुसंधानं ध्वनितम् । कः किमिव । विभाते प्रभाते भ्रमरः । अन्तस्तुषारो हिमं यस्य तादृक्कुन्दपुष्पमिव । उपरि हिमस्याच्छादकस्य शापस्थानीयत्वात्त्यागाभावः । ससंदेहोपमानुप्रासाः । अत्र विभात इत्युक्तेस्तदनन्तरं रविकिरणैर्हिमे नीते मकरन्दभोगोऽवश्यः । एवमिहाप्यभिज्ञानदर्शनेन शापे गते तत्स्वीकारोऽवश्य इति द्योतयन्त्योपमया रतेः स्थायित्वदार्ढ्यं ध्वनितम् । मालिनी वृत्तम् । एतेन संशयनामकं भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'अनिश्चयान्तं यद्वाक्यं संशयः स निगद्यते' इति । विचारयन्नित्युत्क्षिप्तैकभ्रूभावादिना ॥ १९ ॥ अहो आश्चर्ये । धर्मापेक्षिता भर्तुः । ईदृशम् । नाम प्राकाश्ये । प्रकटं सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति । जोषं तूष्णीम् । अभिव्यक्तसत्त्वलक्षणां प्रकटगर्भचिह्नाम् । क्षेत्रं पत्नी यस्यासौ क्षेत्री तं क्षेत्रिणम् । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । एतादृशमात्मानं शङ्कमानः ।

---



१ ०दव्यवस्यन्, ०ति व्यव०. २ निशाम्य. ३ न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्; शक्नो विहा०; नैव श०. ४ ०हारी ( स्वगतम्, जनान्तिकम् ). ५ क्षेत्रिय.

शकुन्तला—( अपवार्य । ) आर्यस्य परिणय एव संदेहः । कुत इदानीं मे दूराधिरोहिण्याशा । ( क )

शार्ङ्गरवः—मा तावत् ।

कृताभिमर्शामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

शारद्वतः—शार्ङ्गरव विरम त्वमिदानीम् । शकुन्तले वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह । दीयतामस्मै प्रत्ययप्रतिवचनम् ।

---

( क ) अज्जस्स परिणए एव्व संदेहो । कुदो दाणिं मे दूराहिरोहिणी आसा ।

---

यत इयं गर्भिणी मया चेदधुना प्रतिगृह्येत तत्तदाहं क्षेत्री स्यां न तु बीजी । अत एतज्जातापत्यं नौरसमपि तु क्षेत्रजम् । तच्चौरसाद्धीनमिति शङ्का । अथ चान्येनोढायाः परिग्रहे मत्क्षेत्रत्वमेव स्यान्न तु धर्मपत्नीत्वमिति शङ्का । 'क्षेत्रियम्' इति पाठे परदारासक्तम् । 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च' इति विश्वः । कथमिमां प्रतिपत्स्येऽङ्गीकरिष्यामि । अपवार्येति । 'रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम्' इति । दूराधिरोहिण्याशा । दूरमत्यर्थं तत्र गत्वा महिषीपदं प्राप्स्यामीत्याद्यधिरोढुं शीलं यस्याः सा । मा तावदिति श्लोकेन संबध्यते । कृतेति । त्वयेत्येवमपराधं कृत्वाप्यधुना स्मरणक्लेशाभाववतेत्यर्थान्तरसंक्रामितम् । कृतोऽभिमर्शो बलाद्धर्षणं यस्याः सा । अनेन सातिशयापराधकृत्त्वं ध्वन्यते । ईदृशीं सुतामनुमन्यमानोऽनुमोदमान इत्यनेनैवं सापराधेऽपि त्वयि मुनित्वेन तादृक्कृपा युज्यत इति ध्वनितम् । अत एव मुनिः । तावत्साकल्येन । नामेति क्रोधे । मा विमान्यो न विमाननीयः । अपि तु विमाननीय एव । सुताभिमर्शलक्षणोऽपराधः सोढो विमाननालक्षणस्तु न सोढव्य इति दण्ड उक्तः । तेन सूक्ष्मालंकार उक्तः । केचित्तु निषेधत्वेन विधेयमेव मन्यन्ते तन्न समीचीनम् । निषेधनियोगस्य मध्यस्थेन राजकीयेन वा वक्तुमुचितत्वान्न मुनिपक्षीयैः । अत एव निबर्हणान्ते 'राजा—अतः खलु मम नातिक्रुद्धो मुनिः' इति । अथ च तस्योचिता विमाननेत्याह—मुष्टमिति । स कः । येन त्वं दस्युश्चौर इव पात्रीकृतोऽसि । कीदृशेनैव येन । मुष्टं चोरितं स्वमर्थं प्रतिग्राहयता तदधीनं कारयता पुरुषेणेवेति । विशेषणेनैव विशेष्यलाभः । यथा चौर्येणापहृतं द्रव्यं पुनस्तस्मा एवार्पितमगृह्णन्विमाननां जनयति तथेत्यर्थः । क्वचित् 'मुष्टं स्वमर्थम्' इति पाठः । तदा चोरितमित्यर्थः । एवमपराधिनः कन्यादानेन संतोषार्थं प्रवृत्तस्य स संतोषो नास्ति । परं विमानना । लक्षणार्थोत्पादाद्विषमालंकारः । तृतीयोपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः ॥ २० ॥ प्रत्ययजनकं विश्वासजनकं प्रतिवचनमु-



१ ०वमर्शा. २ ०रूप. ३ दूरारो०. ४ आशलिद्या.

**शकुन्तला**—( अपवार्य । ) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन । आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । ( प्रकाशम् । ) आर्यपुत्र—( इत्यर्धोक्ते । ) संशयित इदानीं परिणये नैष समुदाचारः । पौरव युक्तं नाम ते तथा पुराश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य सांप्रतमीदृशैरक्षरैः प्रत्याख्यातुम् । (क)

**राजा**—( कर्णौ पिधाय । ) शान्तं पापम् ।

व्यपदेशमाविलयितुं किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

**शकुन्तला**—भवतु । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि । ( ख )

---

( क ) इमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण । अत्ता दाणिं मे सोअणीओ त्ति ववसिदं एदं । अज्जउत्त—संसइदे दाणिं परिणए न एसो समुदाआरो । पोरव जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअं इमं जणं समअपुव्वं पतारिअ संपदं ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं ।

( ख ) होदु । जइ परमत्थतो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं ता अहिण्णाणेण इमिणा तुह आसङ्कं अवणइस्सं ।

---

तरम् । मध्यमपदलोपी समासः । पौरवेति राजवंश उत्पन्नो राजेत्यत्यन्तवचनचातुरीं धत्ते । न युक्तम् । नामेति कुत्सायाम् । तथा पुराश्रमपदे स्वभावोत्तानहृदयमित्यनेनात्मनोऽतिमुग्धत्वं तेन च परवञ्चनानभिज्ञत्वं परात्मजनविवेकशून्यत्वं ध्वनितम् । इमं जनं समयपूर्वं संकेतपूर्वम् । गान्धर्वेण विवाहेनेत्यर्थः । अथ च समयपूर्वं शपथं कृतवानसीत्यर्थः । अथ च समयपूर्वं कालनियमपूर्वं त्रिचतुरदिनमध्ये पञ्चदिनमध्ये वा पुरुषः प्रेष्यत इति प्रकारेण । अत एव वक्ष्यति—'एकैकमत्र दिवसे दिवसे मदीयं नामाक्षरं गणय' इत्यादि । अथ च समयपूर्वं ज्ञानपूर्वं प्रतार्य । ईदृशैरतिक्रूरैर्हृदयविदारकैरक्षरैः प्रत्याख्यातुं न युक्तमिति संबन्धः । इदं प्रत्याख्यानं वाङ्मात्रेण न तत्त्वतोऽग्रे परिग्रहस्य वक्ष्यमाणत्वादिति रतेरनुसंधायिका कवेरक्षरैरित्युक्तिः । **व्यपदेशमिति** । व्यपदिश्यतेऽनेनेति व्यपदेशः कुलम् । आविलयितुं मलिनीकर्तुमिमं जनं तल्लक्षणं पातयितुं च पतितं कर्तुं किमीहसे चेष्टसे । त्वं त्विहागमनेनैव पतितासीति णिचा ध्वन्यते । कूलंकषा तटसंघर्षिणी सिन्धुर्नदी प्रसन्नमम्भो यथा कलुषयति तटतरुं च पातयति तद्वदित्युपमा । अत्र भिन्ने अपि गुणक्रिये अतिशयोक्त्याऽ-

---

१ आत्मगतं; स्वगतं सखेदं, निःश्वस्य. २ आलपन्ती. ३ समीहसे मां च नाम. ४ मोचं. ५ मोअ (मोच०), सोह (शोध०). ६ पोरव ण जुत्तं. ७ वत्तुं प०. ८ केण त्रि-

राजा—उदारः कल्पः ।

शकुन्तला—( मुद्रास्थानं परामृश्य । ) हा धिक् हा धिक् । अङ्गुलीयकशून्या मेऽङ्गुलिः । ( इति सविषादं गौतमीमवेक्षते । ) ( क )

गौतमी—नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् । ( ख )

राजा—( सस्मितम् । ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

शकुन्तला—अत्र तावद्विधिना प्रदर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि । ( ग )

राजा—श्रोतव्यमिदानीं संवृत्तम् ।

शकुन्तला—नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् । ( घ )

राजा—शृणुमस्तावत् ।

शकुन्तला—तत्क्षणे स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वयायं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छ-

---

( क ) हद्धी हद्धी । अङ्गुलीअअसुण्णा मे अङ्गुली ।

( ख ) णूणं दे सक्कावदारब्भन्तरे सचीतित्थसलिलं वन्दमाणाए पब्भट्ठं अङ्गुलीअअं ।

( ग ) एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कहिस्सं ।

( घ ) णं एक्कस्सिं दिअहे णोमालिआमण्डवे णलिणीपत्तभाअणगअं उअअं तुह हत्थे सण्णिहिदं आसि ।

---

भेदेनाध्यवसिते । अत्रोपमेये प्रकृतमन्तर्वर्तिविशेषणमस्त्वेवेत्युपमाने कूलंकषेति विशेषणम् । पूर्वार्धे गुणक्रिययोः समुच्चयः । 'दोषप्रसंख्यापनयादपवादस्तु स स्मृतः' इति ॥२१॥ भवतु पूर्यताम् । अनेन दोषप्रख्यापनेनेत्यर्थः । यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तम् । ता तर्ह्यभिज्ञानेन मुद्रिकारूपचिह्नेन तवाशङ्कामपनेष्यामि । उदारः कल्पो मुख्यो न्यायः महाविश्वासो वा । प्रत्युत्पन्नमति स्त्रैणं स्त्रीसमूह इति यज्जगति प्रसिद्धं तदिदं परिदृश्यमानम् । 'तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता' इति प्रत्युत्पन्नलक्षणं सुधाकरे । श्रोतव्यमिदानीं संवृत्तमिति भवतीभिः कल्पनासहस्रं विधायालीकवचनोपन्यासः कर्तव्यः । स चेन्मया न श्रोतव्यो ममाश्रवणापराध एव स्यादिति प्रयोजना-

---



१ प्रथमः,० रः खलु अयमर्थः. २ मीमुखमीक्षते. ३ णाए हत्थादो. ४ वेदसलता-

न्दित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्यासमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि । सर्वः सगन्धेषु विश्वसिति । द्वावप्यत्रारण्यकाविति । ( क )

राजा—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृष्यन्ते विषयिणः ।

गौतमी—महाभाग नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य । ( ख )

राजा—तापसवृद्धे ।

स्त्रीणामशिक्षितपटुत्वममानुषीषु
संदृश्यते किमुत याः प्रतिबोधवत्यः ।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

शकुन्तला—( सरोषम् । ) अनार्य आत्मनो हृदयानुमानेन प्रेक्षसे । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते । ( ग )

---

( क ) तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिओ । तुए अअं दाव पढमं पिअउ त्ति अणुअम्पिणा उवच्छन्दिदो उअएण । ण उण दे अपरिचआदो हत्थब्भासं उवगदो । पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ । तदा तुमं इत्थं पहसिदो सि । सव्वो सगन्धेसु विस्ससिदि । दुवेवि एत्थ आरण्णआ त्ति ।

( ख ) महाभाअ ण अरुहसि एव्वं मन्तिदुं । तवोवणसंवड्ढिदो अणभिण्णो अअं जणो कइदवस्स ।

( ग ) अणज्ज अत्तणो हिअआणुमाणेण पेक्खसि । को दाणिं अण्णो धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि ।

---

भावेऽपि श्रवणमात्रे विधिरिति संवृत्तपदद्योत्यम् । अनुकम्पिनोपच्छन्दितोऽभ्यर्थित उदकेन । प्रणयः प्रीतिः । सगन्धेषु सयूथ्येषु विश्वसिति । द्वावप्यत्रारण्यकाविति । आत्मकार्यस्य निर्वर्तिनीनां संपादिकानां ललनानाम् । विशेषणादेव विशेष्यप्रतिपत्तेः । अत्रानृतमयवाङ्मधुभिरित्येकदेशविवर्ति रूपकम् । तेन तासां लतात्वं विषयिणां कामुकानां भ्रमरत्वं रूप्यत इति ज्ञेयम् । स्त्रीणामिति । स्त्रीणां मध्येऽमानुषीषु मानुषव्यतिरिक्तासु । वञ्चकवागादिव्यवहाररहितास्वपीति भावः । तास्वप्यशिक्षितपटुत्वमनुपदिष्टकौशलम् । अर्थाद्वञ्चने सम्यग्दृश्यते । तेनैतिह्यभ्रान्तिज्ञाननिरासः । याः प्रतिबोधवत्यो वागादिव्यवहारकुशलास्ताः किमु वक्तव्याः । तासामनुपदिष्टवञ्चकत्वकौशलं किमु वक्तव्यमित्यर्थः । खलु ह्यर्थे । परभृता इति साभिप्रायम् । कोकिलाः । ‘ वनप्रियः परभृतः ’

---

१ ०र्तिनीनां योषितां; ०वर्तिनीनां, ... ०र्तिनीनामनृतमधुराभिरनृतवाग्भिः; ०राभिर्गीर्भिः. २ ०षीणां. ३ किल. ४ तुम्हे ( युवां ).

राजा—( आत्मगतम् । ) संदिग्धबुद्धिं मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते । तथा ह्यनया

मय्येवं विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

( प्रकाशम् । ) भद्रे[2] प्रथितं दुष्यन्तस्य चरितम् । तथापीदं न लक्षये[3] ।

शकुन्तला—सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयविषस्य हस्ताभ्यासमुपगता । ( इति पटान्तेन मुखमावृत्य रोदिति । ) ( क )

शार्ङ्गरवः—इत्थमात्मकृतं [ प[4]रिहितं ] चापलं दहति ।

( क ) सुट्ठु दाव अत्त सच्छन्दचारिणी किदाह्मि जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअविसस्स हत्थब्भासं उवगदा ।

इत्यमरः । अन्तरिक्षगमनादाकाशगमनादुड्डयनात्प्राक्स्वं स्वीयमपत्यजातमर्भकसमूहम् । 'जातं जात्योघजन्मसु' इति विश्वः । अन्यैर्द्विजैः पक्षिभिः प्रसिद्धया काकैः परितः सर्वप्रकारेण पोषयन्ति । अत्र शकुन्तलालक्षणे विशेषे प्रस्तुते स्त्रीसामान्यस्योक्तत्वादप्रस्तुतप्रशंसा । किमुतेत्यनेन व्यतिरेकः । अर्थान्तरन्यासोऽपि । तयाःत्य इति मनामन्यैरिति छेकवृत्त्यनुप्रासाः । अनेन हेत्ववधारणानामकं संध्यन्तराङ्गमुपक्षिप्तम् । अत्र परभृतादिदृष्टान्तेन स्त्रीत्वेन हेतुना मृषाभाषणलक्षणस्यार्थस्य निश्चयाद्धेत्ववधारणम् ॥ २२ ॥ अनार्य आत्मनो हृदयानुमानेन पश्यसि जानासि । यथा तव हृदयं वञ्चनापरं तथान्यहृदयान्यपि जानासीत्यर्थः । कोऽन्य इति संबन्धः । **मयीति** । अतिरुषाधिकक्रोधयाधिकक्रोधेन वात एवातिलोहिताक्ष्यात्यारक्तनयनया । विगतं स्मरणं यस्य तदत एव दारुणं यच्चित्तं तेन वृत्तिर्वर्तनं यस्य तस्मिन्नत एव रह एकान्ते वृत्तं संपन्नं प्रणयं स्नेहमप्रतिपद्यमानेऽजानाने । मय्येवेत्येवकारेण कोपस्य तात्त्विकत्वं ध्वनितम् । कुटिलयोर्वक्रयोर्भ्रुवोर्भेदाद्भङ्गात्स्मरस्य शरासनं कंदर्पस्य धनुर्भग्नमिवेत्युत्प्रेक्षा । अनया च तथास्याः कोपो यथोपायशतैरप्यनुनीयमाना कोपं न मुञ्चेदिति तात्त्विकः कोप इति वस्तु ध्वन्यते । अनेन च स्थायिन्या रतेरनुसंधानम् । काव्यलिङ्गम् । रुणरुणेति वृत्तो वृत्तमिति प्रमेति स्मरस्येति छेकानुप्रासो वृत्त्यनुप्रासश्च । वृत्तमनयोर्वसन्ततिलकम् ॥ २३ ॥ 'शकुन्तला—सरोषम्' इत्यादिनैतदन्तेन संफेटं नामाङ्गमुपाक्षिप्तम् । तल्लक्षणम्—'रोषप्रथितवाक्यं तु संफेटः परिकीर्तितः ।' इति । इदं वञ्चकत्वम् । प्रत्ययो विश्वासस्तेन मुखमधोर्हृदयस्थितविषस्य ।

१ वमस० २ आर्ये ३ लक्ष्यते; प्रजास्वपीदं न दृश्यते; दुष्यन्तस्य चरितं प्रजासु प्रथि० तथापीदं न दृश्यते । ४ अप्रतिहतं ५ हिअअट्ठिद ( हृदयस्थित ) ।

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥

राजा—अयि भोः किमत्रभवतीप्रत्ययादेवास्मान्संयुतदोषाक्षरैः[1] क्षिणुथ।

शार्ङ्गरवः—( सासूयम्। ) श्रुतं भवद्भिरधरोत्तरम्।

आ जन्मनः शाठ्यमशिक्षितो यस्तस्याप्रमाणं वचनं जनस्य।
परातिसंधानमधीयते[2] यैर्विद्येति ते सन्तु किलाप्तवाचः॥ २५॥

राजा—[3]भोः सत्यवादिन् अभ्युपगतं तावदस्माभिरेवम्। किं पुनरिमामतिसंधाय लभ्यते।

शार्ङ्गरवः—विनिपातः।

राजा—विनिपातः पौरवैः प्रार्थ्यत इति न श्रद्धेयमेतत्।

---

तत्र सत्त्वं द्योतयितुं स्थितपदम्। विषस्येत्यनेन कापट्यनिगरणादतिशयोक्तिः। हस्ताभ्यासं करसमीपमुपगता। विशेषणद्वयेनातिखलस्वभावत्वं ध्वनितम्। आत्मकृतं चापलं कदाचिद्दैवानुकूल्येन सम्यक्तया परिणमति। परिहृतं केनचिद्दुद्धं सद्दहति। अत इति। अतः कारणात्संगतं मैत्र्यं परीक्ष्य कर्तव्यम्। रह एकान्ते संगतं विशेषात्परीक्ष्य कर्तव्यमित्यनुषज्यते। अत्र शकुन्तलादुष्यन्तयोः संगतस्य कर्तव्ये विशेषे प्रस्तुते यत्सामान्यसंगतमात्रस्याप्रस्तुतस्य वचनं साप्रस्तुतप्रशंसा। अज्ञातहृदयेषु व्यवहारादिनाज्ञातचित्तेषु सौहृदं मैत्री वैरीभवति। अयं वैधर्म्येणार्थान्तरन्यासः॥ २४॥ अत्रभवतीप्रत्ययात्पूज्याविश्वासात्। भवद्धियेयं पूज्यैव। तद्वचनविश्वासादित्यर्थः। एवकारेण युक्त्यन्तरनिरासः। अस्मानिति पुरुवंशोत्पन्नान्सर्वधर्मेनिष्ठानिन्द्रादिभिरप्युपचारेण गृहीतानित्यादिधर्मशतं व्यनक्ति। सम्यक् न त्वीषत्। युतः संपृक्तः न तु स्पृष्टः दोषो येषु तान्यक्षराणि येषु वचनेषु तैर्वचनैरिति विशेष्यमुन्नेयम्। क्षिणुथ हिंस्थ। अधरं हीनं च तदुत्तरं चाधरोत्तरम्। स्वदोषाज्ञानादिति भावः। आ जन्मन इति। यो जन आ जन्मनो जन्मन आरभ्य शाठ्यं धौर्त्यमशिक्षितः स्वेनान्येन वेत्यर्थः। तस्य जनस्य वचनमप्रमाणम्। यैर्जनैः परातिसंधानं परवञ्चनं विद्येति विद्यारूपत्वेन यथा विद्या सद्गुरोः सत्संप्रदायात्सुदिने मङ्गलपूर्वकमनध्यायनिवृत्तिपूर्वकं नियतात्मभिस्तद्वदियमप्यधीयते। न तु शिक्ष्यते। त आप्तवाचः सत्यवचनाः। किलेति संभावनायाम्। 'किलशब्दस्तु वार्तायां संभाव्यानुनयार्थयोः' इति विश्वः। अत्र शकुन्तलावचनं सत्यं दुष्यन्तवचनमसत्यमिति विशेषे प्रस्तुते यत्सामान्यवचनं सा वैधर्म्येणाप्रस्तुतप्रशंसा। अथ वाप्रमाणमपि

---

१ क्षरेण, ० स्मानतिबलेन क्षिपन्ति भवन्तः; ०रधिक्षिपथ; ०स्मान्संभृतदोषैरधिक्षिपन्ति भवन्तः; ०संयुतदोषा०; ०रोषाक्षरेणाधिक्षिपथ; ०रोषाक्षरेण वचसाधि०. २ पराभि०. ३ हन्त भोः स०, ०दस्माभिः। एवंविधा वयम्। किं पुनरिमाम०.

**शारद्वतः**—शार्ङ्गरव किमुत्तरेण। अनुष्ठितो गुरोः संदेशः। प्रतिनिवर्तामहे वयम्। (राजानं प्रति।)

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

गौतमि गच्छाग्रतः।

(इति प्रस्थिताः।)

**शकुन्तला**—कथमनेन कितवेन विप्रलब्धास्मि। यूयमपि मां परित्यजथ। (इत्यनुप्रतिष्ठते।) (क)

**गौतमी**—(स्थित्वा।) वत्स शार्ङ्गरव अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु। (ख)

**शार्ङ्गरवः**—(सरोषं निवृत्य।) किं पुरोभागे स्वातन्त्र्यमवलम्बसे।

(शकुन्तला भीता वेपते।)

**शार्ङ्गरवः**—शकुन्तले।

यदि यथा वदति क्षितिपस्तथा
त्वमसि किं पितुरुत्कुलया त्वया।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

---

(क) कहं इमिणा किदवेण विप्पलद्ध ह्मि। तुह्मे वि मं परिच्चअह।
(ख) वच्छ सङ्गरव अणुगच्छदि ईअं क्खु णो करुणपरिदेविणी सउन्दला। पच्चादेसपरुसे भत्तुणि किं वा मे पुत्तिआ करेदु।

---

तु न त आप्तवाचोऽपि तु नेति काकौ साधर्म्येणैवाप्रस्तुतप्रशंसा। रूपकानुप्रासौ च ॥ २५ ॥ 'शकुन्तला--सुट्ठु दाव' इत्याद्येतदन्तेन द्रवो नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु–'गुरुव्यतिक्रमो यस्तु विज्ञेयोऽथ द्रवस्तु सः' इति। सत्यवादिन्निति सोल्लुण्ठम्। अतिसंधाय वञ्चयित्वा। 'राजा—भोः सत्यवादिन्' इत्यादिना 'न श्रद्धेयम्' इत्यन्तेनाक्षमा नाम नाट्यालंकारो निबद्धः। तादिति। तदित्युपसंहारे। अर्थान्तरन्यासमाह–उपेति। सर्वतोमुखी त्यागे ताडने स्वीकारे दान इत्यादि। तेन त्वं यथेच्छं कुर्विति भावः ॥ २६ ॥ कितवेन धूर्तेन तत्कथमिति संबन्धः। प्रत्यादेशपरुषे निराकृतिनिष्ठुरे। पुरोभागे दोषदर्शिनि। यदीति। क्षितिपो राजा यथा वदति तथा त्वमस्युत्कुलयातिक्रान्तकुलमर्यादया त्वया पितुः किं प्रयोजनमित्यर्थः। तुः पूर्वतो व्यतिरेके। अथात्मनः शुचि पवित्रं व्रतं

---

१ उत्तरोत्तरेण. २ निदेशः; गुरुसं०; ०नियोगः. ३ पत्नी. ४ उपयन्तुः. ५ विश्वतो०. ६ स्थित्वा परिवृत्यावलोक्य च. ७ पितृशोकदया. ८ च, तु. ९ (सदैन्यम्।) हुं। इमिणा दाव केदवेण वि० । तुह्मे वि मं परिचइदुं इच्छध। ता का गई। (इति गौतमीमनुगच्छति।). १० इअं णो. ११ करिस्सदि; किं करेदु तवस्सिणी.

तिष्ठ । साधयामो वयम् ।

राजा—भोस्तपस्विन् किमत्रभवतीं विप्रलभसे ।

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

शार्ङ्गरवः—यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ।

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

पुरोहितः—( विचार्य । ) यदि तावदेवं क्रियताम् ।

राजा—अनुशास्तु मां भवान् ।

पुरोहितः—अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु । कुत इदमुच्यत इति चेत् । त्वं साधुभिरादिष्टपूर्वः प्रथममेव चक्रवर्तिनं पुत्रं

नियमं वेत्सि यदि तदा पतिकुले भर्तृगृहे तव दास्यमपि क्षमं समीचीनम् । हेत्वनुप्रासौ । द्रुतविलम्बितं वृत्तम् ॥ २७ ॥ **कुमुदानीति** । नापराणीत्युभयत्रैवकारार्थः । हि निश्चितं वशिनां जितेन्द्रियाणां वृत्तिर्वर्तनं परस्यान्यस्य परिग्रह आयातं वस्तु कलत्रं च तस्याश्लेषः संपर्कस्तस्मात्सम्यगतिशयेन पराङ्मुखी निवर्तनशीला । परकलत्रपराङ्मुखत्वं नापि तु तत्संपर्कपराङ्मुखत्वम् । तदपि तन्मात्रं नापि तु सम्यगिति । तेन सम्शब्दः पराङ्मुखविशेषणतया योज्यः । 'परिग्रहः परिजने पत्न्याम्' इति विश्वः । अत्र दुष्यन्तशकुन्तलानङ्गीकारे विशेषे प्रस्तुते सामान्यवचनेनाप्रस्तुतप्रशंसा । पूर्वार्धवैधर्म्येण मालादृष्टान्तालंकारः । अत्र पूर्वमुपमेयं पश्चात्तत्प्रतिबिम्बत्वेनोपमानं निबद्धव्यमिति नायं नियमः । 'दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम्' इति लक्षणात् । अङ्काङ्केति न्येवन्येवेति परपरीति छेकवृत्त्यनुप्रासौ ॥ २८ ॥ एतदभिप्रायेणैव शार्ङ्गरववचनम् 'यदा तु—' इति । अन्यस्यालौकिकस्य शापस्य सङ्गः सक्तिः संबन्धस्तस्मात् । अथ चान्यस्या वसुमत्या देव्याः प्रसङ्गात् । अथ वान्यस्या लोकोत्तराया राजलक्ष्म्याः सङ्गादित्यादि योज्यम् । विस्मृतं विद्यते यस्य स विस्मृतः । अर्शआदित्वादच् । विस्मरणयुक्त इत्यर्थः । **मूढ इति** । आहो पक्षान्तरे । 'पांसुलः पुंश्चले' इति विश्वः ॥ २९ ॥ 'राजा—भोः सत्यवादिन्' इत्यादिनैतदन्तेन विरोधनामकमङ्गमुपक्षिप्तम् । 'उत्तरोत्तरवाक्यं तु विरोध इति संज्ञितः' इति । अनुशास्तु शिक्षयतु । शुद्धा-

१ राजन् अथ पूर्ववृत्तं व्यासङ्गाद्विस्मृतं [illegible] तदा कथमधर्मभीरोर्दारपरित्यागः । २ ०वशं. ३ राजा—कुत इदम् । पु०—त्वं. ४ ०रुद्दिष्टः; साधुनैमित्तिकैरपादि०.

जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

राजा—यथा गुरुभ्यो रोचते ।

पुरोहितः—वत्से अनुगच्छ माम् ।

शकुन्तला—भगवति वसुधे देहि मे विवरम् । ( इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा तपस्विभिश्च । ) ( क )

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )

( नेपथ्ये । )

आश्चर्यमाश्चर्यम् ।

राजा—( आकर्ण्य । ) किं नु खलु स्यात् ।

( प्रविश्य । )

पुरोहितः—( सविस्मयम् । ) देव अद्भुतं खलु संवृत्तम् ।

राजा—किमिव ।

पुरोहितः—देव परावृत्तेषु कण्वशिष्येषु

सा निन्दन्ती स्वानि भाग्यानि बाला बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

राजा—किं च ।

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमाराडुत्क्षिप्यैनां ज्योतिरेकं जगाम ॥३०॥

( सर्वे विस्मयं रूपयन्ति । )

राजा—भगवन् प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते । विश्राम्यतु भवान् ।

---

( क ) भअवदि वसुहे देहि मे विवरं ।

---

न्तमन्तःपुरम् । भगवति वसुधे देहि मे विवरं छिद्रम् । प्रवेशायेत्यार्थम् । शापव्यवहितस्मृतिरिति कविवचनमनुवादेऽन्तर्भूतम् । सा निन्दन्तीति । यतो बालात एव बाहूत्क्षेपं यथा स्यात्तथा क्रन्दितुं प्रवृत्तेति बालास्वभावोक्तिः । इदं ज्ञातमेवेति राजा पृच्छति—' किं च ' इति । स्त्रीति । स्त्रीसंस्थानं ललनाकारम् । तेजोरूपत्वेन स्पष्टमदृश्यमानमत एव संस्थानशब्दप्रयोगः । देवेन नीतापि स्त्र्याकारेणैवेति परपुरुषासंस्पर्शित्वं ध्वनितम् । एकं केवलं ज्योतिरेनामाराद्दूरादुत्क्षिप्याप्सरस्तीर्थे शचीतीर्थे जगामेति संबन्धः । क्रिययोः समुच्चितश्चात्समुच्च-

---

१ ०गमनमुप०. २ रुदती निष्क्रान्ता.... ३ ०लमेव. ४ रोदितुम्. ५ ०दाक्षिण्ये०. ६ तिरोऽभूत्.

पुरोहितः—( विलोक्य । ) विजयस्व । ( इति निष्क्रान्तः । )

राजा—वेत्रवति पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

प्रतीहारी—इत इतो देवः । ( इति प्रस्थिता । ) ( क )

राजा—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३१ ॥

( इति निष्क्रान्ताः सर्वे । )

पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च । )

रक्षिणौ—( पुरुषं ताडयित्वा । ) अरे कुम्भीरक कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् । (ख)

---

( क ) इदो इदो देवो ।

( ख ) अले कुम्भीलआ कहेहि कहिं तुए एशे मणिबन्धणुक्किण्णणामहेए लाअकीअए अङ्गुलीअए शमाशादिए ।

---

यालंकारः । हेत्वनुप्रासौ च । शालिनीवृत्तम् ॥ ३० ॥ 'नेपथ्ये' इत्याद्येतदन्तेन शक्तिर्नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'विरोधप्रशमो यस्तु सा शक्तिरिति कीर्तिता' इति । अनेनाद्भुतरसोऽपि ध्वनितः । पर्याकुलत्वं शापावसानस्य नैकट्यात् । इत इतो देवः । कामामिति । काममतिशयेन प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रहं पत्नीं न स्मरामि । तु पुनः । बलवदधिकं दूयमानं पीड्यमानं मे मम हृदयं प्रत्याययति विश्वासमुत्पादयतीवेत्युत्प्रेक्षा । अनया स्थायिन्या रतेरनुसंधानं ध्वनितम् । पीडायाः कारणस्य स्मरणस्याभावेऽपि पीडेति विभावनालंकारः । अनुमानालंकारोऽपि । तत्प्रत्यायनस्य साध्यत्वं हृदयपीडाहेतुत्वादनुमानम् । तदुक्तम्—'यत्साध्यसाधनयोर्वचः' इति तल्लक्षणात् । अनेन प्रसङ्गनामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'प्रसङ्गश्चैव विज्ञेयो गुरूणां कीर्तनं हि यत् ।' इति । अत्र मुनेस्तनयेति गुरुकीर्तनम् ॥ ३१ ॥ इति श्रीमदभिज्ञानशकुन्तलटीकायामर्थद्योतनिकायां पञ्चमोऽङ्कः समाप्तः ॥

नागरिको नगररक्षाधिकृतः । श्यालो राजशालः । कोष्ठपाल इति यावत् । कुम्भीरक चौर । 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः' इति नाममाला । एतन्मणिबन्धनोत्कीर्णनामधेयं मणेर्बन्धनं सुवर्णे प्रत्युप्तीकरणं तत्रोत्कीर्णं व्य-

---

१ वसुमति. २ शयनीयगृहमा०. ३ मे, मे चेतः. ४ अस्मात्प्राक्—प्रवेशकः; अथ पञ्चमषष्ठांकमध्ये प्रवे०; अथ पञ्चमाङ्कांशोऽङ्कावतारः. ५ बद्धपु०. ६ महामणिभाशुले उक्किण्णणामक्खले ला० ( महामणिमा[illegible]रकीर्णनामाक्षर रा० ); णामहेआङ्किदं ( नामधेयाङ्कितं ).

पुरुषः—( भीतिनाटितकेन । ) प्रसीदन्तु भावमिश्राः । नाहमीदृशकर्मकारी । ( क )

प्रथमः—किं शोभनो ब्राह्मण इति कृत्वा ( कलयित्वा ) राज्ञा प्रतिग्रहो दत्तः । ( ख )

पुरुषः—शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः । ( ग )

द्वितीयः—पाटच्चर किमस्माभिर्जातिः पृष्टा । ( घ )

श्यालः—सूचक कथयतु सर्वमनुक्रमेण । मैनमन्तरा प्रतिबध्नीतम् । ( ङ )

उभौ—यदावुत्त आज्ञापयति । कथय । ( च )

पुरुषः—अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि । ( छ )

श्यालः—( विहस्य । ) विशुद्ध इदानीमाजीवः । ( ज )

पुरुषः—भर्तः मा एवं भण । ( झ )

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥

---

( क ) पशीदन्ते भावमिश्शे । ण हगे ईदिशकम्मकाली ।
( ख ) किं[1] शोहणे बह्मणोत्ति कलिअ लञ्जा पडिग्गहे दिण्णे ।
( ग ) सुणध दाणिं । अहके शक्कावदालब्भन्तलवाशी धीवले ।
( घ ) पाडच्चला किं अह्मेहिं जादी पुच्छिदा । ( ङ ) सूअअ कहेदु शव्वं अनुक्कमेण । मा णं अन्तरा पडिबन्धह । ( च ) जं आवुत्ते आणवेदि । कहेहि ।
( छ ) अहके जालुग्गोलादीहिं[2] मच्छबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।
( ज ) विसुद्धो दाणिं आजीवो । ( झ ) भट्टा मा एव्वं भण ।

शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदु[3] एव्व शोत्तिए ॥

---

कीकृतं नामधेयं यत्र । 'मागधी राक्षसादेः स्यात्' इति भरतोक्तेः । आदिग्रहणेन शकारधीवरादीनामपि ग्रहणादत्रैषां मागध्युक्तिः । प्रसीदन्तु भावमिश्राः । 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेर्भावेति संबोधनम् । असौ नीचः सुतरां ग्रामीण इति तेन मिश्रपदं गौरवार्थमुक्तम् । कलयित्वा ज्ञात्वा । राज्ञा प्रतिग्रहो दत्त इति सोपहासम् । शक्रावतार इति तीर्थनाम । तत्संबन्धाद् ग्रामनामापि । एतदेव पूर्वाङ्के शचीतीर्थशब्देनोक्तम् । पाटच्चर चौर । 'दस्युः पाटच्चरः स्तेनः' इति हैमः । सूचकेति रक्षिणोरेकतरस्य नाम । 'भगिनीपतिरावुत्तः' इत्यमरः । जालमानायः । शहजे इति । धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते



१ किं णु क्खु. २ जालग्गाहा०; जालोद्दारा०. ३ मिदुए वि.

**पुरोहितः**—( विलोक्य । ) विजयस्व । ( इति निष्क्रान्तः । )

**राजा**—वेत्रवति पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

**प्रतीहारी**—इत इतो देवः । ( इति प्रस्थिता । ) ( क )

**राजा**—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् ॥ ३१ ॥

( इति निष्क्रान्ताः सर्वे । )

पञ्चमोऽङ्कः ।

---

## षष्ठोऽङ्कः

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धं पुरुषमादाय रक्षिणौ च । )

**रक्षिणौ**—( पुरुषं ताडयित्वा । ) अरे कुम्भीरक कथय कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् । (ख)

---

( क ) इदो इदो देवो ।

( ख ) अले कुम्भीलआ कहेहि कहिं तुए एशे मणिबन्धणुक्किण्णामहेए लाअकीअए अङ्गुलीअए शमाशादिए ।

---

यालंकारः । हेत्वनुप्रासौ च । शालिनीवृत्तम् ॥ ३० ॥ 'नेपथ्ये' इत्याद्येतदन्तेन शक्तिर्नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'विरोधप्रशमो यस्तु सा शक्तिरिति कीर्तिता' इति । अनेनाद्भुतरसोऽपि ध्वनितः । पर्याकुलत्वं शापावसानस्य नैकट्यात् । इत इतो देवः । **काममिति** । काममतिशयेन प्रत्यादिष्टां निराकृतां मुनेस्तनयां परिग्रहं पत्नीं न स्मरामि । तु पुनः । बलवदधिकं दूयमानं पीड्यमानं मे मम हृदयं प्रत्याययति विश्वासमुत्पादयतीवेत्युत्प्रेक्षा । अनया स्थायिन्या रतेरनुसंधानं ध्वनितम् । पीडायाः कारणस्य स्मरणस्याभावेऽपि पीडेति विभावनालंकारः । अनुमानालंकारोऽपि । तत्प्रत्यायनस्य साध्यत्वं हृदयपीडाहेतुत्वादनुमानम् । तदुक्तम्—'यत्साध्यसाधनयोर्वचः' इति तल्लक्षणात् । अनेन प्रसङ्गनामाङ्गमुपक्षिप्तम् । तल्लक्षणम्—'प्रसङ्गश्चैव विज्ञेयो गुरूणां कीर्तनं हि यत् ।' इति । अत्र मुनेस्तनयेति गुरुकीर्तनम् ॥ ३१ ॥ इति **श्रीमदभिज्ञानशकुन्तलटीकायामर्थद्योतनिकायां पञ्चमोऽङ्कः समाप्तः** ॥

नागरिको नगररक्षाधिकृतः । श्यालो राजशालः । कोष्ठपाल इति यावत् । कुम्भीरक चौर । 'कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः' इति नाममाला । एतन्मणिबन्धनोत्कीर्णनामधेयं मणेर्बन्धनं सुवर्णे प्रत्युप्तीकरणं तत्रोत्कीर्णं व्य-

---

१ वसुमति. २ शयनीयगृहमा०. ३ मे, मे चेतः. ४ अस्मात्प्राक्—प्रवेशकः; अथ पञ्चमषष्ठांकमध्ये प्रवे०; अथ पञ्चमाङ्कांशोऽङ्कावतारः. ५ बद्धपु०. ६ महामणिभाशुले उक्किण्णनामाक्खले ला० ( महामणि[illegible]अक्खरे ला० ); णामहेअङ्किद ( नामधेयांकित ).

पुरुषः—( भीतिनाटितकेन । ) प्रसीदन्तु भावमिश्राः । नाहमीदृशकर्मकारी । ( क )

प्रथमः—किं शोभनो ब्राह्मण इति कृत्वा ( कलयित्वा ) राज्ञा प्रतिग्रहो दत्तः । ( ख )

पुरुषः—शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः । ( ग )

द्वितीयः—पाटच्चर किमस्माभिर्जातिः पृष्टा । ( घ )

श्यालः—सूचक कथयतु सर्वमनुक्रमेण । मैनमन्तरा प्रतिबध्नीतम् । ( ङ )

उभौ—यदावुत्त आज्ञापयति । कथय । ( च )

पुरुषः—अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि । ( छ )

श्यालः—( विहस्य । ) विशुद्ध इदानीमाजीवः । ( ज )

पुरुषः—भर्तः मा एवं भण । ( झ )

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ १ ॥

---

( क ) पशीदन्ते भावमिश्शे । ण हगे ईदिशकम्मकाली ।
( ख ) किं शोहणे बह्मणोत्ति कलिअ रज्ञा पडिग्गहे दिण्णे ।
( ग ) सुणध दाणिं । अहके शक्कावदालब्भन्तलवाशी धीवले ।
( घ ) पाडच्चला किं अह्मेहिं जादी पुच्छिदा । ( ङ ) सूअअ कहेदु शव्वं अनुक्कमेण । मा णं अन्तरा पडिबन्धह । ( च ) जं आवुत्ते आणवेदि । कहेहि ।
( छ ) अहके जालुग्गालादीहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।
( ज ) विसुद्धो दाणिं आजीवो । ( झ ) भट्टा मा एव्वं भण ।

शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदुं एव्व शोत्तिए ॥

---

कीकृतं नामधेयं यत्र । 'मागधी राक्षसादेः स्यात्' इति भरतोक्तेः । आदिग्रहणेन शकारधीवरादीनामपि ग्रहणादत्रैषां मागध्युक्तिः । प्रसीदन्तु भावमिश्राः । 'मान्यो भावस्तु वक्तव्यः' इत्युक्तेर्भावेति संबोधनम् । असौ नीचः सुतरां ग्रामीण इति तेन मिश्रपदं गौरवार्थमुक्तम् । कलयित्वा ज्ञात्वा । राज्ञा प्रतिग्रहो दत्त इति सोपहासम् । शक्रावतार इति तीर्थनाम । तत्संबन्धाद् ग्रामनामापि । एतदेव पूर्वाङ्के शचीतीर्थशब्देनोक्तम् । पाटच्चर चौर । 'दस्युः पाटच्चरः स्तेनः' इति हैमः । सूचकेति रक्षिणोरेकतरस्य नाम । 'भगिनीपतिरावुत्तः' इत्यमरः । जालमानायः । शहजे इति । धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते



१ किं णु क्खु. २ जालग्गाहा०; जालोद्दारा०. ३ मिदुए वि.

**श्यालः**—ततस्ततः । ( क )

**पुरुषः**—एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितः । यावत्तस्योदराभ्यन्तरे प्रेक्षे तावदिदं रत्नभासुरमङ्गुलीयकं दृष्टम् । पश्चादहमस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा । अयमस्यागमवृत्तान्तः । ( ख )

**श्यालः**—जानुक विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः । ( ग )

**रक्षिणौ**—तथा । गच्छ अरे ग्रन्थिभेदक । ( घ )

( सर्वे परिक्रामन्ति । )

**श्यालः**—सूचक इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्त्रे निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि । ( ङ )

---

( क ) तदो तदो । ( ख ) एक्कश्शिं दिअशे खण्डशो लोहिअमच्छे मए कप्पिदे । जाव तश्श उदलब्भन्तले पेक्खामि दाव एदं लदणभाशुलं अङ्गुलीअअं देक्खिअम् । पच्छा अहके शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । मालेह वा मुञ्चेह वा । अअं शे आअमवुत्तन्ते । ( ग ) [3]जाणुअ विस्सगन्धी गोधादी मच्छबन्धो एव्व णिस्संसअं । अङ्गुलीअअदंसणं शे विमरिसिदव्वं । राअउलं एव्व गच्छामो । ( घ ) तह । गच्छ अले गण्ठिभेदअ । ( ङ ) सूअअ इमं गोपुरदुआरे अप्पमत्ता पडिबालह जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि ।

---

सामान्यमुक्तमित्यप्रस्तुतप्रशंसा । अनुकम्पा कृपा तया मृदुरेव श्रोत्रियो दारुणं पशुमारणं कर्म ( न ) विवर्जयति यथा तथा मम सहजं विवर्जनीयं न भवतीति दृष्टान्तः । व्व इवार्थे । तदोपमा । यथा श्रोत्रियश्छान्दसो वैदिकं दारुणं पशुमारणकर्मापि यज्ञादौ न विवर्जयति । क्रतुषु हिंसाया विहितत्वात्सहजम् । विनिन्दितमिति यौद्धादिभिः ॥ १ ॥ रोहित इति मत्स्यसंज्ञा । मया कल्पितः खण्डितः । 'कल्पं कर्तनं क्लृप्तौ' इति विश्वः । आगमः प्राप्तिस्तद्वृत्तान्तः । विक्रयायेति 'चतुर्थ्याः षष्ठी' इति षष्ठ्या नियमेन प्राप्तौ 'तादर्थ्ये' इति विकल्पेन चतुर्थ्येकवचनम् । जानुकेति द्वितीयपुरुषनाम । 'विस्रं स्यादामगन्धि यत्' इत्यमरः । गोधादी गोधाशनो मत्स्यबन्धो धीवर एव निःसंशयम् ।

---

१ कुट्टेध. २ ( अङ्गुलीयकमाघ्राय । ) मच्छोदरसंट्ठिदं त्ति णत्थि संदेहो । तथा अअं से विस्सगन्धो । आगमो दाणिं एदस्स विमरिसिदव्वो । ता एध—[ मत्स्योदरसंस्थितमिति नास्ति संदेहः । तथायमस्य विस्रगन्धः । आगम इदानीमस्य विमर्शयितव्यः । तदत्र—] इति पा०. ३ ०च्छेदअ; गण्डभेदअ. ४ इह पुरदु०...बालह मं.

उभौ—प्रविशत्वावुत्तः स्वामिप्रसादाय । ( क )

( इति निष्क्रान्तः श्यालः । )

प्रथमः—जानुक चिरायते खल्वावुत्तः । ( ख )

द्वितीयः—नन्ववसरोपसर्पणीया राजानः । ( ग )

प्रथमः—जानुक स्फुरतो मम हस्तावस्य वधस्य सुमनसः पिनद्धुम् । ( इति पुरुषं निर्दिशति । ) ( घ )

पुरुषः—नार्हति भावोऽकारणमारणो भवितुम् । ( ङ )

द्वितीयः—( विलोक्य । ) एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि शुनो मुखं वा द्रक्ष्यसि । (च)

( प्रविश्य । )

श्यालः—सूचक मुच्यतामेष जालोपजीवी । उपपन्नः खल्वस्याङ्गुलीयस्यागमः । ( छ )

सूचकः—यथावुत्तो भणति । एष यमसदनं प्रविश्य प्रतिनिवृत्तः । ( इति पुरुषं परिमुक्तबन्धनं करोति । ) ( ज )

---

( क ) पविशदु आवुत्ते शामिपशादश्श । ( ख ) जाणुअ चिलाअदि क्खु आवुत्ते । ( ग ) णं अवशलोवशप्पणीआ लाआणो ।

( घ ) जाणुअ फुल्लन्ति मे हत्था इमश्श वहश्श शुमणा पिणद्धुं ।

( ङ ) ण अलुहदि भावे अकालणमालणे भविदुं ।

( च ) एशे अह्माणं शामी पत्तहत्थे लाअशाशणं पडिच्छिअ इदोमुहे देक्खीअदि । गिद्धवली भविश्शाशि शुणो मुहं वा देक्खिश्शाशि ।

( छ ) सूअअ मुंचेदु एसो जालोअजीवी । उववण्णो क्खु से अङ्गुलीअअस्स आअमो । ( ज ) जह आवुत्ते भणादि । एशे जमशदणं पविशिअ पडिणिवुत्ते ।

---

अरे गण्डभेदक चौर । सूचक इमं गोपुरद्वारे । 'पुरद्वारं तु गोपुरम्' इत्यमरः । तत्र । भर्तुरिति चतुर्थ्यर्थे षष्ठी । तेन भर्त्रे निवेद्य ततः शासनमाज्ञां प्रतीक्ष्य गृहीत्वा निष्क्रामामि । पिनद्धुं परिधापयितुम् । 'आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्' इत्यमरः । 'वज्झस्स' (वध्यस्य) इत्यसांप्रदायिकः पाठः । नार्हति भावोऽकारणमारणं भावयितुं प्रापयितुम् । 'ततः प्रविशति' इत्याद्येतदन्तेन विद्रवनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'वधबन्धादिकोपस्तु विद्रवः परिकीर्तितः' इति । एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः ।

---

१ वज्झश्श ( वध्यस्य ). २ मालणं भाविदुं ( मारणं भावयितुम् ). ३ ईशले पत्ते ( प्राप्तः ) गेण्हिअ लाअशासणं । ( पुरुषं प्रति । ) शउलाणं ( श्र-स्व-कुलानां ) मुहं पेक्खशि अथवा गिध्धशिलआणां ( गृध्रशृगालानां ) बल्ली भविश्शशि । ४ शिघ्घं एदं-( इत्यर्धोक्ते । )-पुरुषः-हा हदम्हि । ( इति विषादं नाटयति । ) श्यालः-मुञ्चेध जालोवजीविणं ।

**पुरुषः**—( श्यालं प्रणम्य । ) भर्तः अथ कीदृशो म आजीवः । ( क )

**श्यालः**—एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः । ( इति पुरुषाय स्वं प्रयच्छति । ) ( ख )

**पुरुषः**—( सप्रणामं प्रतिगृह्य । ) भर्तः अनुगृहीतोऽस्मि । ( ग )

**सूचकः**—एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः । ( घ )

**जानुकः**—आवुत्त पारितोषिकं कथयति तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यमिति । ( ङ )

**श्यालः**—न तस्मिन्महार्हे रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्त्राऽभिमतो जनः स्मृतः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्यश्रुनयन आसीत् । ( च )

**सूचकः**—सेवितं नामावुत्तेन । ( छ )

**जानुकः**—ननु भण । अस्य कृते मात्स्यिकभर्तुरिति । ( इति पुरुषमसूयया पश्यति । ) ( ज )

**पुरुषः**—भट्टारक इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु । ( झ )

**जानुकः**—एतावद्युज्यते । ( ञ )

---

( क ) भट्टा अह कीलिशे मे आजीवे ।
( ख ) एसो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पसादो वि दाविदो ।
( ग ) भट्टा अणुग्गहिद ह्मि ।
( घ ) एशे णाम अणुग्गहे जे शूलादो अवदालिअ हत्थिक्कन्धे पडिट्ठाविदे ।
( ङ ) आवुत्त पारिदोसिअं कहेदि तेणं अङ्गुलीअएण भट्टिणो शम्मदेण होदव्वं त्ति ।
( च ) ण तस्सिं महारुहं रदणं भट्टिणो बहुमदं त्ति तक्केमि । तस्स दंसणेण भट्टिणा अभिमदो जणो सुमरिदो । मुहुत्तअं पकिदिगम्भीरो वि पज्जंस्सुणअणो आसि ।
( छ ) शेविदं णाम आवुत्तेण ।
( ज ) णं भणाहि । इमस्श कए मच्छिअँभत्तुणो त्ति ।
( झ ) भट्टालक इदो अद्धं तुह्माणं शुमणोमुल्लं होदु ।
( ञ ) एत्तके जुज्जई ।

---

मोचनमपिशब्दः समुच्चिनोति । स्वं धनम् । 'स्वोऽस्त्रियां धने' इत्यमरः । सेवितं नामावुत्तेन । सेवा दर्शितेत्यर्थः । ननु भण । अस्य कृते मात्स्यिकभर्तुः । मत्स्येन जीवन्तीति मात्स्यिकास्तेषां भर्तुरस्य पुरुषस्य कृते सेवितम् । धनप्राप्तिस्त्वेतन्निष्ठेति सेवनमेतदर्थमेव जातमिति भावः । अत एवासूयया पश्य-

---

१अर्थ. २ तुह केलके मे जीविदे (त्वदीयं मे जीवितं). ३ सिअं एव. ४ महालिहलदणेण ( महार्हरत्नेन ) तेण...बहुमदेण. ५ ०णेण कोवि अहि... जणो भट्टिणा, ०णेण भट्टिणा सुमराविदो ( स्मारितः ). ६ पज्जुस्सुअमणो ( पर्युत्सुकमनाः ); पज्जुस्सुणअणो ( ०नयनः ). ७ मच्छशत्तुणो.

श्यालः—धीवर महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते। तच्छौण्डिकापणमेव गच्छामः। ( इति निष्क्रान्ताः सर्वे। ) ( क )

## प्रवेशकः

( ततः प्रविशत्याकाशयानेन सानुमती नामाप्सराः। )

सानुमती—निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककाल इति सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि। मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तया च दुहितृनिमित्तमादिष्टपूर्वास्मि। ( समन्तादवलोक्य। ) किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते। अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम्। किं तु सख्या आदरो मया मानयितव्यः। भवतु। अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये। ( इति नाट्येनावतीर्य स्थिता। ) ( ख )

---

( क ) धीवर महत्तरो तुमं पिअवअस्साओ दाणिं मे संवुत्तो। कादम्बरीसक्खिअं अह्माणं पढमसोहिदं इच्छीअदि। ता सोण्डिआपणं एव्व गच्छामो।

( ख ) णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसण्णिज्झं जाव साहुजणस्स अभिसेअकालो त्ति संपदं इमस्स राएसिणो उदन्तं पच्चक्खीकरिस्सं। मेणआसंबन्धेण सरीरभूदा मे सउन्दला। ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वह्मि। किं णु क्खु उदुच्छवे वि णिरुच्छवारम्भं विअ राअउलं दीसइ। अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं। किं दु सहीए आदरो मए माणइदव्वो। होदु। इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा परसवत्तिणी भविअ उवलहिस्सं।

---

तीति। सुमनोमूल्यं पुष्पमूल्यमिति विनयोक्तिः। कादम्बरी मदिरा तत्सखित्वमेकत्र पानेनास्माकं प्रथमशोभितमद्य यावत्पूर्वं न जातमिष्यते। प्रवेशक इति। प्रवेशकलक्षणं तु सुधाकरे—'यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः' इति। 'अङ्कयोरुभयोर्मध्ये' इत्यनेन प्रथमाङ्कनिषेधः। 'पर्यायोऽवसरे क्रमे' इत्यमरः। तत्र गङ्गायामप्सरस्तीर्थं नाम तीर्थमस्ति। तत्र यावत्सज्जनस्नानकालमेकैकस्मिन्दिवस एकैकयाप्सरसा संनिहितया स्थातव्यमिति नियमः। तस्मिन्दिने सानुमत्या तत्कार्यं कृतमित्यर्थः। सांप्रतमस्य राजर्षेरुदन्तं वार्ताम्। अस्ति मे

---

१ तथा इति. २ मिश्रकेशी. ३ सहीअं (सखित्वं).

( ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी । अपरा च पृष्ठतस्तस्याः । )

**प्रथमा—**

आताम्रहरितपाण्डुर जीवितसर्वं वसन्तमासस्य ( योः ) ।
दृष्टोऽसि चूतकोरक ऋतुमङ्गल त्वां प्रसादयामि ॥ २ ॥ ( क )

**द्वितीया—**परभृतिके किमेकाकिनी मन्त्रयसे । ( ख )

**प्रथमा—**मधुकरिके चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति । ( ग )

**द्वितीया—**( सहर्षं त्वरयोपगम्य । ) कथमुपस्थितो मधुमासः । ( घ )

**प्रथमा—**मधुकरिके तवेदानीं काल एष मदविभ्रमगीतानाम् । ( ङ )

**द्वितीया—**सखि अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि । ( च )

---

( क ) आतम्महरिअपण्डुर जीविदसव्वं वसन्तमासस्स ।
दिट्ठो सि चूदकोरअ उदुमङ्गल[1] तुमं पसाएमि[2] ॥

( ख ) परहुदिए किं एआइणी मन्तेसि ।

( ग ) महुअरिए चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि ।

( घ ) कहं उवट्ठिदो महुमासो ।

( ङ ) महुअरिए तव दाणिं कालो एसो मदविब्भमगीदाणं ।

( च ) सहि अवलम्ब मं जाव अग्गपादट्ठिआ[3] भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि ।

---

विभवः सामर्थ्यं प्रणिधानेन सर्वं परिज्ञातुम् । अनयोरेवोद्यानपालिकयोस्तिरस्कारिणीप्रतिच्छन्नान्तर्धानविद्यया परिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये । ' णिव्वट्टिदम् ' इत्याद्येतदन्तेन सानुमत्यात्मश्लाघायाः कृतत्वाद्विचलनं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं दशरूपके—' विकत्थनं विचलनम् ' इति । ततः प्रविशतीति । उद्यानपालिकयोरिति सूचितत्त्वात्तयोः प्रवेशः । आतम्रेति । अत्र प्रथमसंबोधनेन स्वभावोक्तिः । सत्यमिति शपथे । ' सत्यं च शपथे तथ्ये ' इति विश्वः । वसन्तमासयोर्जीवितेति रूपकम् । सत्स्वप्यन्येषु प्रसूनेषु तदङ्कुरेण ऋतोरुच्छ्वासितत्वमिव गम्यत इति रूपणम् । क्वचित् ' जीवितसर्वम् ' इति पाठः । तदा प्राकृते पूर्वनिपातानियमात्सर्वजीवितेति । अन्यत्र ' वसन्तमासस्स जीअसव्वस्स ' इति पाठः । जीवितरूपं सर्वस्वमित्यर्थः । सत्स्वपीतरेषु पुष्पेषु त्वमेवोत्कृष्टतममिति भावः । ऋतुमङ्गलेपि रूपकम् । प्रथमपरिदृश्यमानत्वादतौ मङ्गलं सर्वत्र मङ्गलेषु प्रथमं परिजृम्भमाणत्वादतौ मङ्गलं सर्वेष्वृतुषु वसन्तस्योत्कृष्टत्वं त्वयैव कृतमिति । ऋतुश्चासौ मङ्गलश्चेति कार्यकारणयोरभेदोपचारात् ।

---

१ मङ्गलं. २ पेक्खामि; प्रथमा–कधं उवत्थिदो महुमासो । आतम्महरिअवेंटक ( वृंतक ) उस्ससिअं विअ वसन्तमासस्स । दिठ्ठ चूअंकुरअं छणमंगलं निअच्छामि ॥ ०हरिअवेंटक जो ऊससिओसि सुरहिमासस्स । दिठ्ठो अ चूअच्छारअ ( शारक ) छणमंगलं व पेक्खामि ॥ ३ पाद[illegible]ठिदा भविअ कामदेवस्स अच्चणं; अग्गपदे परिठ्ठिदाचूदप्पशवं गेण्हिअ संपादेमि काम० अच्चणं; परिट्ठिदा भविअ इमिणा पसवेण संपादेमि काम० वाअणं.

प्रथमा—यदि ममापि खल्वर्धमर्चनफलस्य । ( क )

द्वितीया—अकथितेऽप्येतत्संपद्यते यत एकमेव नौ जीवितं द्विधास्थितं शरीरम् । ( सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति । ) अये अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति । ( इति कपोतहस्तकं कृत्वा । )

त्वमसि मया चूताङ्कुर दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥ ३ ॥ ( ख )

( इति चूताङ्कुरं क्षिपति । )

( प्रविश्यापटीक्षेपेण कुपितः । )

कञ्चुकी—मा तावदनात्मज्ञे । देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ।

उभे—( भीते । ) प्रसीदत्वार्यः । अगृहीतार्थे आवाम् । ( ग )

---

( क ) जइ मम वि क्खु अद्धं अच्चणफलस्स ।

( ख ) अकहिदे वि एदं संपज्जइ जदो एक्कं एव्व णो जीविदं दुधाट्ठिदं सरीरं । अऐ अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभङ्गसुरभी होदि ।

तुं सिं मए चूदङ्कुर दिण्णो कामस्स गहिदधणुअस्स ।
पहिअजणजुवइलक्खो पञ्चब्भहिओ सरो होहि ॥

( ग ) पसीददु अज्जो । अग्गहीदत्थाओ वअं ।

---

परभृतिकायाः कोकिलायाश्चूताङ्कुरप्रसादनं युक्तमेव । उन्मत्ता परभृतिका भवति । छलात्कोकिलेत्यर्थः । मधुकरिके छलाद्भ्रमरीत्यर्थः । अये अप्रतिबुद्धः कोमलोऽपि चूतप्रसव एत्थ अत्र वसन्तारम्भे । ' एसो ' इति पाठ एषः । बन्धने वृन्ते भङ्गस्तत्र सुरभिर्भवति । कपोतहस्तकमिति । तल्लक्षणं संगीतरत्नाकरे–' कपोतोसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ । प्रणामे गुरुसंभाषे ' इति । तुं सीति । हे चूताङ्कुर आम्रप्रसव त्वं मया गृहीतं धनुर्येन तस्मै कामाय दत्तोसि । गृहीतधनुष इत्यनेन सर्वदा सज्जत्वं ध्वनितम् । पथिकजनानां प्रोषितानां युवतयः लक्ष्यं शरव्यं यस्य तथाविधः सन् पञ्चसु शरेषु अभ्यधिकः श्रेष्ठो भव । पञ्चाभ्यधिकत्वे शरस्यासम्बन्धे संबन्धलक्षणातिशयोक्तिः ॥ ३ ॥ अपटीक्षेपेणेति तिरस्करिणीतिरस्कारेणेत्यर्थः । ' नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च ' इत्युक्तेरत्र कञ्चुकिनः सूचनाभावादपटीक्षेपेण प्रवेशः । तत्र कुपितत्वं हेतुः । कञ्चुकिलक्षणं पूर्वमुक्तम् । मा तावदिति भिन्नं वाक्यं निषेधे । अनात्मज्ञे स्वभावानभिज्ञे । देवेन प्रकरणाद्राज्ञा दुष्यन्तेन ।

---

१ पटाक्षेपेण; कुपितः, क्रुद्धः, कञ्चुकी, क० प्रविश्य सक्रोधं. २ ०षिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गम्० ३ अम्हे. ४ अप्पद्ग० वो बन्ध०. ५ अरिहसि मे चूदङ्कुर इ० ( अर्हसि मे चूताङ्कुर दत्तः कामस्य गृहीतधनुषः । ).

**कञ्चुकी**—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च । तथा हि ।

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरबकं तत्कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥ ४ ॥

**सानुमती**[3]—नास्ति संदेहः । महाप्रभावो राजर्षिः । (क)

**प्रथमा**—आर्य कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भट्टिनी-

(क) णत्थि संदेहो । महाप्पहाओ राएसी ।

किमारभसे किमर्थमारम्भं करोषि । त्वयाप्यधुनारम्भ एव क्रियते सोऽपि किमर्थमिति भावः । इदमेव कोपकारणम् । प्रसीदत्वार्यः । अगृहीतार्थे अगृहीतनिषेधवस्तुस्वरूपे आवाम् । वासन्तिकैरेतत्कालोद्गतपुष्पैस्तरुभिरपि । चेतनैस्तु प्रमाणीकृतमेव । अचेतनैरपीत्यपिशब्दार्थः । शासनमाज्ञा । प्रमाणीकृतमिति गम्योत्प्रेक्षा । वक्ष्यमाणानां वस्तुस्वाभाव्यादेव तथात्वात् । अथ वासंबन्धे संबन्धरूपातिशयोक्तिश्च । राजाज्ञायास्तत्त्वतोऽसंबन्धात् । तदेव दर्शयति—तथा हीति । **चूतानामिति** । चूतानां कलिका मञ्जरीति । जात्यभिप्रायेणैकवचनम् । कलिकाशब्दो बाधितमुख्यार्थोऽभिनवोद्गतसाधर्म्यान्मञ्जरीं लक्षयते । अविकासितत्वं च फलं ज्ञेयम् । चिरनिर्गता शिशिरान्तप्रोद्भिन्नापि स्वं स्वीयम् । आत्मीयमिति यावत् । अत्यावश्यकत्वं ध्वनितम् । रजः परागं न बध्नाति । न दृष्टं करोतीत्यर्थः । यथा काचन बालाप्रौढतया रजोदर्शनं न यातीति समासोक्तिरपि । संनद्धमपि वृन्ताद्बहिर्निर्गतमपि । संनद्धशब्दो बाधितमुख्यार्थः सन्यः संनद्धः स युद्धाय बहिर्निर्गच्छतीति बहिर्निर्गमनसाम्यात्कुरबकं लक्षयन्नतिशोभावत्त्वं ध्वनति । यत्कुरबकं शोणकुरण्टकं पुष्पमिति जातावेकवचनम् । तत्कोरकावस्थया कलिकावस्थया स्थितम् । अत्र कोरकत्वं न जहातीति कार्याभावे वक्तव्ये तद्विरुद्धत्वेनोक्तिः । गतेऽपि शिशिरे वसन्तारम्भसमये पुंस्कोकिलानां रुतं शब्दितं कण्ठेषु स्खलितम् । तथास्फुटः कोकिलस्वनो जात इत्यर्थः । अत्र च चिरनिर्गतादेः कारणस्योक्तेः कार्यस्य परागादेर्निषेधान्मालाविशेषोक्तिः । स्वभावोक्तिश्च । चकितो भीतः स्मरोऽपि तूणार्धकृष्टं तूणीरादर्धनिष्कासितं शरं संहरतीति शङ्के इत्युत्प्रेक्षायाम् । अत्र भीतत्वं शरसंहरणमुभयमुत्प्रेक्ष्यम् । कामस्य प्रसूनशरत्वाद्वसन्तपुष्पाणामसकलोत्पन्नत्वादियमुत्प्रेक्षा । अस्यां च पूर्ववाक्यत्रयं हेतुत्वेन योज्यम् । काव्यलिङ्गम् । स्थितस्येति कुरकोरेति रेपुंरोपीति छेकश्रुतिवृत्त्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥ नास्ति संदेहः । महाप्रभावो राजर्षिः । [illegible] यथाश्रुतग्राहितया नायकप्रभावा-



१ अलिभिः पत्रि०. २ यदपरिस्थ०. ३ उभे.

पादमूलं प्रेषितयोः । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतयाश्रुतपूर्व आवाभ्यामेष वृत्तान्तः । ( क )

कञ्चुकी—भवतु । न पुनरेवं प्रवर्तितव्यम् ।

उभे—आर्य कौतूहलं नौ । यद्यनेन जनेन श्रोतव्यं कथयत्वार्यः किंनिमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः । ( ख )

सानुमती—उत्सवप्रियाः खलु मनुष्याः । गुरुणा कारणेन भवितव्यम् । ( ग )

कञ्चुकी—बहुलीभूतमेतत्किं न कथ्यते । किमत्रभवत्योः कर्णपथं नागातं शकुन्तलाप्रत्यादेशकौलीनम् ।

उभे—श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् । ( घ )

कञ्चुकी—तेन ह्यल्पं कथयितव्यम् । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मे तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः । तथा हि ।

रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते
शय्योप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ ५ ॥

---

( क ) अज्ज कदि दिअहाइं अह्माणं मित्तावसुणा रट्ठिएण भट्टिणीपाअमूलं पसिदाणं । इत्थं अ णो पमदवणस्स पालणकम्म समप्पिदं । ता आअन्तुअदाए अस्सुदपुव्वो अह्मेहिं एसो वुत्तन्तो । ( ख ) अज्ज कोदूहलं णो । जइ इमिणा जणेण सोदव्वं कहेदु अज्जो किंणिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो । ( ग ) उस्सवप्पिआ क्खु मणुस्सा । गुरुणा कारणेण होदव्वं । ( घ ) सुदं रट्ठिअसुहादो जाव अङ्गुलीअअदंसणं ।

---

तिशयवर्णनीयतया चैवमुत्तरम् । भवतु । यज्जातं तज्जातमित्यर्थः । यद्यनेन जनेन श्रोतव्यम् । अस्य श्रवणयोग्यमित्यर्थः । प्रत्यादेशो निराकृतिस्तल्लक्षणं यत्कौलीनं लोकवादः । 'स्यात्कौलीनं लोकवादः' । श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् । यदैव स्मृतं देवेन तदाप्रभृतीत्यन्वयः । रम्यमिति । रम्यं स्रक्चन्दनचन्द्रपादादिकं द्वेष्टि । चक्षुषापि न पश्यतीत्यर्थः । प्रकृतिभिरमात्यैः पुरा पूर्वं यथा तथा न सेव्यते । पूर्वं तु कार्यापेक्षितयाधुना त्ववसरापेक्षमित्यर्थः । पूर्वं प्रत्यहमधुना न तथा । यथापूर्वं प्रत्यहमित्युभयविधेयम् । शय्यानाम् । न शय्यायाः । प्रान्तेषु । न मध्ये । यानि विवर्तनानि



१ शय्योपान्त. २ व्रीडावनम्रः. ३ भट्टिणो, भट्टिणो पादमूलादो. ४ पत्थ ( अत्र ).

सानुमती—प्रियं मे । ( क )

कञ्चुकी—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः ।

उभे—युज्यते । ( ख )

( नेपथ्ये । )

एतु एतु भवान् । ( ग )

कञ्चुकी—( कर्णं दत्वा । ) अये । इत एवाभिवर्तते देवः । स्वकर्मा[1]नुष्ठीयताम् ।

उभे—तथा । ( इति निष्क्रान्ते । ) ( घ )

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च । )

कञ्चुकी—( राजानमवलोक्य । ) अहो सर्वास्ववस्थासु रमणीय[2]त्वमाकृतिविशेषाणाम् । एवमुत्सुकोऽपि प्रियदर्शनो देवः । तथा हि ।

प्रत्यादिष्टविशेषमण्डनविधिर्वाम[3]प्रकोष्ठार्पितं
विभ्रत्काञ्चनमेकमेव वलयं श्वासो[4]परक्ताधरः ।

( क ) पिअं मे । ( ख ) जुज्जइ । ( ग ) एदु एदु भवं । ( घ ) तह ।

परिलुण्ठनानि । न स्वापः । तैरुन्निद्रो गतनिद्र एवेति पूर्वत्र हेतुत्वेन योज्यम् । क्षपा निशाः । न तु निशाम् । विगमयतीति विरुद्धं यथा स्यात्तथातिवाहयति [ ताः ] न तु गच्छन्ति । यदन्तःपुरेभ्यो देवीभ्यो दाक्षिण्येनात्यन्तानुरोधेन । एतेनात्यावश्यकत्वं ध्वनितम् । उचितामित्यवश्यापेक्षणीयत्वं ध्वनितम् । ईदृशीं वाचं ददाति । तदा गोत्रेषु नामसु । स्खलितोऽन्यनामग्रहे कृतान्यनामग्रहः संश्चिरमतिकालं व्रीडया लज्जया विलक्षो विस्मयान्वितो भवति । 'विलक्षो विस्मयान्वितः' इत्यमरः । अहं राजा दुष्यन्तो ममाप्येतादृश्यवस्थेति स्वमनस्येव सविस्मय इत्यर्थः । अत्र पश्चात्तापादिके कारणे वक्तव्ये यत्तत्कार्यस्य रम्यत्वेपादेर्वचनं तत्पर्यायोक्तम् । काव्यलिङ्गं च । पुराप्रेति प्रपेति क्षक्षीति छेकवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् ॥ ५ ॥ अस्माद्वैमनस्यादिति व्यधिकरणे पञ्चम्यौ । अस्मात्कारणात्प्रभवतः समर्थात् । अधिकादित्यर्थः । वैमनस्यादुद्वेगात् । 'प्रविश्यापटीक्षेपेण' इत्याद्येतदन्तेन द्युतिनामकमङ्गमुपाक्षिप्तम् । तल्लक्षणं दशरूपके—'तर्जनोद्वेजने द्युतिः' इति । अहो आश्चर्ये । सर्वावस्थास्वित्यर्थान्तरन्यास एवमित्यादेरुत्तरवाक्यार्थस्य समर्थकः । सर्वासु यदा यादृश्यो या उपस्थितास्तासु तादृूप्येण रमणीयत्वमित्यर्थः । उत्सुक उत्कण्ठितः । विरह्यपीत्यर्थः । एतदवस्थाया अन्यत्र प्रियदर्शनत्वमपिशब्दद्योत्यम् । अत एवार्थान्तरन्यासे विशेषपदम् । तथा हीत्युभयपरामर्शः । प्रत्यादिष्टेति । प्रत्यादिष्टो निराकृतो विशेषमण्डनस्य प्रक्षे[illegible]कुसुमादिविधिधारणविधियेन सः । वामस्य प्रकोष्ठस्य ।

१ तद्गच्छतं स्वकर्मानुष्ठानाय. २ रामणीयकं. ३ प्रकोष्ठे श्लथं. ४ श्वासाप.

चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६ ॥

सानुमती—( राजानं दृष्ट्वा । ) स्थाने खलु प्रत्यादेशविमानितापि अस्य कृते शकुन्तला क्लाम्यति । ( क )

राजा—( ध्यानमन्दं परिक्रम्य । )

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

---

( क ) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला किलम्मेदि ।

---

मणिबन्धोर्ध्वभागस्यार्पितं दत्तम् । काञ्चनमेवेत्यन्यासंस्पृष्टत्वेनातिशीतलत्वं ध्वनितम् । वलयमित्येकवचनं द्वितीयस्य वोढुमसामर्थ्यात् । बिभ्रत् । अभ्यस्तत्वान्नुम् । वामग्रहणेन विरुद्धार्थमवश्यंधारणमुक्तम् । अत एकं मुख्यं सर्वदा सत्त्वात् । 'एके मुख्यान्यकेवलाः' इत्यमरः । अत एव वामप्रकोष्ठस्यार्पितं दत्तमिति भूतत्वं च । एतन्मात्रेणैव विशेषो ध्वनितः । श्वासेन विरहित्वादुष्णेनोपरक्तः पाटलो न तु रूक्षोऽधरो यस्य सः । तादृशस्यैव शोभायुक्तत्वं च ध्वनितम् । चिन्तया शकुन्तलागतया यज्जागरणं तेन प्रकर्षेण तान्ते म्लाने नयने यस्य सः जागरणेन रक्तप्रान्तत्वं तेन च शोभातिशययोगित्वं च ध्वनितम् । एषु स्वभावोक्तिः परिकरालंकारश्च । आत्मनस्तेजोगुणाद्दीप्तिलक्षणात्क्षीणोऽपि कृशोऽपि क्षीणत्वेन नालक्ष्यते । क इव । संस्कारार्थमुद्घृष्टो महामणिरिव । महाशब्देन जात्यत्वं सर्वविशिष्टत्वं महत्त्वं च ध्वनितम् । यथा शाणोल्लिखितो महामणिः स्वतेजसा क्षीणो न दृश्यते तद्वदित्युपमा । अनेन महामण्युपमानेनास्य क्षीणत्वेऽप्यन्तःसारता सर्वदा दृश्यमानत्वेऽविनष्टता ध्वनिता । प्रप्रेति पृष्ठेति न्तान्तेति क्षीक्ष्येति छेकवृत्तिश्रुत्यनुप्रासाः । अथ चिन्तेति संकल्पः । जागरेति निद्राच्छेदः । क्षीण इति तनुता । प्रत्यादिष्टेति विषयनिवृत्तिः । इति कामावस्था अपि सूचिताः । वृत्तमनन्तरोक्तम् । अथ चानेन नायकसात्त्विकगुणेषु माधुर्यनामा गुण उपक्षिप्तः । तल्लक्षणं तु—'तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता । सर्वावस्थासु सर्वत्र' इति ॥ ६ ॥ स्थाने युक्तं खलु प्रत्यादेशेन निराकरणेन विमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति । तत्स्थान इत्यन्वयः । प्रथममिति । सारङ्गो हरिणस्तस्येक्षणे इवेक्षणे यस्यास्तस्याः । अनेन तद्दर्शनमात्रेण प्रतिबोध उचित इति ध्वन्यते । तत्रापि प्रिययात्यन्तहृद्यया शकुन्तलया प्रतिबोध्यमानमपि । स्वत एव प्रतिबोध उचितः स नास्त्यपि तु प्रयत्नेनापि प्रतिबोध्यमानं सुप्तं मोहमुपागतम् । अत एव हतहृदयं दुष्टहृदयं संप्रत्यधुनानुशयदुःखाय पश्चात्तापदुःखाय विबुद्धम् । अत्र पूर्वार्धे विशेषोक्तिः । अत्र प्रतिबोधाभावस्तद्विरुद्धेन सुप्तपदेनोक्तः । उत्तरार्धे विभावनोपमानुप्रासौ च ॥ ७ ॥

---

सानुमती—प्रियं मे। ( क )

कञ्चुकी—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

उभे—युज्यते। ( ख )

( नेपथ्ये। )

एतु एतु भवान्। ( ग )

कञ्चुकी—( कर्णं दत्वा। ) अये। इत एवाभिवर्तते देवः। स्वकर्मानुष्ठीयताम्।

उभे—तथा। ( इति निष्क्रान्ते। ) ( घ )

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च। )

कञ्चुकी—( राजानमवलोक्य। ) अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्। एवमुत्सुकोऽपि प्रियदर्शनो देवः। तथा हि।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं
बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः।

( क ) पिअं मे। ( ख ) जुज्जइ। ( ग ) एदु एदु भवं। ( घ ) तह।

परिलुण्ठनानि। न स्वापः। तैरुन्निद्रो गतनिद्र एवेति पूर्वत्र हेतुत्वेन योज्यम्। क्षपा निशाः। न तु निशाम्। विगमयतीति विरुद्धं यथा स्यात्तथातिवाहयति। [ताः] न तु गच्छन्ति। यदन्तःपुरेभ्यो देवीभ्यो दाक्षिण्येनात्यन्तानुरोधेन। एतेनात्यावश्यकत्वं ध्वनितम्। उचितामित्यवश्यापेक्षणीयत्वं ध्वनितम्। ईदृशीं वाचं ददाति। तदा गोत्रेषु नामसु। स्खलितोऽन्यनामग्रहे कृतान्यनामग्रहः संश्चिरमतिकालं व्रीडया लज्जया विलक्षो विस्मयान्वितो भवति। 'विलक्षो विस्मयान्वितः' इत्यमरः। अहं राजा दुष्यन्तो ममाप्येतादृश्यवस्थेति स्वमनस्येव सविस्मय इत्यर्थः। अत्र पश्चात्तापादिके कारणे वक्तव्ये यत्तत्कार्यस्य रम्यक्षेपादेर्वचनं तत्पर्यायोक्तम्। काव्यलिङ्गं च। पुराप्रेति प्रपेति क्षक्षीति छेकवृत्त्यनुप्रासौ। वृत्तमनन्तरोक्तम्॥ ५॥ अस्माद्वैमनस्यादिति ० ग्धिकरणे पञ्चम्यौ। अस्मात्कारणात्प्रभवतः समर्थात्। अधिकादित्यर्थः। वैमनस्यादुद्वेगात्। 'प्रविश्यापटीक्षेपेण' इत्याद्येतदन्तेन द्युतिनामकमङ्गमुपाक्षिप्तम्। तल्लक्षणं दशरूपके—'तर्जनोद्वेजने द्युतिः' इति। अहो आश्चर्ये। सर्वावस्थास्वित्यर्थान्तरन्यास एवमित्यादेरुत्तरवाक्यार्थस्य समर्थकः। सर्वासु यदा यादृश्यो या उपस्थितास्तासु तादृप्येण रमणीयत्वमित्यर्थः। उत्सुक उत्कण्ठितः। विरहपीत्यर्थः। एतदवस्थाया अन्यत्र प्रियदर्शनत्वमपिशब्दद्योत्यम्। अत एवार्थान्तरन्यासे विशेषपदम्। तथा हीत्युभयपरामर्शः। प्रत्यादिष्टेति। प्रत्यादिष्टो निराकृतो विशेषमण्डनस्य प्रक्षेप्यस्याङ्गुलीयकमुद्रादेर्विधिर्येन स.... येन सः। वामस्य प्रकोष्ठस्य



१ तद्गच्छतं स्वकर्मानुष्ठानाय. १ रामणीयकं. २ प्रकोष्ठे श्लथं. ४ श्वासाप.

चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ६ ॥

सानुमती—( राजानं दृष्ट्वा । ) स्थाने खलु प्रत्यादेशविमानिता-
प्यस्य कृते शकुन्तला क्लाम्यति । ( क )

राजा—( ध्यानमन्दं परिक्रम्य । )

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

( क ) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला किलम्मेदि ।

मणिबन्धोर्ध्वभागस्यार्पितं दत्तम् । काञ्चनमेवेत्यन्यासंस्पृष्टत्वेनातिशीतलत्वं ध्वनितम् । वलयमित्येकवचनं द्वितीयस्य वोढुमसामर्थ्यात् । बिभ्रत् । अभ्यस्तत्वान्न नुम् । वामग्रहणेन विरुदार्थमवश्यंधारणमुक्तम् । अत एकं मुख्यं सर्वदा सत्त्वात् । 'एके मुख्यान्यकेवलाः' इत्यमरः । अत एव वामप्रकोष्ठस्यार्पितं दत्तमिति भूतत्वं च । एतन्मात्रेणैव विशेषो ध्वनितः । श्वासेन विरहित्वादुष्णेनोपरक्तः पाटलो न तु रूक्षोऽधरो यस्य सः । तादृशस्यैव शोभायुक्तत्वं च ध्वनितम् । चिन्तया शकुन्तलागतया यज्जागरणं तेन प्रकर्षेण तान्ते म्लाने नयने यस्य सः जागरणेन रक्तप्रान्तत्वं तेन च शोभातिशययोगित्वं च ध्वनितम् । एषु स्वभावोक्तिः परिकरालंकारश्च । आत्मनस्तेजोगुणाद्दीप्तिलक्षणात्क्षीणोऽपि कृशोऽपि क्षीणत्वेन नालक्ष्यते । क इव । संस्कारार्थमुत्कृष्टो महामणिरिव । महाशब्देन जात्यत्वं सर्वविशिष्टत्वं महत्त्वं च ध्वनितम् । यथा शाणोल्लिखितो महामणिः स्वतेजसा क्षीणो न दृश्यते तद्वदित्युपमा । अनेन महामण्युपमानेनास्य क्षीणत्वेऽप्यन्तःसारता सर्वदा दृश्यमानत्वेऽविनष्टता ध्वनिता । प्रप्रेति पृष्ठेति न्तान्तेति क्षीक्ष्येति छेकवृत्तिश्रुत्यनुप्रासाः । अथ चिन्तेति संकल्पः । जागरेति निद्राच्छेदः । क्षीण इति तनुता । प्रत्यादिष्टेति विषयनिवृत्तिः । इति कामावस्था अपि सूचिताः । वृत्तमनन्तरोक्तम् । अथ चानेन नायकसात्त्विकगुणेषु माधुर्यनामा गुण उपक्षिप्तः । तल्लक्षणं तु–' तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता । सर्वावस्थासु सर्वत्र ' इति ॥ ६ ॥ स्थाने युक्तं खलु प्रत्यादेशेन निराकरणेन विमानिताप्यस्य कृते शकुन्तला क्लाम्यतीति । तत्स्थान इत्यन्वयः । प्रथममिति । सारङ्गो हरिणस्तस्येक्षणे इवेक्षणे यस्यास्तस्याः । अनेन तद्दर्शनमात्रेण प्रतिबोध उचित इति ध्वन्यते । तत्रापि प्रिययात्यन्तहृद्यया शकुन्तलया प्रतिबोध्यमानमपि । स्वत एव प्रतिबोध उचितः स नास्त्यपि तु प्रयत्नेनापि प्रतिबोध्यमानं सुप्तं मोहमुपागतम् । अत एव हतहृदयं दुष्टहृदयं संप्रत्यधुनानुशयदुःखाय पश्चात्तापदुःखाय विबुद्धम् । अत्र पूर्वार्धे विशेषोक्तिः । अत्र प्रतिबोधाभावस्तद्विरुद्धेन सुप्तपदेनोक्तः । उत्तरार्धे विभावनोपमानुप्रासौ च ॥ ७ ॥

१ प्रतान्त, २ मणौ, ३ आम, ४ विलोक्य, ५ दि ति.

**सानुमती**—नन्वीदृशानि तपस्विन्या भागधेयानि । ( क )

**विदूषकः**—( अपवार्य । ) लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति । ( ख )

**कञ्चुकी**—( उपगम्य । ) जयतु जयतु देवः । महाराज प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

**राजा**—वेत्रवति मद्वचनादमात्यमार्यपिशुनं ब्रूहि । चिरप्रबोधान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम् । यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

**प्रतीहारी**—यद्देव आज्ञापयति । ( इति निष्क्रान्ता । ) ( ग )

**राजा**—वातायन त्वमपि स्वं नियोगमशून्यं कुरु ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**विदूषकः**—कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देश आत्मानं रमयिष्यसि । ( घ )

**राजा**—वयस्य यदुच्यते रन्ध्रोपनिपातिनोऽनर्था इति तदव्यभिचारि वचः । कुतः ।

---

( क ) णं ईदिसाणि तवस्सिणीए भाअहेआणि ।

( ख ) लङ्घिदो एसो भूओ वि सउन्दलावाहिणा । ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति ।

( ग ) जं देवो आणवेदि ।

( घ ) किदं भवदा णिम्मच्छिअं । संपदं सिसिरातवच्छेअरमणीए इम्मस्सि पमदवणुद्देशे अत्ताणं रमइस्ससि ।

---

नन्वीदृशानीति राजोक्तानुवादः । तपस्विन्या अनुकम्पार्हाया भागधेयानि भाग्यानि । 'तपस्वी चानुकम्पार्हः' इत्यमरः । शकुन्तलाव्याधिना शकुन्तलायाः सकाशाद्यो व्याधिस्तेन । अथ वा रूपकम् । शकुन्तलैव व्याधिरुद्वेगदायित्वात्[1]। प्रत्यवेक्षिता इति राज्ञे निःशङ्कसंचारार्थं प्रत्यवेक्षणमिति नीतिः । 'विज्ञेयं प्रमदवनं नृपस्तु यस्मिञ्शुद्धान्तैः सह रमते पुरोपकण्ठम्' इति हलायुधः । चिरकालेन प्रबोधनाज्जागरणात् । यद्देव आज्ञापयतीति । वातायनेति कञ्चुकिनाम । नियोगमधिकारम् । शिशिरातपच्छेदरमणीये । नाप्यत्यन्तं शिशिरं नाप्यातपः । रन्ध्रोपनिपातिनः । 'छिद्रेष्वनर्था बहुलीभवन्ति' इत्युक्तेः ।

---

१ °त्यपिशुनं, °यं वसुमत्तम्. २ बोधनात्. ३ रन्ध्रोपरि पा०. ४ सिसिरे तावच्छे०

मुनिसुताप्रणयस्मृतिरोधिना मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः॥ ८॥

विदूषकः—तिष्ठ तावत्। अनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयिष्यामि। (इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।) (क)

राजा—(सस्मितम्।) भवतु। दृष्टं ब्रह्मवर्चसम्। सखे क्वोपविष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि।

विदूषकः—नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा। माधवीमण्डप इमां वेलामतिवाहयिष्ये। तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति। (ख)

राजा—ईदृशं हृदयविनोदनस्थानम्[1]। तत्तमेव मार्गमादेशय।

विदूषकः—इत इतो भवान्। (ग)

(उभौ परिक्रामतः। सानुमत्यनुगच्छति।)

विदूषकः—एष मणिशिलापट्टकसनाथो माधवीमण्डप उपहाररमणीयतया[2] निःसंशयं स्वागतेनेव नौ प्रतीच्छति। तत्प्रविश्य निषीदतु भवान्। (घ)

---

(क) चिट्ठ दाव। इमिणा दण्डकट्ठेण कन्दप्पवाणं णासइस्सं। (ख) णं आसण्णपरिआरिआ चदुरिआ भवदा संदिट्ठा। माहवीमण्डवे इमं वेलं अदिवाहिस्सं। तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहि त्ति। (ग) इदो इदो भवं। (घ) एसो मणिसिलापट्टअसणाहो माहवीमण्डवो उवहाररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि। ता पविसिअ णिसीददु भवं।

---

मुनीति। मुनिसुतायां शकुन्तलायाम्। राज्ञो मुनिसुतात्वेन प्रत्यभिज्ञानात्तथोक्तिः। यः प्रणयः प्रेम तस्य स्मृतिस्तस्या रोधिना तमसा मोहेनेदं मम मनो मुक्तम्। प्रहरिष्यता मनसिजेन कन्दर्पेण धनुषि चूतशरो निवेशितश्च। मम तद्वियोगो वसन्तकालश्च प्रादुरभूदित्यर्थः। चावेककालत्वं द्योतयतः। समुच्चयालंकारः। भोजेन तु 'अदृष्टादपि स्मरणे स्मरणालंकारः' इत्युक्त्वा तदलंकार इदमुदाहृतम्। अनुप्रासश्च। द्रुतविलम्बितं वृत्तम्॥ ८॥

कन्दर्परूपो व्याधिर्यस्मादिति कन्दर्पव्याधिशब्देन चूताङ्कुर उक्त इति ज्ञेयम्। परिचारिकालक्षणं मातृगुप्ताचार्यैरुक्तम्—'संवाहने च गन्धे च तथा चैव प्रसाधने। तथाभरणसंयोगमाल्यसंग्रथनेषु च। विज्ञेया नामतः सा तु नृपतेः

---

१ ०नोदस्था०, निवेशस्थानं; ईदृशमेव—ईदृशं मम—हृदयाश्वासनम्; ईदृशं मे हृदयसंस्थानं तत्तमेवादेशय माधवीमण्डपम्। ईदृशं मम हृदयानवस्थानं ननु त्वमेव दर्शय माधवीमण्डपमार्गम्. २ विविक्तनया उप०, ०तया निसर्गमार्गेन च. ३ ०व्याधिं (व्याधिं) ४ ०स्वजाए० ५ सुमं (सवां)

( उभौ प्रवेशं कृत्वोपविष्टौ । )

**सानुमती**—लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततस्तस्यै भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि । ( इति तथा कृत्वा स्थिता । ) (क)

**राजा**—सखे सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ।

**विदूषकः**—न विस्मरामि । किं तु सर्वं कथयित्वावसाने पुनस्त्वया परिहासविजल्प एष न भूतार्थ इत्याख्यातम् । मयापि मृत्पिण्डबुद्धिना तथैव गृहीतम् । अथ वा भवितव्यता खलु बलवती । (ख)

**सानुमती**—एवं न्विदम् । ( ग )

**राजा**—( ध्यात्वा । ) सखे त्रायस्व माम् ।

**विदूषकः**—भोः किमेतत् । अनुपपन्नं खल्वीदृशं त्वयि । कदापि सत्पुरुषाः शोकवास्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः । ( घ )

---

( क ) लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो बहुमुहं अणुराअं णिवेदइस्सं । ( ख ) ण विसुमरामि । किं तु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो ण भूदत्थो त्ति आचक्खिदं । मए वि मिप्पिण्डबुद्धिणा तह एव्व गहीदं । अह वा भविदव्वदा क्खु बलवदी ।

( ग ) एव्वं णेदं । ( घ ) भो किं एदं । अणुववण्णं क्खु ईदिसं तुइ । कदा वि सप्पुरिसा सोअवत्तव्वा ण होन्ति । णं पवादे वि णिक्कम्पा गिरीओ ।

---

परिचारिका' इति ॥ ईदृशं हृदयविनोदनस्थानमिति प्रश्नः । तत्तस्मात्तमेव मार्गं माधवीलतामण्डपमार्गमादेशय । उपहारः पुष्पोपहारस्तेन रमणीयता तया । ततस्तस्या भर्तुर्बहुमुखमनेकप्रकारमनुरागं निवेदयिष्यामि । इदानीं शकुन्तलायाः सर्वं प्रथमवृत्तान्तं स्मरामीति संबन्धः । प्रत्यादेशवेलायां निराकरणसमये । पुनः परिहासविजल्प एष न भूतार्थः सत्यार्थ इति । भोः किमेतत् । अनौचित्यमित्यर्थः । अनुपपन्नं खल्वीदृशं त्वयि सर्वदा धीरे राज्ञि स्वयं दुष्यन्ते । कदापि सत्पुरुषाः शोकवक्तव्या न भवन्ति । शोके जातेऽन्येन वक्तव्या न भवन्तीत्यर्थः । अप्रस्तुतप्रशंसा । तत्र दृष्टान्तमाह—प्रवातेऽप्यतिश-

---

१ प्रविश्योप०. २ प्रथमदर्शनवृत्तान्ते यत्कथितवानस्मि भवते ।. ३ समये. ४ ०पमुपग०. ५ किं तु पू०. ६ संनिहिदा. ७ तुए भणिदं परि० ... ८ ... ९ सोअपत्तणो ( शोकपात्रात्मानः । ).

**राजा**—वयस्य निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥ ९ ॥

**सानुमती**—अहो । ईदृशी स्वकार्यपरता । अस्य संतापेनाहं रमे । ( क )

**विदूषकः**—भोः अस्ति मे तर्कः केनापि तत्रभवत्याकाशचारिणा नीतेति । ( ख )

**राजा**—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि । तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

**सानुमती**—संमोहः खलु विस्मयनीयो न प्रतिबोधः । ( ग )

---

( क ) अम्महे । ईदिसी सकज्जपरदा । इमस्स संदावेण अहं रमामि ।
( ख ) भो अत्थि मे तक्को केण वि तत्तहोदी आआसचारिणा णीदे त्ति ।
( ग ) संमोहो क्खु विह्मअणिज्जो ण पडिबोहो ।

---

थितवातेऽपि निष्कम्पा गिरयः । विक्लवाया विह्वलायाः । बलवदधिकम् । इत इति । अनुगन्तुं व्यवसिता प्रयत्नं कुर्वाणा मुहुरनन्तरमुच्चैस्तिष्ठेति गुरोः पितुः शिष्यस्तस्मिन्गुरुसमे कण्वसमे वदति सति पुनरनन्तरं बाष्पस्याश्रुणः प्रसर आधिक्यं तेन कलुषामाविलां दृष्टिं क्रूरे कठिने । इदं व्यङ्ग्यावकाशदानाय । मयि निर्घृणहृदये परोपकारानिरते तादृशनिरुपाधिवञ्चकेऽलीकधर्मकञ्चुक इत्यर्थान्तरसंक्रमितवाच्यम् । अर्पितवती यत्तन्मां दहति । अत्र दृष्टेर्दाहकत्वासंभवान्मुख्यार्थबाधे कार्यकारणसंबन्धात्तापं लक्षयंस्तदतिशयं व्यञ्जयतीति दहतिपदमत्यन्ततिरस्कृतवाच्यम् । किमिव । सविषं शल्यमिव । उपमानुप्रासौ । तादृशदृष्टेस्तादृशोऽर्पणात्समं च । गुरुशिष्ये गुरुसम इत्यत्र कथितपदत्वं न शङ्कनीयम् । तात्पर्यभेदेन लाटानुप्रासार्थमेव तथा प्रत्युक्तत्वात् । उत्तरत्र पदे वचनस्याकारित्वभयकारणत्वद्योतनादितात्पर्यमवगन्तव्यम् । शिखरिणी वृत्तम् ॥ ९ ॥ अम्महे आश्चर्ये । अहं रमे मम संतोष इत्यर्थः । संतापे संतोष इति विषमम् । एतद्वाक्यार्थसमर्थकः पूर्वोक्तोऽर्थान्तरन्यासः । यथा यथास्य तापस्तथा तथा शकुन्तलानयनोपायं प्रति प्रयत्नवान्भविष्यतीत्याशयः । पतिदेवतां पतिव्रतां

---

१ तामव०. २ प्रत्यादिष्टा. ३ मुहुः. ४ ०सखे. ५ मकर. ६ परवशतास्य मामपि संतापयति. ७ अस्मात्प्राक्-राजा-वयस्य अपि तर्कयसि येन देवी अपहृता स्यात् ? . ८ ०होदी सउंदला. ९ अवणीदा.

विदूषकः—यद्येवमस्ति खलु समागमः कालेन तत्रभवत्या। (क)

राजा—कथमिव।

विदूषकः—न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं द्रष्टुं पारयतः। (ख)

राजा—वयस्य

स्वप्नो नु माया नु मतिभ्रमो नु क्लिष्टं नु तावत्फलमेव पुण्यम्।
असंनिवृत्त्यै तदतीतमेते मनोरथा नाम तटप्रपाताः॥ १०॥

---

(क) जइ एव्वं अत्थि क्खु समाअमो कालेण तत्तहोदीए।

(ख) ण क्खु मादापिदरा भत्तुविओअदुक्खिअं दुहिदरं चिरं देक्खिदुं पारेन्ति।

---

परामष्टुं स्प्रष्टुम्। जन्मप्रतिष्ठा जन्मस्थानम्। 'प्रतिष्ठा स्थानमात्रके' इति विश्वः। संमोहः खलु विस्मयनीयोऽस्वभावत्वात्। न प्रतिबोधः। स्वाभाव्यात्तस्येत्यर्थः। तत्रभवत्याः पूज्यायाः। द्रष्टुं पारयतः शक्नुतः। न खल्विति संबन्धः। स्वप्न इति। तच्छकुन्तलालक्षणं वस्त्वसंनिवृत्त्यै पुनर्निवर्तनाभावाय। अनेनोत्कण्ठातिशयो व्यज्यते। अतीतं गतम्। तत्र स्वप्नादिभिश्चतुर्भिर्वितर्कैरत्यन्तासंभावनीयदर्शनीयत्वं व्यज्यते। तत्र 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्तेः स्वप्ने संभाव्यत एतदिति स्वप्नो न्विति पूर्ववितर्कः। स्वप्नश्चेत्स्याज्जाग्रदवस्थायां नानुभूयत इत्यत आह—माया न्विति। मन्त्रतन्त्राभ्यामसतः प्रकटनं माया तस्याः कपटघटितत्वाद्विषयसत्त्वाभाव इति भावः। स्यादेवं यद्यधिष्ठानं न प्रतीतं स्यादत आह—मतिभ्रमो न्विति। तेनान्याधिष्ठाने शकुन्तलाभ्रम इत्यर्थः। स्यादेवं यदि व्यवहारक्षमत्वं न स्यादत आह—तावत्फलमत एव क्लिष्टं पुण्यं न्विति। यावान्व्यवहारः संभाषणादिर्जातस्तावदेव फलं यस्य तत्क्लिष्टमत्यल्पम्। तादृशः कश्चिदत्युत्कृष्टो धर्मः पूर्वजननेऽत्यल्प एवाचरितः यस्य तादृगल्पं फलमित्यर्थः। संदेहालंकारः। अतः परमेते त्वयोच्यमाना मया वाशस्यमाना मनोरथाः। नामेत्यलीके। अलीका मनोरथा इत्यर्थः। ते तटप्रपाता इति भिन्नरूपकम्। यथा वर्षासमये गङ्गादेस्तटा ओघेन पीड्यमाना अहमहमिकया पतन्ति। एकः पतति तदुपर्यन्यस्तदुपरीतरः। एवं मनोरथानामेके विलीयन्तेऽन्य उत्पद्यन्ते तेऽपि विलीयन्ते तदितरे उत्पद्यन्त इत्यर्थः। 'प्रपातस्त्वतटो भृगुः' इति कोशात्पुनरुक्तवदाभासः। नुमानुमेति तमेमेतेति छेकवृत्त्यनुप्रासौ। द्वादश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः। निदर्शनमुदाहरणम्॥ १०॥ विदूषकः—'जइ एव्वम्' इत्यादिनैतदन्तेन रोचना नामाङ्गमुपक्षिप्तम्। तल्लक्षणं दशरूपके—'सिद्धामन्त्रणतो भाविदर्शिका



१ फलमे. २ पुण्यैः. ३ तदतीन मन्ये, तमेव. ४ प्रपातं, ०तः; ०थानामतटाः प्रवाहाः. ५ समस्सासिदु मवं अत्थि.

**विदूषकः**—मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाव्यचिन्तनीयः समागमो भवतीति । ( क )

**राजा**—( अङ्गुलीयकं विलोक्य । ) अये इदं तावदसुलभस्थानभ्रंशि शोचनीयम् ।

तव सुचरितमङ्गुलीय नूनं प्रतनु ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्याश्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥

**सानुमती**—यद्यन्यहस्तगतं भवेत्सत्यमेव शोचनीयं भवेत् । ( ख )

**विदूषकः**—भोः इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्ताभ्यासं प्रापिता । ( ग )

---

( क ) मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं अवस्संभावी अचिन्तणिज्जो समाअमो होदि त्ति ।

( ख ) जइ अण्णहत्थगदं भवे सच्चं एव्व सोअणिज्जं भवे ।

( ग ) भो इअं णाममुद्दा केण उग्घादेण तत्तहोदीए हत्थाब्भासं पाविदा ।

---

स्यात्प्ररोचना' इति । सुलभमसुलभं तच्च तत्स्थानं च तस्माद्भ्रंशोऽस्यास्ति तत् । शकुन्तलाङ्गुलिभ्रंशीत्यर्थः । अत एव शोचनीयम् । तवेति । हे अङ्गुलीय नूनं निश्चितं तव सुचरितं पुण्यं ममेव प्रतन्वल्पं विभाव्यते ज्ञायते । अतीन्द्रियस्य धर्मस्य प्रतनुत्वं कथं ज्ञातुं शक्यत इत्यत आह—फलेनेति । अत्यल्पफलत्वेन हेतुनेत्यर्थः । ममेवेति सहोपमा । तेन ममापि पुण्यमल्पं तवापीत्यर्थः । तस्य स्वस्याल्पपुण्यत्वे हेतुः पूर्वं दर्शितः । अस्याल्पपुण्यत्वे हेतुमाह—अरुणेति । यस्मात्तस्या विजितत्रिभुवनसुन्दर्या मयि निर्व्याजमनुरक्तायाः पुरः परिस्फुरन्त्या इवाङ्गुलीषु पुरुषाङ्गुलीयस्य स्थूलत्वात्कदाचित्कनिष्ठिकायां तत्र शिथिलं सदन्याङ्गुली तत्रापि तथाविधमितराङ्गुल्यामिति बहुवचनाभिप्रायः । प्रेमातिशयेन वा सर्वाङ्गस्पृष्टिकेव सर्वाङ्गुलीषु निक्षेपः । यद्वा विरहातिकृशतया मुकुलीकृतासु पञ्चस्वङ्गुलीषु विन्यासाद्बहुवचनोपपत्तिः । तथा चाभियुक्ताः । 'तस्याः किंचित्सुभग तदभूत्तानवं तद्वियोगाद्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति' इति । लब्धपदं महता भाग्योदयेन यथाकथंचित्प्राप्तस्थित्यपि सत् च्युतमसि । कीदृक्ष्वङ्गुलीषु । अरुणा नखा यासु ताः । नखेति तलस्याप्युपलक्षणम् । ताश्च ता मनोहराश्च नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न वक्रा न सरला इत्यर्थः । एतेन स्वयोग्यत्वं ध्वनितम् । उक्तं च सामुद्रे स्त्रीलक्षणे—'नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि । अवक्राः सरला रक्तनखा रक्ततला अपि ॥ कोमलाः सितबिन्द्वाढ्या भङ्गुरा दीप्तिमन्नखाः । तादृगङ्गुल्यो यस्याः सा भवेद्राजवल्लभा ॥' इति । अनुमानकाव्यलिङ्गानुप्रासाः । पुष्पिताग्रा वृत्तम् ॥ ११ ॥

---

१ तनुम०. [illegible] सुखान्यनुभवामि । इत्य०. ५ ०णिज्जसमा०. ६ उद्देसेण.

सानुमती—ममापि कौतूहलेनाकारित एषः। (क)

राजा—श्रूयताम्। स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति।

विदूषकः—ततस्ततः। (ख)

राजा—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता।

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत्प्रिये मदवरोधगृहप्रवेशं
नेता जनस्तव समीपमुपैष्यतीति॥ १२॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम्।

सानुमती—रमणीयः खल्ववधिर्विधिना विसंवादितः। (ग)

विदूषकः—अथ कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत्। (घ)

राजा—शचीतीर्थं वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम्।

विदूषकः—युज्यते। (ङ)

---

(क) मम वि कोदूहलेण आआरिदो एसो। (ख) तदो तदो।
(ग) रमणीओ क्खु अवही विहिणा विसंवादिदो।
(घ) अध कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि।
(ङ) जुज्जइ।

---

केनोद्घातेन केनोपक्रमेण। तत्रभवत्याः शकुन्तलायाः हस्ताभ्यासं हस्तैकदेशं प्रापिता। त्वया तस्यै किमर्थं दत्तेति वचनेऽनौचित्यप्रसङ्गादेतादृगुक्तिः। ममाप्येष कौतूहलेनाकारित एषः। आकारित इवेति गम्योत्प्रेक्षा। ममाप्येतच्छ्रवणे कौतूहलमासीत्। तदेवानेन पृष्टमिति भावः। कियच्चिरेण कियता विलम्बेन। प्रतिपत्तिम्। वार्तामिति यावत्। एकैकमिति। अत्र मुद्रिकायां दिवसे दिवसे मदीयमेकैकं नामाक्षरं गणय। यावत्तद्गणनमन्तं गच्छति। यावद्गणनसमाप्तिरित्यर्थः। त्रिचतुरैर्दिनैरिति भावः। हे प्रिये ममावरोधगृहमन्तःपुरं तत्र प्रवेशस्तं नेता प्रापयिता जनस्तव समीपमुपैष्यतीति मयापि प्रत्यभिहितेति संबन्धः। छेकवृत्त्यनुप्रासौ काव्यलिङ्गं च। वसन्ततिलकं वृत्तम्। मया विस्मृततादृशस्नेहदुर्जनधुरंधरेणेत्यादि व्यज्यते॥ १२॥ दारुणात्मनेति तादृशव्यङ्ग्यावकाशदानाय। रमणीयः खल्ववधिर्विधिना दैवेन शापलक्षणेन च विसंवादितः। धीवरकल्पितस्य कैवर्तखण्डितस्य। शचीतीर्थमिति

---

१ तपोवनात्स्व०. २ पुनरस्याकं स्मरिष्यसि ... ३ ... ४ गच्छति. ५ निवेशनता. ६ मोहादिस्मृत्य मया तथा दारुणात्मना नि०. ७ मत्स्यस्य बडिशमिव गुरुप्रतिष्टमवासीत्.

**सानुमती**—अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । अथ वेद्दशोऽनुरागोऽभिज्ञानमपेक्षते कथमिवैतत् । ( क )

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

**विदूषकः**—( आत्मगतम् । ) गृहीतोऽनेन पन्था उन्मत्तानाम् । ( ख )

**राजा**—

कथं नु तं वन्धुरकोमलाङ्गुलिं करं विहायासि निमग्नमम्भसि ।
अथ वा ।
अचेतनं नाम गुणं न लक्षयेन्मयैव[2] कस्मादवधीरिता प्रिया ॥ १३ ॥

**विदूषकः**—( आत्मगतम् । ) कथं बुभुक्षया खादितव्योऽस्मि । ( ग )

( क ) अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसि । अहवा ईदिसो अणुराओ अहिण्णाणं अवेक्खदि कहं विअ एदं । ( ख ) गहीदो णेण पन्था उम्मत्तआणं । ( ग ) कहं बुभुक्खाए खादिदव्वो ह्मि ।

गङ्गायां शक्रावतारापरपर्यायस्तीर्थविशेष उच्यते । युज्यते । अत एवाङ्गुलीयकादर्शनादेव तपस्विन्या अनुकम्पार्हायाः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । शापाज्ञानादस्या ईदृग्युक्तिः । उपालप्स्येऽस्योपालम्भं करिष्ये । अनेनोन्मादः । गृहीतोऽनेन पन्था उन्मत्तानाम् । **कथमिति** । न्विति प्रश्ने । वन्धुराः सुन्दराः कोमला अङ्गुलयो यत्र तम् । 'वन्धुरं सुन्दरे रम्ये' इति विश्वः । एतद्विशेषणप्रयोजनमेतत्पूर्वतरपद्ये निरूपितम् । तं रक्तोत्पलच्छविमतिमृदुलं मया वारंवारं स्वहृदयन्यस्तं येनातिप्रीत्या तव धारणं कृतं पुर इव परिस्फुरन्तं करं विहाय त्यक्त्वा । अनेन बुद्धिपूर्वकस्त्याग उक्तो न मोहाद् भ्रंशः । कथमम्भसि निमग्नमसि । त्वं त्वलंकरणं तेन तव दृश्यमेव प्रयोजनं तत्करस्थमपि दृश्यमेव स्थितं सद्यदम्भसि नितरां मग्नमदृश्यत्वं गतमिति कथम् । एवं तत्करत्यागस्तत्राप्यदृश्यत्वगमनमित्युपालम्भद्वयम् । अत्र चेतनव्यवहारारोपात्समासोक्तिः । सा च गुरुत्वात्स्वाभाविको जलपातस्तत्कर्तृत्वेनोच्यत इति स्वाभाविककृत्रिमयोरभेदाध्यवसायादतिशयोक्तिगर्भा । अथ वेति वृत्ताक्षेपालंकारः । नामेति प्रसिद्धौ । अचेतनं कर्तृ गुणं सौन्दर्यादिकं प्रेमादिकं च न लक्षयेदित्यर्थान्तरन्यासः । त्वया त्वचेतनत्वादिदं कृतं मया तु सचेतनेनाप्यत्यनुचितकारिणा त्वां प्रति किं वक्तव्यम् । मयैवेत्येवशब्दार्थः । कस्मात् । अकारणकमित्यर्थः । स्त्रीमात्रं न भवत्यपि तु प्रिया । अवधीरिता तिरस्कृता न तु त्यक्ता । त्यक्तायाः पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात् । अवधीरणाकारणाभावे तदुत्पत्तेर्विभावना । श्रुत्यनुप्रासवृत्त्यनुप्रासयोः संकरः । वंशस्थं वृत्तम् ॥ १३ ॥ कथं बुभुक्षया खादितव्योऽस्मि । असावुन्मत्तः अत एव

१ कोमलबन्धुरा० । २ लक्षिते० ।

राजा—प्रिये अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।

(प्रविश्यापटीक्षेपेण चित्रफलकहस्ता।)

चतुरिका—इयं चित्रगता भट्टिनी। (इति चित्रफलकं दर्शयति।) (क)

विदूषकः—(विलोक्य।) साधु वयस्य। मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु। (ख)

सानुमती—अहो एषा राजर्षेर्निपुणता। जाने सख्यग्रतो मे वर्तत इति। (ग)

राजा—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं रेखया किंचिदन्वितम्॥ १४॥

(क) इअं चित्तगदा भट्टिणी। (ख) साहु वअस्स। महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो। खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसुं।

(ग) अम्मो एसा राएसिणो णिउणदा। जाणे सही अग्गदो मे वट्टदि त्ति।

विषयान्तरसंचाराभावान्मया भोजनार्थं गन्तुमशक्यमिति भावः। अथं चाहं यथा बुभुक्षया भक्षितव्यस्तथायमपि तया भक्षितव्य इत्ययमप्यर्थः। प्रकरणवलाद्बुभुक्षेति स्त्रीलिङ्गनिर्देशाच्च। कस्मादवधीरिता प्रियेत्यत्र प्रियास्मरणात्संकल्पोपनीतां प्रत्याह—अकारणेति। अकारणं कारणराहित्येन यः परित्यागस्तेनानुशयः पश्चात्तापस्तेन तप्तं हृदयं यस्य सः। अत्र परित्यागश्चेत्कथं कारणाभावः। कारणाभावश्चेत्कथं परित्याग इति विरोधो नाशङ्कनीयः। अत्र कारणशब्देन प्रसिद्धं नायिकापराधगृहीतं तदेव त्यागे कारणं दृष्टचरमिति। अनेन चित्रफलकहस्तायाश्चतुरिकायाः सूचनम्। सूचिताया एवापटीक्षेपेण प्रवेशोऽतित्वरासूचनाय। अपटी जवनिका। 'इयं चित्रगता भट्टिनी' इत्यनेन यद्राज्ञा पुनर्दर्शनं याचितं तदनया भङ्ग्या कविना संपादितम्। अत एव पश्चात् 'चित्रफलकं दर्शयति' इत्युक्तिः। साधु वयस्येति भिन्नं वाक्यम्। मधुरं सुन्दरं यदवस्थानमाकृतिस्तया दर्शनीयो हृद्यो भावस्यानुप्रवेशोऽभ्यन्तरीकरणम्। सुन्दराकारतया भावाविर्भावो रम्यतर इत्यर्थः। स्खलतीव दृष्टिर्निम्नोन्नतप्रदेशेषु। अनेन मधुराकृतित्वमेवोक्तम्। यथा प्रत्यक्षदृष्टायामाकृतौ निम्नोन्नतेषु दृष्टिः स्खलति तथा चित्रेऽपीति महदालेख्यकौशलमिति भावः। किं बहुना सत्त्वानुप्रवेश आलपना कौतूहलं मे जनयति। एतदेवानुसंधायाह सानुमती—अहो इति। अहो आश्चर्ये। यदिति। चित्रे यद्यत्साधु न स्यात्तत्तदन्यथा क्रियते यद्यपि तथापि तस्या लावण्यं किंचिदनिर्वचनीयया च

१ ०परित्यक्ते. २ स्वदर्श०. ३ पटाक्षेपेण. ४ वअस्स साधु जं तुए मधुरो गट्टिणीए दंसिदो भावा०. ५ अस्मात्परं—किं बहुणा। सत्ताणुप्पवेससंकाए आलवणकोदूहलं जणदेदि (किं बहुना। सत्त्वानुप्रवेशशङ्कया आलपनकौतूहलं मे जनयति)। —इत्यधिकं क्वचित्.

सानुमती—सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च। (क)

विदूषकः—भोः इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते। सर्वाश्च दर्शनीयाः। कतमाऽत्र तत्रभवती शकुन्तला। (ख)

सानुमती—अनभिज्ञः खल्वीदृशस्य रूपस्य मोघदृष्टिरयं जनः। (ग)

राजा—त्वं तावत्कतमां तर्कयसि।

विदूषकः—तर्कयामि यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता सा शकुन्तला। इतरे सख्याविति। (घ)

राजा—निपुणो भवान्। अस्त्यत्र मे भावचिह्नम्।

स्विन्नाङ्गुलिविनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः।
अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात्॥ १५॥

---

(क) सरिसं एदं पच्छादावगरुणो सिणेहस्स अणवलेवस्स अ।

(ख) भो दाणिं तिण्णि तत्तहोदीओ दीसन्ति। सव्वाओ अ दंसणीआओ। कदमा एत्थ तत्तहोदी सउन्दला।

(ग) अणभिण्णो क्खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो।

(घ) तक्केमि जा एसा सिढिलबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णस्सेअबिन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे इसिपरिस्सन्ता विअ आलिहिदा सा सउन्दला। इदराओ सहीओ त्ति।

---

रेखया चित्रार्थे तूलिकाविहितया अन्यथा क्रियते। अथ च शोभाविशेषणान्वितम्। संमार्ज्य संमार्ज्य भूयो भूयो लिख्यमानमपि शोभां नातिक्रामतीति भावः। अथ च शोभया रेखयान्वितमिति विरोधाभासः। लावण्यलक्षणमुक्तं प्राक्। रेखालक्षणं संगीतरत्नाकरे—'शिरोनेत्रकरादीनामङ्गानां मेलने सति। कायस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता॥' इति॥ १४॥ सदृशमेतत्पश्चात्तापेन गुरोरधिकस्य। प्राप्तस्यैवाधिकत्वम्। स्नेहस्यानवलेपस्य निर्दोषस्य। स्वाभाविकस्येत्यर्थः। विशेषतोऽधिकमपसृताभ्यां नतांसाभ्यां बाहुभ्यां भुजाभ्याम्। भावेन सात्त्विकभावेन कृतं चिह्नं भावचिह्नम्। मध्यमपदलोपी समासः। 'तावच्चिह्नम्' इति पाठे सुबोधमेव। स्विन्नेति। स्विन्ना या अङ्गुलयः सात्त्विकभावात्तासां विनिवेशः स्थितिः। रेखा-

---

१ वर्णके। २ निविष्टे। ३ ... ४ केशान्तेन।

चतुरिके अर्धलिखितमेतद्विनोदस्थानम् । गच्छ । वर्तिकां तावदानय ।

**चतुरिका**—आर्य माधव्य अवलम्बस्व चित्रफलकं यावदागच्छामि । (क)

**राजा**—अहमेवैतदवलम्बे । (इति यथोक्तं करोति ।)

(निष्क्रान्ता चेटी ।)

**राजा**—(निःश्वस्य ।)

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ १६ ॥

**विदूषकः**—(आत्मगतम् ।) एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । भोः अपरं किमत्र लिखितव्यम् । (ख)

---

(क) अज्ज माढव्व अवलम्ब चित्तफलअं जाव आअच्छामि ।

(ख) एसो अत्तभवं णदिं अदिक्कमिअ मिअतिण्हिआं संकन्तो । भो अवरं किं एत्थ लिहिदव्वम् ।

---

प्रान्तेषु तत्रैकचित्रपटसंप्रयोगान्मलिनो दृश्यते । मलिनत्वं स्वेदादेव चित्रपटोद्घर्षणात् । कपोलपतितं लिखिताकृतिकपोलप्राप्तमश्रु मम सात्त्विकभावेनोत्पन्नं चेदं वर्तिका चित्रपटे लेपविशेषस्तस्योच्छ्वास उच्छूनता तस्मात् । अनुमानानुप्रासौ । अनेन हेतुलक्षणं भूषणमुपक्षिप्तम् । तल्लक्षणं तु—' स हेतुरिति निर्दिष्टो यत्साध्यार्थप्रसाधकम् ' इति ॥ १५ ॥ वर्तिकां तूलिकाम् । आर्य माढव्येति विदूषकसंज्ञा । अवलम्बस्व चित्रफलकं यावदागच्छामि । **साक्षादिति** । पूर्वमव्यवहितसमये । न तु कालान्तरे । अन्यथोपगतामिति प्रकृतिप्रत्ययार्थेनार्थपौनरुक्त्यं स्यात् । केवलं नारीमात्रं न अपि तु प्रियाम् । साक्षात्प्रत्यक्षेण । उप समीपे गतां प्राप्ताम् । न त्वाभासमात्रेण न त्वश्रुतागमनाम् । अथ च प्रत्यक्षेण प्रियामिति ज्ञातामपहायावगणय्य । न तु त्यक्त्वा । त्यक्तस्य पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात् । पुनरनन्तरं चित्रार्पितां लिखितामिमां पुरतो दृश्यमानां बहु मन्यमान आदरेणावलोकमानः पथि मार्गे निकामजलां संपूर्णोदकां स्रोतोवहां नदीम् । अथ च यतो निकामजलामतः स्रोतोवहां प्रवहद्रूपामिति च योज्यम् । अतीत्यातिक्रम्य मृगतृष्णिकायां मरुमरीचिकायां प्रणयवान्प्रीतियुक्तो जातः । हेतुनिदर्शना । श्रुतिवृत्त्यनुप्रासाः । सुपमपेति मन्यमान इति छेकानुप्रासोऽपि । अपहाय बहु मन्यमान इत्यनयोर्निर्हेतुकत्वं नाशङ्कनीयम् । शापस्य तन्मोक्षेण विरहस्य प्रकरणलभ्यत्वात् । वसन्ततिलका वृत्तम् ॥ १६ ॥ मृगतृष्णिकां संक्रान्तः । अयमेतस्याः

---

१ ...  २ ...मणिकासमुद्गके गृहीत्वाग० . ३ अह हि० ४ ०त: मुहुरिमां, पुनरिमां. ५ ०आए ( ०तृष्णिकायां ).

सानुमती—यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालेखितुकामो भवेत् । (क)

राजा—श्रूयताम् ।

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥ १७ ॥

विदूषकः—(आत्मगतम् ।) यथाहं पश्यामि पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः । (ख)

राजा—वयस्य अन्यच्च । शकुन्तलायाः प्रसाधनमभिप्रेतमत्र विस्मृतमस्माभिः ।

(क) जो जो पदेसो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे ।
(ख) जहं अहं देक्खामि पूरिदव्वं णेण चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं ।

कथं निवर्तनीयो भविष्यतीत्याशयः पूर्वमुन्मत्तानां पन्था अनेन गृहीत इत्युक्तेः । कार्येति । अनेन पद्येनाश्रमस्थं पूर्वमनुभूतं तदानींतनमुद्दीपनं विभावगणं स्मरति । ते च स्मृताः संभ्रमप्रवासहेतुकं विरहमेव पोषयन्ति । सैकते लीनं हंसमिथुनं यस्याः सा । अनेनोद्दीपकत्वातिशयो व्यज्यते । मालिनीनाम्नी स्रोतोवहा नदी कार्या । स्रोतोवहेत्यनेन जलवाहित्वम्, तेन स्वभावापरित्यागः, तेन रमणीयत्वं, तेन चोद्दीपकत्वं व्यज्यते । मालिनीमभित इत्यभितो योगे द्वितीया । गौरीगुरोर्हिमवतः । अनेन कन्यापितृत्वेन तद्दुःखानुभवात्तत्प्रदेशेऽविघ्नितसंकेतत्वं द्योत्यते । निषण्णहरिणा इत्यनेनात्यन्तविविक्तत्वम्, तेन भृशमुद्दीपकत्वम्, तेन च सुरतक्षमत्वं ध्वन्यते । पावना इत्यनेन शुचित्वेन रम्यत्वेन पर्यवसानम् । 'पादाः प्रत्यन्तपर्वताः' । कार्या इत्यनुषज्यते । शाखास्वालम्बितानि वल्कलानि वृक्षत्वचो यस्य । अनेनाश्रमपथानतिदूरत्वेन तस्याः शालीनत्वं ध्वनितम् । तस्य तरोरधः कृष्णमृगस्य कृष्णसारस्य शृङ्गे । वामनयनमिति स्त्रीस्वभावत्वात् । कण्डूयमानां मृगीं निर्मातुमिच्छामि । अत्र कण्डूयनं शृङ्गारानुभावसूचकं घर्षणमात्रम् । अनेनाप्युद्दीपकत्वं ध्वनितम् । पूर्वं कार्येत्युक्त्वा निर्मातुमिच्छामीत्युक्तिस्तु घर्षणस्य लेखनायोगात् । तेनैतदपीच्छामि । न वस्तुतः कर्तव्यमिति भावः । स्वभावोक्तिः । लीनलिनीति गौरीगुरोरीति मृगमृगीमिति मनमानामिति छेकवृत्तिश्रुत्यनुप्रासाः । गौरीगुरोरीति प्रसङ्गोपादानादुदात्तालंकारश्च । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

१ चमराः; पादान्ते निभृतं निषण्णचमरे गौरीगुरोः पावने ।. २ यथा मन्त्रयति तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिर्लम्बकूर्चानां तापसानामिति ।. ३ °भेतमस्माभिः

विदूषकः—किमिव । ( क )

सानुमती—वनवासस्य सौकुमार्यस्य विनयस्य च यत्सदृशं भविष्यति । ( ख )

राजा—

कृतं न कर्णार्पितबन्धनं सखे शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं रचितं स्तनान्तरे ॥ १८ ॥

विदूषकः—भोः किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाग्रहस्तेन मुखमावार्य चकितचकितेव स्थिता । ( सावधानं निरूप्य । दृष्ट्वा । ) आः एष दास्याःपुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनकमलमभिलङ्घते मधुकरः । ( ग )

राजा—ननु वार्यतामेष धृष्टः ।

विदूषकः—भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति । ( घ )

---

( क ) किं विअ ।

( ख ) वणवासस्स सोउमारस्स विणअस्स अ जं सरिसं भविस्सदि ।

( ग ) भो किं णु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं आवारिअ चइदचइदा विअ ठिआ । आ एसो दासीएपुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणकमलं अहिलङ्घेदि महुअरो ।

( घ ) भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि ।

---

प्रसाधनमलंकरणम् । अभिप्रेतमभिमतम् । किमिव । वनवासस्येत्यनेन पुष्पादिकम्, सौकुमार्यस्य चेत्यनेन कुसुमानामपि यत्कोमलतरं तदेकद्वित्रिधारणं च, विनयस्य चेत्यनेन शेखरादिव्यावर्तनं व्यज्यते । यत्सदृशं भविष्यति । कृतमिति । अत्र कर्णशब्देन स्वस्य तेन भूषणवत्त्वं बोधयता नैकट्यात्कर्णशिरोऽन्तरालदेशो लक्ष्यते । तेन परस्परोपकारकरणादन्योन्यालंकारो व्यङ्ग्यः । तत्रार्पितमारोपितं बन्धनं वृन्तं यस्य तत् । [आगण्डं] गण्डं मर्यादीकृत्य [विलम्बन्ते इति] विलम्बिनः केसरा यस्य तत् । एतेन केवलं कर्णं न भूषयति, अपि तु गण्डमपीति व्यज्यते । शिरीषं शिरीषपुष्पं न कृतम् । हे सखे । शिरीषपदेन कोमलत्वं ध्वनतान्यत्तदयोग्यमिति तस्याः सुकुमाराङ्गत्वं व्यज्यते । शिरीषसमत्वेन मध्ये तत्र तस्यैव समावेशयोग्यत्वात् । एतेन तत्स्तनयोरतिपीवरतया परस्परोत्पीडनत्वं तेनालिङ्गनयोग्यत्वं तेन च तदप्राप्त्या स्वस्याधन्यत्वादि व्यज्यते । रचितं न चेति संबन्धः । अत्राप्यन्योन्यशोभाहेतुत्वेनान्योन्यालंकारो व्यङ्ग्यः । क्रिययोः समुच्चितत्वात्समुच्चयालंकारः । एकाधिकरणत्वेनापि तस्येष्टत्वात् ।

---

१ पतत्वास्यन्येषु पुस्तकेषु. २ ०लअसोहिणा. ३ ओवारिअ ( अपवार्य ) ४ वअणं अ०. ५ दुट्ठम० ( दुष्टमधु० ).

राजा—युज्यते । अयि भोः कुसुमलताप्रियातिथे किमत्र परिपतनखेदमनुभवसि ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति ॥ १९ ॥

सानुमती—अद्याभिजातं खल्वेष वारितः । ( क )

विदूषकः—प्रतिषिद्धापि वामैषा जातिः । ( ख )

राजा—एवं भो न मे शासने तिष्ठसि । श्रूयतां तर्हि संप्रति ।

( क ) अज्ज अभिजादं क्खु एसो वारिदो ।
( ख ) पडिसिद्धा वि वामा एसा जादी ।

उपमा च श्रुतिवृत्त्यनुप्रासयोः संकरः । शिरीसरेति रीचिरचीति न्त्रन्तरे इति छेकानुप्रासोऽपि । 'श्लेषानुप्रासयमकचित्रेषु सहचोर्न भित्' इत्याद्युक्तेः । वंशस्थं वृत्तम् ॥ १८ ॥ रक्तकुवलयस्य पल्लवः पत्रं तद्वच्छोभिना । यद्वा रक्तौ कुवलयपल्लवौ तद्वच्छोभिना । किं न्विति संबन्धः । कुसुमरसपाटच्चरः पुष्पमधुचौरः । अनेनैवापराधेन दण्ड्योऽपराधान्तरे च सुतरां दण्डनीय इति व्यज्यते । यस्याः कस्याश्चिन्न अपि त्वत्रभवत्याः पूज्याया वदनमभिलङ्घति । मधुकर इति साभिप्रायम् । राज्ञस्तु तद्देश एव तिष्ठामीति बुद्ध्या नन्वित्याद्युक्तिः । विदूषकस्तु चित्रगतस्य वारयितुमशक्यत्वादिति सोल्लुण्ठं स्वभावोक्तिमाह—भवानेवाविनीतानां शासितास्य वारणे प्रभविष्यति । राजा तु तादृक्तत्त्वबुद्ध्यैव प्रत्युत्तरयति—युज्यत इति । कुसुमग्रहणं लतायाः सद्भावसूचनार्थम् । कुसुमयुक्ता लता कुसुमलतेति मध्यमपदलोपी समासः । तस्या अपि प्रियोऽतिथिर्न तु यः कश्चिदतिथिस्तस्य संबोधनम् । यत्र तु सा तादृशी लता तत्र परिपतनमुचितम् । अत्र नातिथित्वं सुतरां न प्रियातिथित्वम् । परिपतनरूप एव खेदस्तमनुभवसि न तु मधुलवलाभोऽपीति भावः । चित्रलिखितायां तत्पुष्पे भ्रमर्यपि लिखिता तामुद्दिश्यैवेत्युक्तिः । एषेति । कुसुमनिषण्णेत्यनेन तवायत्नसाध्यं स्थानमिति भावः । अनुरक्तेत्यनेन तव तत्रोचितं गमनमिति ध्वन्यते । तृषिताभिलाषवत्यपि मधुकरी स्वाभाव्यात्सती विद्यमानपतिव्रता च मधुकरी भवन्तं प्रतिपालयतीति प्रेमातिशयः । त्वया विना मधु न पिबति । अत्र चित्रन्यस्तायाः स्वाभाविकस्य पानाभावस्य त्वया विनेति कृत्रिमस्य वाभेदाध्यवसायादतिशयोक्तिः । अथ वा माधवीलतायां तादृशीं मधुकरीं दृष्ट्वैवेत्युक्तिः । अत्र तृषितत्वं कुसुमोपर्युपवेशनादेव । नायिकानायकव्यवहारसमारोपात्समासोक्तिः । सती पतिव्रता मधुकरीति भिन्नरूपेण एकदेशविवर्तिरूपकमपि । मधुमध्विति छेकवृत्त्यनुप्रासाः ॥ १९ ॥ अद्याधुनाभिजातं न्याय्यं यथा स्यादेवं खल्वेष वारितः । 'अभिजातः स्मृतो न्याय्ये' इति विश्वः । प्रतिषिद्धापि वामैषा जातिरिति विदूषकवचनं

१ आर्य.

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं स्पृशसि चेद्भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥

**विदूषकः**—एवं तीक्ष्णदण्डस्य किं न भेष्यति । ( प्रहस्य। आत्मगतम् । ) एष तावदुन्मत्तः । अहमप्येतस्य सङ्गेनेदृशवर्ण इव संवृत्तः । ( प्रकाशम् । ) भोः चित्रं खल्वेतत् । ( क )

**राजा**—कथं चित्रम् ।

**सानुमती**—अहमपीदानीमवगतार्था । किं पुनर्यथालिखितानुभाव्येषः । ( ख )

---

( क ) एव्वं तिक्खणदण्डस्स किं ण भाइस्सदि । एसो दाव उम्मत्तो । अहं पि एदस्स संङ्गेण ईदिसवण्णो विअ संवुत्तो । भो चित्तं क्खु एदं ।

( ख ) अहं पि दाणिं अवगदत्था । किं उण जहलिहिदाणुभावी एसो ।

---

सोल्लुण्ठमेव । राज्ञोऽपि पूर्ववदेव । शासन आज्ञायाम् । **अक्लिष्टेति** । अक्लिष्टः केनापि न मृदितो बालो नूतनस्तरोः पल्लवस्तद्वल्लोभनीयं सुन्दरम् । अत्र तात्स्थ्यं वक्तुं तरुपदोपादानम् । यद्वा बालो यस्तरुस्तस्य पल्लवः । अक्लिष्टश्चासौ बालतरुपल्लवश्चेति । एतेन कोमलत्वलौहित्यातिशयो व्यज्यते । प्रियाया बिम्बाधरं बिम्बसदृशमधरमिति मध्यमपदलोपी समासः । तथा च वामनः—'बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम्' इति । रतोत्सवेषु तया सह रतमुत्सवरूपमित्यर्थः । तेषु मयोत्कण्ठातिशयवतापि सदयं स्वादं स्वादं च पीतं न तु निर्दयं तद्दष्टम् । तेनातिकोमलत्वं ध्वनितम् । अथ च पीतमप्यक्लिष्टबालतरुपल्लवलोभनीयमिति विधेयं विशेषणं तेन भ्रमरस्य स्पर्शोऽपि हेतुत्वं तेन भ्रान्तिमानलंकारो व्यज्यते । हे भ्रमर त्वं चेत्तं स्पृशसि तदा कमलस्योदरे बन्धनस्थं त्वां कारयामि । अनेन सूर्यस्यापि निजाज्ञाकारित्वं ध्वन्यते। स्वाभाविकस्य तस्य सप्रयोजकत्वव्यापारेणोत्करातिशयोक्तिश्च । प्रतिनायकव्यवहारसमारोपात्समासोक्तिः । उन्मत्तावस्थावर्णनादनौचित्यं न । कमलोदरे जलमध्ये बन्धनस्थमिति श्लेषोऽपि । हेतुरूपकोपमानुप्रासाः । वसन्ततिलकं वृत्तम् ॥ २० ॥ अहमप्येतस्य सङ्गेनेदृशा वर्णा अक्षराणि यस्य स इव संवृत्तः । सोल्लुण्ठोत्तरदानेन सहजतयोन्मत्तावस्थायां पर्यवसानादिति भावः । 'राजा—युज्यते' इत्यादिनैतदन्तेन भ्रान्तिर्नाम संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'भ्रान्तिर्विपर्ययज्ञानं प्रसङ्गस्याविनिश्चयात्' इति । अहमपीदानीमवगतार्था । चित्रमिति ज्ञानं ममाप्यधुना जातमित्यर्थः । किं पुनर्यथालिखितानुभाव्येष विद्-



१ संसग्गेण. २ एदिसजणो. ३ अणवगदत्था. ४ सारी.

राजा—वयस्य किमिदमनुष्ठितं पौरोभाग्यम्।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता॥ २१॥

(इति बाष्पं विहरति।)

सानुमती—पूर्वापरविरोध्यपूर्व एष विरहमार्गः। (क)

राजा—वयस्य कथमेवमविश्रान्तदुःखमनुभवामि।

प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः।
बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि॥ २२॥

सानुमती—सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः। (ख)

(प्रविश्य।)

चतुरिका—जयतु जयतु भर्ता। वर्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थितास्मि। (ग)

(क) पुव्वावरविरोही अपुव्वो एसो विरहमग्गो।
(ख) सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं सउन्दलाए।
(ग) जेदु जेदु भट्टा। वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थिद म्हि।

पकः। 'राजा—ननु वार्यतामेष धृष्टः' इत्यादिना 'बन्धनस्थम्' इत्यन्तेन तन्मयत्वप्रवासविप्रलम्भकामदशावस्था सूचिता। 'तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा' इति तल्लक्षणात्। पौरोभाग्यं दोषदर्शित्वम्। 'दोषैकदृक्पुरोभागी' इत्यमरः। दर्शनेति। तन्मयेन शकुन्तलामयेन साक्षादिव दर्शने सुखमनुभवतो मम स्मृतिकारिणा चित्रमिति स्मरणं कारितवता त्वया कान्ता चित्रीकृतालेख्यस्था कृता। अथ चाश्चर्यरूपा कृता। 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः। स्मृतिकारिणारिणा चित्रीकृतेति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः। उत्प्रेक्षा। वतवतेति येनयेनेति कृताकान्तेति छेकश्रुत्यनुप्रासाः। भोजेन तु 'परप्रयत्नादपि स्मरणे स्मरणालंकारः' इत्युक्त्वा तदलंकारे इदमुदाहृतम्॥ २१॥ 'राजा—अकारणपरित्याग—' इत्यादिनैतदन्तेन चित्रं नाम संध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणम्—'चित्रं त्वाकारस्य विलेखनम्' इति। पूर्वापरविरोध्यपूर्व एष विरहमार्गः। पूर्वं चित्रस्य चित्रत्वेन ज्ञानं पुनस्तस्योन्मादावस्थायां सत्यत्वेन ज्ञानं पुनरपि चित्रत्वेन ज्ञानमिति पूर्वापरविरोधः। उन्मादावस्थानन्तरं मूर्छाद्यवस्थाया अभावादिति भावः। अत एवापूर्व आश्चर्यकारी। प्रजागरादिति। तस्याः स्वप्ने समागमः प्रजागरात्खिलीभूतो निरुद्धः। तु पुनर्बाष्पोऽश्रुप्रवाहः। 'बाष्पो नेत्रजलोष्मणोः' इति विश्वः। एनां चित्रगतामपि प्रत्यक्षदर्शनं पुनरनुपपन्नमित्यपिशब्दार्थः। द्रष्टुं न ददाति। हेत्वनुप्रासौ॥२२॥ वर्ति-

१ विसृजति; रोदिति. २ स्वप्नसमा०. ३ संविधानम०.

राजा—किं च ।

चतुरिका—स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुम- त्याहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः । ( क )

विदूषकः—दिष्ट्या त्वं मुक्ता । ( ख )

चतुरिका—यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा । ( ग )

राजा—वयस्य उपस्थिता देवी बहुमानगर्विता च । भवानिमां प्रतिकृतिं रक्षतु ।

विदूषकः—आत्मानमिति भण । ( चित्रफलकमादायोत्थाय च । ) यदि भवानन्तःपुरकूटवागुरातो मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दायय । ( इति द्रुतपदं निष्क्रान्तः । ) ( घ )

सानुमती—अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते । अति- शिथिलसौहार्द इदानीमेषः । ( ङ )

( प्रविश्य पत्रहस्ता । )

प्रतीहारी—जयतु जयतु देवः । ( च )

राजा—वेत्रवति न खल्वन्तरा दृष्टा त्वया देवी ।

---

( क ) सो मे हत्थादो अन्तरा तरलिआदुदिआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्सं त्ति सबलक्कारं गहीदो ।

( ख ) दिट्ठिआ तुमं मुक्का ।

( ग ) जाव देवीए विडवलग्गं उत्तरीअं तरलिआ मोचेदि ताव मए णिव्वा- हिदो अत्ता ।

( घ ) अत्ताणं त्ति भणाहि । जइ भवं अन्तेउरकूडवागुरादो मुञ्चीअदि तदो मं मेहप्पडिच्छन्दे पासादे सद्दावेहि ।

( ङ ) अण्णसंकन्तहिअओ वि पढमसंभावणं अवेक्खदि । अदिसिढिलसोहदो दाणिं एसो । ( च ) जेदु जेदु देवो ।

---

काकरण्डकं तूलिकावर्णकादिभाण्डं गृहीत्वेतोमुखं प्रस्थितास्मि । स वर्तिकाकर- ण्डको मे मम हस्तादन्तरा मध्ये । मया निर्वाहित आत्मा । पलायितास्मीत्यर्थः । इमां प्रतिकृतिं लिखितां शकुन्तलाप्रतिमाम् । आत्मानमिति भण । केवलं प्रति- कृतिरेव रक्षणीयेति न, अपि त्वात्मापि रक्षणीय इत्यर्थः । अत्रात्मशब्देन वि- दूषको राजा च उभयमपि गृह्यते । तेन प्रतिकृतिरक्षणेनोभावपि रक्षिताविति

---

१ शब्दायस्व, शब्दापय, शब्दय, शब्दायिष्यते. २ अत्ताणं त्ति त्ति किं न भणासि. ३ ०उरकालकूटादो. ४ आदि इति नास्ति क्वचित्.

प्रतीहारी—अथ किम् । पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता । (क)

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति ।

प्रतीहारी—देव अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितं तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति । (ख)

राजा—इतः पत्रं[1] दर्शय ।

(प्रतीहार्युपनयति ।)

राजा—(अनुवाच्य ।) कथम् । समुद्रव्यवहारी सार्थवाहो धनमित्रो नाम नौव्यसने विपन्नः । अनपत्यश्च किल तपस्वी[2] । राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता । वेत्रवति बहुधनत्वाद्बहुपत्नीकेन[3] तत्रभवता भवितव्यम् । विचार्यतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु[4] स्यात् ।

प्रतीहारी—देव इदानीमेव साकेतकस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायास्य श्रूयते । (ग)

राजा—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ । एवममात्यं ब्रूहि ।

प्रतीहारी—यद्देव आज्ञापयति । (इति प्रस्थिता ।) (घ)

राजा—एहि तावत् ।

प्रतीहारी—इयमस्मि । (ङ)

राजा—किमनेन संततिरस्ति नास्तीति ।

---

(क) अह इं । पत्तहत्थं मं देक्खिअ पडिणिउत्ता ।

(ख) देव अमच्चो विण्णवेदि । अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं तं देवो पत्तारूढं पच्चक्खीकरेदु त्ति ।

(ग) देव दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

(घ) जं देवो आणवेदि । (ङ) इअं ह्मि ।

---

भावः । मेघप्रतिच्छन्दनामनि प्रासादे शब्दापय । आकारयेत्यर्थः । अर्थजातस्य द्रव्यसमूहस्य । नौव्यसने पोतभ्रंशे । 'व्यसनं विपदि भ्रंशे' इत्यमरः । विचार्यतामन्विष्यताम् । तस्य वणिजो भार्यासु मध्ये काचिद्गार्यापन्नसत्त्वा गुर्विणी स्यात् । देव इदानीमेव साकेतस्यायोध्यायाः । 'स्यात्साकेतोऽयोध्यायाम्' इति हैमः । पित्र्यं पितृसंबन्धि रिक्थं धनम् । 'रिक्थं धनं वसु' इत्यमरः ।

---

१ पत्रिका. २ तरस्वी. ३ महाध०. ४ भार्या.

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३ ॥

प्रतीहारी—एवं नाम घोषयितव्यम् । ( निष्क्रम्य । पुनः प्रविश्य । ) काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् । ( क )

राजा—( दीर्घमुष्णं च निःश्वस्य । ) एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्तः ।

प्रतीहारी—प्रतिहतममङ्गलम् । ( ख )

राजा—धिङ् मामुपस्थितश्रेयोवमानिनम् ।

सानुमती—असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । ( ग )

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय वसुंधरा काल इवोप्तबीजा ॥ २४ ॥

सानुमती—अपरिच्छिन्नेदानीं ते संततिर्भविष्यति । ( घ )

चतुरिका—( जनान्तिकम् । ) अयि अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माधव्यं गृहीत्वागच्छ । ( ङ )

---

( क ) एव्वं णाम घोसइदव्वं । काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणम् । ( ख ) पडिहदं अमङ्गलम् । ( ग ) असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा । ( घ ) अपरिच्छिण्णा दाणिं दे संददी भविस्सदि । ( ङ ) अए इमिणा सत्थवाहवुत्तन्तेण विउणुव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छेहि ।

---

यद्देव आज्ञापयतीति । इयमस्मि । येनेति । पापादृते । स्त्रीणां भर्तृत्वेन विनेत्यर्थः । छेकवृत्त्यनुप्रासौ । एवं नाम घोषयितव्यम् ॥ २३ ॥ काले प्रवृष्टमिवापेक्षितसमये प्रवर्षणमिवाभिनन्दितं देवस्य शासनमिति । प्रतिहतममङ्गलम् । उपस्थितं प्राप्तं श्रेयः सगर्भशकुन्तलारूपम् । असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । संरोपित इति । नामेति संभावनायाम् । मया तादृशधार्मिकेण तादृशसावधानेन संरोपितेऽप्यात्मनि पुत्रगर्भे उत्पादितेऽपि । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । कुलप्रतिष्ठा पुत्रप्रसूत्वाद्धर्मपत्नी त्यक्तावधीरिता । काले स्वसमय उप्तबीजा न्यस्तबीजात एव महते फलाय सस्याय कल्पिष्यमाणा वसुंधरा यथोपेक्ष्यत इत्युपमा । काव्यलिङ्गं च । श्रुत्यनुप्रासः । अष्टम्युपजाति-

---

१ शलक्ष्या मूल । २ देवश्रीरकाल इवोप्तबीजा भूरेव वृत्ता-

प्रतीहारी—सुष्ठु भणसि। (इति निष्क्रान्ता।) (क)

राजा—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः। कुतः।

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति॥ २५॥

(इति मोहमुपगतः।)

चतुरिका—(ससंभ्रममवलोक्य।) समाश्वसितु समाश्वसितु भर्ता। (ख)

सानुमती—हा धिक् हा धिक्। सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति। अहमिदानीमेव निर्वृतं करोमि। अथ वा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति। तद्युक्तमेतं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि। (इत्युद्भ्रान्तकेन निष्क्रान्ता।) (ग)

---

(क) सुट्ठु भणासि। (ख) समस्ससदु समस्ससदु भट्टा।

(ग) हद्धी हद्धी। सदि क्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि। अहं दाणिं एव्व णिव्वुदं करेमि। अह वा सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदि त्ति। ता जुत्तं एदं कालं पडिपालिदुं। जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि।

---

रिन्द्रवज्रोपेन्द्रवज्रयोः। संशयमारूढाः पिण्डदाभावात्। पिण्डभाजः पितरः। अस्मादिति। बतेति खेदे। अस्मात्परं दुष्यन्तात्परं यथाश्रुति वेदानतिक्रमेण नोऽस्माकं कुले संभृतानि बहूपकरणयुक्तानि निवपनानि श्राद्धादीनि। 'पितृदानं निवापः स्यात्' इत्यमरः। को नियच्छति ददाति। दास्यतीत्यर्थः। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट्। इतिकारणान्नूनमुत्प्रेक्षे। प्रसूतिविकलेन पुत्ररहितेन मया प्रसिक्तं दत्तमुदकं धौतमश्रु येन तच्च तच्छेषं च तादृक् पितरः पिबन्ति। काव्यलिङ्गोत्प्रेक्षानुप्रासाः। वसन्ततिलकं वृत्तम्॥ २५॥ 'राजा—दीर्घमुष्णं च निःश्वस्य' इत्यादिनैतदन्तेन छलनं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'आत्मावसादनं यत्तु छलनं तदुदाहृतम्' इति। 'राजा—संरोपिते' इत्यादिना 'मोहमुपगतः' इत्यन्तेन मूर्छना नाम कामदशोक्ता। व्यवधानं

---

१ पितरः. २ संहितानि. ३ करिष्यतीति. ४ ०असेकम्. ५ उपागतः. ६ अवलम्ब्य. ७ अन्धआरं अणुहोदि राएसी. ८ न छु०, जुत्तं मे एद्ध (अत्र) विलम्बिदुं.

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २३ ॥

प्रतीहारी—एवं नाम घोषयितव्यम् । ( निष्क्रम्य । पुनः प्रविश्य । ) काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम् । ( क )

राजा—( दीर्घमुष्णं च निःश्वस्य । ) एवं भोः संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति । ममाप्यन्ते पुरुवंशश्रियं एष एव वृत्तान्तः ।

प्रतीहारी—प्रतिहतममङ्गलम् । ( ख )

राजा—धिङ् मामुपस्थितश्रेयोवमानिनम् ।

सानुमती—असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । ( ग )

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय वसुंधरा काल इवोप्तबीजा ॥ २४ ॥

सानुमती—अपरिच्छिन्नेदानीं ते संततिर्भविष्यति । ( घ )

चतुरिका—( जनान्तिकम् । ) अयि अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता । एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माधव्यं गृहीत्वागच्छ । ( ङ )

---

( क ) एव्वं णाम घोसइदव्वं । काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणम् । ( ख ) पडिहदं अमङ्गलम् । ( ग ) असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा । ( घ ) अपरिच्छिण्णा दाणिं दे संददी भविस्सदि । ( ङ ) अए इमिणा सत्थवाहवुत्तन्तेण विउणुव्वेओ भट्टा । णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छेहि ।

---

यद्देव आज्ञापयतीति । इयमस्मि । येनेति । पापादृते । स्त्रीणां भर्तृत्वेन विनेत्यर्थः । छेकवृत्त्यनुप्रासौ । एवं नाम घोषयितव्यम् ॥ २३ ॥ काले प्रवृष्टमिवापेक्षितसमये प्रवर्षणमिवाभिनन्दितं देवस्य शासनमिति । प्रतिहतममङ्गलम् । उपस्थितं प्राप्तं श्रेयः सगर्भशकुन्तलारूपम् । असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा । संरोपित इति । नामेति संभावनायाम् । मया तादृशधार्मिकेण तादृशसावधानेन संरोपितेऽप्यात्मनि पुत्रगर्भे उत्पादितेऽपि । 'आत्मा वै पुत्रनामासि' इति श्रुतेः । कुलप्रतिष्ठा पुत्रप्रसूत्वाद्धर्मपत्नी त्यक्तावधीरिता । काले स्वसमय उप्तबीजा न्यस्तबीजात एव महते फलाय सस्याय कल्पिष्यमाणा वसुंधरा यथोपेक्ष्यत इत्युपमा । काव्यलिङ्गं च । श्रुत्यनुप्रासः । अष्टम्युपजाति

---

१ [illegible] २ [illegible]काल इवोप्तबीजा सूरवं वृत्ता.

प्रतीहारी—सुष्ठु भणसि। (इति निष्क्रान्ता।) (क)

राजा—अहो दुष्यन्तस्य संशयमारूढाः पिण्डभाजः। कुतः।

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति॥ २५॥

(इति मोहमुपगतः।)

चतुरिका—(ससंभ्रममवलोक्य।) समाश्वसितु समाश्वसितु भर्ता। (ख)

सानुमती—हा धिक् हा धिक्। सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारदोषमनुभवति। अहमिदानीमेव निर्वृतं करोमि। अथ वा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखाद्यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति यथाचिरेण धर्मपत्नीं भर्ताभिनन्दिष्यतीति। तद्युक्तमेतं कालं प्रतिपालयितुम्। यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि। (इत्युद्भ्रान्तकेन निष्क्रान्ता।) (ग)

---

(क) सुट्ठु भणासि। (ख) समस्ससदु समस्ससदु भट्टा।

(ग) हद्धी हद्धी। सदि क्खु दीवे ववधाणदोसेण एसो अन्धआरदोसं अणुहोदि। अहं दाणिं एव्व णिव्वुदं करेमि। अह वा सुदं मए सउन्दलं समस्सासअन्तीए महेन्दजणणीए मुहादो जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदि त्ति। ता जुत्तं एदं कालं पडिपालिदुं। जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि।

---

रिन्द्रवज्रोपेन्द्रवज्रयोः। संशयमारूढाः पिण्डदाभावात्। पिण्डभाजः पितरः। अस्मादिति। बतेति खेदे। अस्मात्परं दुष्यन्तात्परं यथाश्रुति वेदानतिक्रमेण नोऽस्माकं कुले संभृतानि बहूपकरणयुक्तानि निवपनानि श्राद्धादीनि 'पितृदानं निवापः स्यात्' इत्यमरः। को नियच्छति ददाति। दास्यतीत्यर्थः। 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट्। इतिकारणान्नूनमुत्प्रेक्षे। प्रसूतिविकलेन पुत्ररहितेन मया प्रासिक्तं दत्तमुदकं धौतमश्रु येन तच्च तच्छेषं च तादृक् पितरः पिबन्ति। काव्यलिङ्गोत्प्रेक्षानुप्रासाः। वसन्ततिलकं वृत्तम्॥ २५॥ 'राजा—दीर्घमुष्णं च निःश्वस्य' इत्यादिनैतदन्तेन छलनं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'आत्मावसादनं यत्तु छलनं तदुदाहृतम्' इति। 'राजा—संरोपिते' इत्यादिना 'मोहमुपगतः' इत्यन्तेन मूर्छना नाम कामदशोक्ता। व्यवधानं

---

१ पितरः. २ संभृतानि. ३ प्रसिञ्चतीति. ४ °श्रुसेकम्. ५ उपागतः. ६ अवलम्ब्य.
७ अन्धआरं अनुहोदि राएसी. ८ न जु°, जुत्तं मे एद्द (अत्र) विलम्बिदुं.

( नेपथ्ये । )

अब्रह्मण्यम् । ( क )

राजा—( प्रत्यागतः । कर्णं दत्वा । ) अये माधव्यस्येवार्तस्वरः । कः कोऽत्र भोः ।

( प्रविश्य । )

प्रतीहारी—( ससंभ्रमम् । ) परित्रायतां देवः संशयगतं वयस्यम् । ( ख )

राजा—केनात्तगन्धो माणवकः ।

प्रतीहारी—अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः । ( ग )

राजा—( उत्थाय । ) मा तावत् । ममापि सत्त्वैरभिभूयन्ते गृहाः । अथ वा ।

अहन्यहन्यात्मन एव तावज्ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयातीत्यशेषतो वेदितुमस्ति शक्तिः ॥ १६ ॥

( क ) अब्बह्मणम् । ( ख ) परित्ताअदु देवो संसअगदं वअस्सम् ।
( ग ) अदिट्ठरूवेण केण वि सत्तेण अदिक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो ।

---

देशान्तरेणापवरकादिना च स एव दोषस्तेनान्धकारदोषं मोहलक्षणम् । अथ च तिमिरकृतं दोषं वस्त्वदर्शनलक्षणम् । सत्यामपि शकुन्तलायां तददर्शने प्रस्तुते साम्याद्दीपकस्याप्रस्तुतस्य वचनादप्रस्तुतप्रशंसा । अहमिदानीमेव निर्वृतं सुखितं करोमि । अथ वेत्याक्षेपे । उद्युक्तं कालं प्रतिपालयितुम् । विलम्बं कर्तुमित्यर्थः । श्रुतमित्यादिना वक्ष्यमाणमातलिप्रवेशः सूचितः । अनेनादानं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'बीजकार्योपगमनमादानमिति संज्ञितम्' इति । भर्ता शकुन्तलामभिनन्दिष्यतीति बीजकार्योपगमनम् । उद्भ्रान्तकेनेत्युद्भ्रान्तकनाम्नोत्प्लुतिकरणेन । अब्रह्मण्यमवध्यः । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः । संशयगतं जीवनमरणसंशयं प्राप्तं वयस्यं विदूषकम् । अनेन भयनामकं संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'भयं त्वाकस्मिकत्रासः' इति । 'आत्तगन्धोऽभिभूतः स्यात्' इत्यमरः । माणवको विदूषकः । अदृष्टरूपेण केनचित्सत्त्वेन जन्तुना । सत्त्वेनातिक्रम्येति यदुक्तं तन्निषेधे मा तावदिति भिन्नं वाक्यम् । ममाप्यतिधार्मिकस्य यथाशास्त्रं प्रजापरिपालकस्य नानायज्ञादिकर्तुर्गृहाः सत्त्वैरभिभूयन्त इति प्रश्नकाकुः । अथ वेत्याक्षेपे । अहनीति । अहन्यहनि प्रतिदिनमात्मनः प्रमादस्खलितमनवधानेन विपरीतकरणं ज्ञातुं तावदादौ न शक्यम् । एवकारव्यवच्छेद्यमाह—प्रजास्विति । प्रजासु मध्ये को जनः केन पथा प्रया-



१ कस्य नु शक्तिरस्ति; अस्त्यशक्तिः.

( नेपथ्ये । )

भो वयस्य अविहा अविहा । ( क )

राजा—( गतिभेदेन परिक्रामन् । ) सखे न भेतव्यम् ।

( नेपथ्ये । )

( पुनस्तदेव पठित्वा । ) कथं न भेष्यामि । एष मां कोऽपि प्रत्यवनत-शिरोधरमिक्षुमिव त्रिभङ्गं करोति । ( ख )

राजा—( सदृष्टिक्षेपम् । ) धनुस्तावत् ।

( प्रविश्य शार्ङ्गहस्ता । )

यवनी—भर्तः एतद्धस्तावापसहितं शरासनम् । ( ग )

( राजा सशरं धनुरादत्ते । )

( नेपथ्ये । )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥ २७ ॥

राजा—( सरोषम् । ) कथं मामेवोद्दिशति । तिष्ठ कुणपाशन । त्वमिदानीं न भविष्यसि । ( शार्ङ्गमारोप्य । ) वेत्रवति सोपानमार्गमादेशय ।

( क ) भो वअस्स अविहा अविहा ।

( ख ) कहं ण भाइस्सं । एस मं को वि पच्चवणदसिरोहरं इक्खुं विअ तिण्णभङ्गं करेदि ।

( ग ) भट्टा एदं हत्थावावसहिदं सरासणं ।

तीत्यशेषतो वेदितुं ज्ञातुमात्मनः शक्तिर्नास्तीति संबन्धः । ज्ञातुं वेदितुमित्यर्थालंकारः । छेकवृत्त्यनुप्रासौ । त्रयोदश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः ॥ २६ ॥ अविहेति खेदे निपातः । 'अविहाऽविह निर्वेदे' इत्युक्तेः । गतिभेदेन क्रोधोद्धतगत्येत्यर्थः । कथं न भेष्यामि । त्रिभङ्गं त्रिखण्डं करोति । एतद्धस्तावापसहितं ज्याघातवारणसहितं शरासनं धनुः । एष इति । अभिनवं नूतनं यत्कण्ठशोणितं तदर्थी शार्दूलो व्याघ्रः । 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । चेष्टमानमितस्ततो वलमानं पशुमिवैष त्वां हन्मि । अभिनवेत्यादिविशेषणमेतदोऽपि योज्यम् । चेष्टमानामपि । अनेन वीभत्सरसो ध्वनितः । आर्तानां पीडितानां भयमपनेतुं दूरीकर्तुमात्तधन्वा गृहीतचाप इति स्वाभाविकं क्रोधावेगसूचनम् । उपमावृत्तिश्रुत्यनुप्रासाः । प्रहर्षिणी वृत्तम् ॥ २७ ॥ अनेनौजो नाम संध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'ओजस्तु वागुपन्यासो निजशक्तिप्रकाशकः' इति । तद-

१ धनुर्धनुः. २ निष्ठ निष्ठ. ३ अधिवाप. ४ पच्चावणद० ( पश्चादवनत० ); पच्चामोडिदसि०. ५ तिक्खभङ्गं; त्रिखण्डभङ्गं.

**प्रतीहारी**—इत इतो देवः । ( क )

( सर्वे सत्वरमुपसर्पन्ति । )

**राजा**—( समन्ताद्विलोक्य । ) शून्यं खल्विदम् ।

( नेपथ्ये । )

अविहा । अविहा । अहमत्रभवन्तं पश्यामि । त्वं मां न पश्यसि । बिडालगृहीतो मूषक इव निराशोऽस्मि जीविते संवृत्तः । ( ख )

**राजा**—भोस्तिरस्करिणीगर्वित मदीयमस्त्रं त्वां द्रक्ष्यति । एष तमिषुं संदधे

यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ २८ ॥

( इत्यस्त्रं संधत्ते । )

( ततः प्रविशति विदूषकमुत्सृज्य मातलिः । )

**मातलिः**—

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।

---

( क ) इदो इदो देवो ।

( ख ) अविहा अविहा । अहं अत्तभवन्तं पेक्खामि । तुमं मं ण पेक्खसि । बिडालग्गहीदो मूसओ विअ णिरासो ह्मि जीविदे संवुत्तो ।

---

भिप्रायेण राजा सरोषमिति । कुणपाशन राक्षस । 'राजा—सरोषम्' इत्यादिनैतदन्तेन क्रोधो नाम संध्यन्तराङ्गमुपाक्षिप्तम् । तल्लक्षणं तु—'क्रोधस्तु चेतसो दीप्तिरपराधादिदर्शनात्' इति । इत इतो देवः । अविहा खेदे । अहमत्रभवन्तं पूज्यं राजानं पश्यामि । बिडालगृहीतः मार्जारगृहीतः । अनेनोपमानेन त्यागेऽपि जीविताभावः सूचितः । तिरस्करिणी विद्या तया गर्वित । यद्यहं न पश्यामि तथापि मदीयं शस्त्रं त्वां द्रक्ष्यति । एष इत्यस्य श्लोकेनान्वयः । य इति । यः शरो वध्यं त्वां हनिष्यति प्रहरिष्यति द्विजं विदूषकं रक्ष्यं रक्षति रक्षिष्यति । तमिषुं संदध इति संबन्धः । एकस्योभयकारित्वे दृष्टान्तमाह—हंस इति । अत्रोपमेय उभयस्यादृष्टत्वेन रूपेणैक्यं विवक्षितम् । 'राजा—भोः' इत्यादिनैतदन्तेन व्यवसायो नामाङ्गमुपाक्षिप्तम् । तल्लक्षणं दशरूपके—'व्यवसायः स्वशक्त्युक्तिः' इति राज्ञा स्वशक्तेराविष्करणात् ॥ २८ ॥ 'नेपथ्ये' इत्यादिनैतदन्तेन रौद्रो रसो ध्वनितः । कृता इति । हरिणेन्द्रेणासुरा दैत्यास्तव शरव्यं लक्ष्यं कृताः । अत

---

१ शत्रुः; गर्वित किमिदानीं मदीयं शस्त्रमपि त्वां न पश्यति । स्थिरो भव । मा च ते दयस्यसंपर्काद्विश्वासो भूत् । एष इत्य०. २ रक्षति च. ३ ०लिर्विदूषकश्च; प्रविशति मातलिर्विदूषकश्च. ४ शरव्याः.

प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥ २९ ॥

राजा—( ससंभ्रममस्त्रमुपसंहरन् । ) अये मातलिः । स्वागतं महेन्द्रसारथे ।

( प्रविश्य । )

विदूषकः—अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते । ( क )

मातलिः—( सस्मितम् । ) आयुष्मन् श्रूयतां यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा—अवहितोऽस्मि ।

मातलिः—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।

राजा—अस्ति । श्रुतपूर्वं मया नारदात् ।

मातलिः—

सख्युस्ते स किल शतक्रतोरजय्य-
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥ ३० ॥

( क ) अहं जेण इट्ठिपसुमारं मारिदो सो इमिणा साअदेण अहिणन्दीअदि ।

इदं शरासनं तेषु विकृष्यताम् । तदर्थमहमागतोऽस्मीति सूचितम् । सूक्ष्मकाव्यलिङ्गं च । सुहृज्जने सतां प्रसादेन सौम्यान्यनुग्राणि चक्षूंषि पतन्ति न दारुणा मर्मभेदिनः शराः । तेन तेषु धनुराकर्षणमात्रं नापि तु शरपातोऽपि कर्तव्य इति भावः । अत्र तव मयीति विशेषे वक्तव्ये सतां सज्जन इति सामान्योक्तेरप्रस्तुतप्रशंसा । सतां तादृशचक्षुषा सुहृज्जनसंबन्धप्रतीतेः समालंकारो व्यङ्ग्यः । न दारुणा इति व्यतिरेकः । वृत्त्यनुप्रासः । वंशस्थं वृत्तम् ॥ २९ ॥ अस्त्रं बाणम् । अये इत्याश्चर्ये । मातलेर्महत्त्वमिन्द्रसारथित्वेनैवेति महेन्द्रसारथे इत्युक्तिः । अस्मीत्यहमर्थे निपातः । हरिणेन्द्रेण । अवहितोऽस्मि सावधानोऽस्मि । 'राजा—अस्ति' इति पूर्वस्योत्तररूपं भिन्नं वाक्यम् । सख्युरिति । किलेति प्रसिद्धौ । ते तव सख्युर्मित्रस्य । अनेन जन्मप्रभृति तेन सह मैत्र्याभिनियोगत्वेनेदं मन्तव्यमिति भावः । शतक्रतोरिन्द्रस्याजय्यः । प्रयत्नसहस्रैरपि जेतुमशक्य इत्यर्थः । रणशिरसि संग्रामाग्रे तस्य दानवगणस्य त्वं निहन्ता स्मृतः । सप्तसप्तिः सूर्यो यन्नैशं निशासंबन्धि तिमिरमुच्छेत्तुं नाशयितुं न प्रभवति समर्थो न भवति चन्द्रस्तदपाकरोति । दृष्टान्तः । स्तेसस्तस्येति सप्तसप्तीति



१ यदस्मि. २ ०काशमिह. ३ श्रुतपूर्वा मया. ४ अवध्यः.

स भवानात्तशस्त्र एव इदानीमैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ।

राजा—अनुगृहीतोऽहमनया मघवतः संभावनया । अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ।

मातलिः—तदपि कथ्यते । किंचिन्निमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः । पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ।

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ ३१ ॥

राजा—( जनान्तिकम् । ) वयस्य अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि ।

त्वन्मतिः केवला तावत्परिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः ॥ ३२ ॥

इति ।

विदूषकः—यद्भवानाज्ञापयति । ( इति निष्क्रान्तः । ) ( क )

मातलिः—आयुष्मान्रथमारोहतु ।

( राजा रथारोहणं नाटयति । )

( निष्क्रान्ताः सर्वे । )

षष्ठोऽङ्कः ।

---

( क ) जं भवं आणवेदि ।

---

छेकवृत्त्यनुप्रासाः । प्रहर्षिणी वृत्तम् । अत्रानेन स्वस्वामिनः सूर्योपमानत्वेन तेजस्वित्वं वदता तदशक्यकरत्वेनास्य चन्द्रोपमानत्वं वदतोभयत्रौचित्यं ध्वनितम् ॥ ३० ॥ **ज्वलतीति** । चलितं चलनं प्राप्तमिन्धनं यस्य सोऽग्निर्ज्वलति । विप्रकृतः कोपितः पन्नगः सर्पः फणां फटामूर्ध्वं कुरुत इत्यर्थः । 'फटायां तु फणा द्वयोः' इत्यमरः । हि निश्चितं जनः सर्वो लोकः क्षोभाच्चित्तक्षौर्यात्स्वं महिमानमात्मप्रभावं प्रायो बाहुल्येन प्रतिपद्यते । मालादृष्टान्तालंकारः । भवानिति विशेषे प्रस्तुते जन इति सामान्योक्तेरप्रस्तुतप्रशंसा । लतिलिते इति प्राप्रेति छेकवृत्त्यनुप्रासौ ॥ ३१ ॥ तत्तस्मादत्र विषये ममेन्द्राज्ञया तत्र गमनरूपेण परिगतार्थं ज्ञातार्थं कृत्वा । पिशुन इति मन्त्रिनाम । **त्वन्मतिरिति** । इति ब्रूहीति संबन्धः । पूर्वं प्रजापरिपालन उभयमपि व्यापृतमासीत् । अधुना ते मतिरेवेति केवलेत्युक्तम् । अनेनोभयायत्तसिद्धित्वमात्मनः सूचितम् । द्वितीयस्यान्यत्र विनियोगमाह—अधीति । अन्यस्मिन्कर्मणि दानवमारणे ।

---

१ ०र्नी तमैन्द्र०. २ चरणहतः. ३ ०ते जनः ... सजः । ४ युक्त [ मिद ] मनुष्ठितं भवद्भिः । ( विदूषकं प्रति । ). ५ परिपालयितुम्. ६ व्यावृतम्. ७ इत आयुष्मान् । ( राजा रथ० ). ८ रथाधिरो०.

## सप्तमोऽङ्कः ।

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च । )

**राजा**— मातले अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषाद्-नुपयुक्तमिवात्मानं समर्थये ।

**मातलिः**—( सस्मितम् । ) आयुष्मन् उभयमप्यपरितोषं समर्थये ।

**प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् ।**
**गणयत्यवदानविस्मितो भवतः सोऽपि न सत्क्रियागुणान् ॥ १ ॥**

---

एतेन लोकद्वयरक्षकत्वमस्य ध्वनितम् । अधिज्यमित्यनेनैतत्समयमारभ्य दानवमार-णपर्यन्तं ज्यानुत्तारणं ध्वनितम् ॥ ३२ ॥ इति **श्रीमदभिज्ञानशकुन्तलटीका-यामर्थद्योतनिकायां षष्ठोऽङ्कः समाप्तः ॥**

इतो निर्वहणसंधिः समाप्तिं यावत् । तल्लक्षणं यथा सुधाकरे—' मुखसंध्या-द्यो यत्र विकीर्णा बीजसंयुताः । यदा प्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥ ' इति । कार्यफलप्रयोगेनास्य संधित्वम् । तल्लक्षणं मातृगुप्ताचार्यैरुक्तम्—' यदा-धिकारिकं वस्तु सम्यक्प्राज्ञैः प्रयुज्यते । तदर्थो यः समारम्भस्तत्कार्यं कथ्यते इति ॥ अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् । इतिवृत्तं भवेद्यस्मिन्फलयोगः स उच्यते ॥ ' इति । अत्र दानवयुद्धं युद्धत्वेन साक्षान्निषिद्धमित्यङ्केनैव सूचितम् । प्रकृते प्रयोजनाभावादन्यद्वारा वाचिकाभिनयेनापि नोक्तम् । अनङ्गस्याभिधा-नमिति रसदोषापत्तेः । अतः कृतकार्ययोः सूतरथिनोरेव प्रवेशः । तत्संवादेनैव कार्यमुन्नेयम् । आकाशयानेनेत्यनेन मरीच्याश्रमगमनं ध्वनितम् । अनुष्ठित-निदेशः कृताज्ञः । मघवत इन्द्रस्येति मध्यमस्थमुभयत्राप्यन्वेति । सत्क्रियाविशे-षात्संमानाधिक्यात् । अनुपयुक्तमिवोपयोगरहितमिव अर्थादिन्द्रं प्रति । यन्मया कार्यं कृतं तदिन्द्रसंमाननायाः सहस्रांशेनापि तुलयितुं न क्षममिति सूक्ष्मालं-कारः । एतेनेन्द्रस्य प्रत्युपकारशीलत्वं विनययुक्तत्वं गुणग्राहित्वं चात्मनस्तु परमशौर्यशालित्वमिन्द्रेण तथापूजितत्वादत्यन्तसौभाग्यास्पदत्वं च व्यज्यते । उभयं भवदुपकृतमिन्द्रसत्कृतं च । त्वं त्वात्मोपकृतमेव तथा समर्थयसे । अहं पुनरुभयमपि न विद्यते परितोषो यत्रार्थात्कर्त्रोस्तदपरितोषं समर्थये । इन्द्रस्तु त्वत्कर्माधिकं मन्यते । त्वं त्विन्द्रकृतां पूजामधिकां मन्यस इति भावः । तदेव दर्शयति—**प्रथमेति** । भवान्मरुत्वत इन्द्रस्य प्रतिपत्त्या गौरवेण पश्चात्कृतेन प्रथममुपकृतं लघु स्वल्पं मन्यते । भवतोऽवदानेन शुद्धकर्मणा विस्मितः । ' अवदानं शुद्धकर्म ' इत्यमरः । सोऽपीन्द्रः सत्क्रिया स्वकृतसंमानना तस्या गुणानादरातिश-यादीनथ वा तया गुणान्स्वस्मिन्विनयार्जवादीन्न गणयति । तव कर्म स्मृत्वा मया तस्य संमानना कृतेति चेतस्यपि तस्य नायातीत्यर्थः । बहुवचनेन संमाननाधिक्यं

---

१ [illegible] न उपकृत्य [illegible] भवान् (प्रथमोपकृतिं हरेर्भवान् ) लघु सत्कारम-वेक्ष्य मन्यते ।...दानसंमितां...क्रियामिमाम् ॥. २ ०त्यपदान.

**राजा**—मातले मा मैवम् । स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य

**अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।**
**आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥ २ ॥**

**मातलिः**—किमिव नामायुष्मानमरेश्वरान्नार्हति । पश्य ।

**सुखपरस्य हरेरुभयैः कृतं त्रिदिवमुद्धृतदानवकण्टकम् ।**
**तव शरैरधुना नतपर्वभिः पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥**

---

ध्वन्यते । क्रिया चेत्कथं गुण इति विरोधाभासो व्यङ्ग्यः शब्दशक्तिमूलः । त्वदवदानस्मरणेनाभिव्यक्तविस्मयस्ते विगलितवेद्यान्तरत्वेन किमपि न स्मरतीति भावः । तेन 'उदात्तं वस्तुनः संपत्' इत्युदात्तालंकारः । हेतुश्रुत्यनुप्रासौ । उपमेयोपमा व्यङ्ग्या । परस्परं क्रियाजननादन्योन्यमपि । अत्र सत्क्रियालक्षणे कारणे सत्यपि यद्गणनलक्षणकार्यानुत्पत्तिः सा विशेषोक्तिः । अथ च गणनाभावलक्षणकार्योत्पत्तौ कारणाभावाद्विभावनापि । यद्यपि कारणाभावो नोक्तस्तथापि तद्विरुद्धमुखेनोक्त एवेति संदेहसंकरः । अवदानविस्मितत्वेनोक्तनिमित्तत्वमुभयत्र । वैतालीयं वृत्तम् ॥ १ ॥ मनोरथातिभूमित्वमेव दर्शयति—मम हीति । मम मनुष्यमात्रस्य दिवौकसो देवस्य न अपि तु सकलदिवौकसां देवानाम् । श्रूयमाणतया न अपि तु समक्षं प्रत्यक्षम् । आसनमात्रे न अपि तु स्वार्धासने । निविष्टस्य न अपि तु निवेशितस्येत्यस्य श्लोकेनान्वयः । **अन्तरिति** । अन्तर्गता हृद्गता प्रार्थना मन्दारमालाविषयिणी याच्ञा यस्य स तम् । न दूरस्थम्, अपि त्वन्तिकस्थं समीपस्थम् । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः । जयन्तं पुत्रमुदधिकं वीक्ष्य दृष्ट्वा कृतस्मितेनेति तस्य मनोगतां याच्ञां ज्ञात्वेति सूक्ष्मं जयन्तादप्यात्मनोऽधिकस्नेहपात्रता ध्वन्यते । हरिणेन्द्रेणामृष्टं स्पृष्टं यद्वक्षोहरिचन्दनं हृदयानुलेपः सोऽङ्कश्चिह्नमस्याः सा । अत्राङ्कपदोपादानेन मालायास्तत्कालधारणं तस्यास्तत्कालकृतं चन्दनानुलेपत्वं च व्यज्यते । तेन तत्कण्ठयोग्यत्वाम्लानत्वात्यन्तसुरभित्वमनोहरत्वादिकं ध्वन्यते । मन्दारपुष्पाणां माला मम पिनद्धामुक्ता स्वयं परिधापिता न तु दत्ता । गौरवस्याधिक्यादुदात्तम् । न्तन्तेति न्दन्देति छेकवृत्त्यनुप्रासौ । द्वितीयोपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः ॥ २ ॥ मातलिः—अत्यल्पमिदमुच्यते । भवानमरेश्वरादिति मनोरथातीतवस्तुदानेऽपि सामर्थ्यं ध्वनितम् । किमिव नार्हति । यदतिप्रियमतिरम्यमत्युत्कृष्टं जीवितायमानमपि तदप्यर्हत्यन्यदर्हतीति किं वक्तव्यमिति भावः । **सुखेति** । सुखपरस्य सुखे परः सुखपरस्तस्य । यद्वा सुखमेव परं यस्यातिसुखिन इति विधेयम् । हरेरिन्द्रस्योभयैस्त्रिदिवं स्वर्गः । दानवाः कण्टका इव दानवकण्टकाः । उद्धृता दानव-



१ उरसश्चस्य.

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः ।

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाभविष्यदरुणस्तमसां विभेत्ता
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

मातलिः—सदृशं तवैतत् । ( स्तोकमन्तरमतीत्य । ) आयुष्मन् इतः पश्य नाकपृष्ठप्रतिष्ठितस्य[3] सौभाग्यमात्मयशसः ।

---

कण्टका यत्र तत्कृतम् । अत्रोद्धृतपदेन तेषां समूलनाशादत्यन्ताभावो ध्वन्यते । दुःखप्रदत्वं साधर्म्यं गम्यम् । अनया वानयोः पुरस्तेषां जडतरत्वं ध्वन्यते । उद्धृतदानवकण्टकत्वात्सुखपरत्वस्य विधेयत्वे वक्तव्ये यत्तस्यार्थं विधेयत्वमुक्तं तदस्य प्राधान्यं द्योतयितुम् । काव्यलिङ्गं व्यङ्ग्यम् । यथा कश्चिन्मार्गमुद्धृतकण्टकं करोतीत्युक्तलेशः । एतेन क्लेशाभावो ध्वनितः । अथ च सुखपरस्य सिंहीविलासलालसस्य हरेः सिंहस्य त्रिदिवमिव त्रिदिवं स्थानम् । यद्वा त्रिदिवं सुखं विद्यते यत्र तत् । अर्शआदित्वादच् । ‘ त्रिदिवं सुखे । स्वर्गे च ’ इति हैमः । एतादृशं स्थानम् । दानं मदोदकं वान्ति प्राप्नुवन्ति । दोषोपन्यासः । कैरुभयैरित्यत आह-तवेति । अधुना नतानि पर्वाणि येषां ते नतपर्वाणस्तैः । पर्वणां नतत्वं ग्रन्थिस्थत्वे तल्लक्षणात् । एतेन सरलत्वं शीघ्रगत्वं च ध्वनितम् । तव परमशूरस्य विख्यातपौरुषस्य शरैर्नान्यस्येति संबन्धस्य व्यञ्जकत्वं बोद्धव्यम् । पुरा पूर्वं च पुरुषकेसरिणो नृसिंहस्य पर्वणः सकाशात् । नतमिति भावे क्तः । नतं पर्व येषां तैर्नखैश्च । इन्द्रं प्रत्युभयस्याप्राकरणिकत्वेन नतपर्वत्वसाम्यात्तुल्ययोगिता । तेन नखैः शराणां नृसिंहपदेन चापस्य राज्ञ औपम्यं ध्वनितम् । उपमानुप्रासौ । ननु दानवा एव कण्टका इति रूपकं संदेहसंकरो वास्तु कथमुपमेति चेदुच्यते । उद्धृतपदस्य दानवकण्टकयोः साधारण्यान्न रूपकसाधकत्वम् । किं च रूपके कण्टकानां प्राधान्यान्नृहरिदुष्यन्तयोरनुत्कर्षापातात् । उपमायां तु दानवानामेव प्राधान्यात्तदुत्कर्षासिद्धेः । अत एव न संकरोऽपि । उपमाकारणप्रयोजनं पूर्वमेवोक्तमिति हीनोपमापि नाशङ्कनीया । द्रुतविलम्बितं वृत्तम् ॥ ३ ॥ सिध्यन्तीति । महत्स्वपि कर्मसु कार्येषु नियोज्याः सेवका यत्सिध्यन्ति कार्यनिष्पादका भवन्ति ईश्वराणां प्रभूणां यत्संभावना गौरवं तस्य गुणः तमवेहि जानीहि । प्रभुमहत्त्वेनैव तत्कार्यसिद्धिः । सेवकगुणः कोऽपि नास्तीति भावः । ‘ संभावना वासनायां गौरवे ध्यानकर्मणि ’ इत्यजयः । अत्रेन्द्र आत्मनि च विशेषे प्रस्तुतेऽप्रस्तुतप्रभुभृत्यवचनादप्रस्तुतप्रशंसा । अनया च स्वस्य भृत्यत्वं तस्य प्रभुत्वं च सूचयन्त्या विनयातिशयद्योतनादुदात्तालंकारो व्यज्यते । अरुणस्तमसां भेत्तान्धकारनाशकः किं वा कथमसाधयिष्यत् । यद्यदि सहस्रकिरणो रविर्धुर्यमेवं नाकरिष्यदिति क्रियातिपातः ।



---

१ प्राभ०......मसां वधाय. २ ०शमैवै०. ३ ०ष्ठगतस्य.

विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु ।
विचिन्त्य गीतक्षममर्थजातं दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

राजा—मातले असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता मया न लक्षितः स्वर्गमार्गः । कतमस्मिन्मरुतां पथि वर्तामहे ।

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

दृष्टान्तालंकारः । अनुप्रासश्च । किंवेति निपातसमुदायः कथमर्थे । वसन्ततिलकं वृत्तम् ॥ ४ ॥ सदृशमेवैतत् । तवेत्यर्थः । तेनतादृशमेव वक्तुमुचितमिति भावः । स्तोकमल्पमन्तरमवकाशमतीत्यातिक्रम्येति कविवचनम् । मातलिः पुनस्तस्यैव स्तुतिं विवक्षन्नाह—आयुष्मन्निति । नाकपृष्ठे स्वर्गतले प्रतिष्ठितस्य सदा स्थिरत्वेन प्रतिष्ठां प्राप्तस्य । विच्छित्तीति । सुरसुन्दरीणां न तु सुरयोषितां विच्छित्तिशेषैरङ्गरागावशेषैर्यक्षकर्दमादिभिः । 'विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपि' इति विश्वः । तैः स्वहस्तेन तासामङ्गरागं कृत्वावशेषितैरित्यनेन त्वच्चरितानामतिप्रियत्वमासूचितम् । वर्णैर्वर्णकैः सितपीतादिभिरमी दिवौकसः कल्पलतांशुकेषु कल्पवल्लीवस्त्रेषु । एतेनैतदेवाधिकरणं तल्लिखनयोग्यमिति ध्वन्यते । त्वच्चरितं त्वदवदानं लिखन्ति चरितस्यालेखनासंभवादाह । गीतक्षमं गातुं योग्यमर्थजातमर्थसमूहं विचिन्त्य विचार्य त्वदीयचरितानि गीतनिबद्धानि कृत्वा लिखन्तीत्यर्थः । क्वचित् 'अर्थतत्त्वम्' इति पाठः । एवंविशिष्टकर्तृविशिष्टकरणविशिष्टाधिकरणनिर्देशेन चरितलेखनस्य वर्णितत्वादुदात्तालंकारः । तेन तेषामेवंविधसदाशृङ्गाररसोपभोग्यस्थितिस्त्वत्प्रसादादिति वस्तु ध्वनितम् । अत्र विच्छित्तिशेषस्य यक्षकर्दमादेर्वर्णकत्वेन निरूपणात्तस्य च प्रकृतोपयोगित्वाच्च परिणामालंकारश्च । श्रुतिवृत्त्यनुप्रासौ च । अष्टम्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः ॥ ५ ॥ महापुरुषत्वादस्य स्वस्तुतिश्रवणं लज्जाकरमसावपि तत्स्तुतेर्न विरमतीति राजा तस्य विषयान्तरसंचारं करोति । असुराणां दैत्यानां संप्रहार उत्सुकेन पूर्वेद्युर्दिवं स्वर्गं प्रत्यधिरोहता स्वर्गमार्गो न लक्षितः । किं नु कुत्र वर्तत इति न ज्ञातमिति भावः । मरुतां पथि वायुस्कन्धे । तत्र सप्त वायुस्कन्धा आवहादयः । तन्मध्ये कतरस्मिन्मरुतां स्कन्धे वर्तामहे । तदुक्तं सिद्धान्तशिरोमणौ—'भूवायुरावह इह प्रवहस्तदूर्ध्वं स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः प्रति ( परि ) पूर्वकोऽस्माद्बाह्यापरावह इमे पवनाः प्रसिद्धाः ॥' इति । त्रिस्रोतसमिति । यो मार्गे गगने प्रतिष्ठा स्थितिर्यस्याः एवंभूतां त्रिस्रोतसं



१ अथबन्ध. २ ०हता न लक्षितोयं प्रदेशो मया. ३ कतर०. ४ चक्रविभ०. ५ ०रश्मि. ६ तस्य व्यपेतरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरिविक्रमपूत एषः ।.

राजा—मातले अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति । ( रथाङ्गमवलोक्य । ) मेघपदवीमवतीर्णौ स्वः ।

मातलिः—कथमवगम्यते ।

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते सीकरक्लिन्ननेमिः ॥ ७ ॥

गङ्गां वहति । तथा च विष्णुपुराणे—'विष्णोर्बिभर्ति यां भक्त्या शिरसाहर्निशं ध्रुवः । ततः सप्तर्षयो यस्यां प्राणायामपरायणाः ॥ तिष्ठन्ति वीचिमालाभिः सिच्यमानजटाजले । वायोर्वै संततैर्यस्याः प्लावितं शशिमण्डलम् ॥ भूयोऽधिकतमां कान्तिं वहत्येतदहःक्षये । मेरुपृष्ठे वहत्युच्चैर्निष्क्रान्ता शशिमण्डलात्' ॥ इति । यो मार्गः । प्रविभक्ता रश्मयोऽर्थाद्वायुरूपा एव यत्र कर्मणि । ज्योतींषि ध्रुवादिनक्षत्रान्तानि वर्तयति परिभ्रमयति । तथा च विष्णुपुराणे—'सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह । वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै' ॥ इति । तथा 'ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः । भ्रमन्त्युचितचारेण मैत्रेयानिलरश्मिभिः ॥' इति । तस्य परिवहस्य परिवहनाम्नो वायोरिमं मार्गं वदन्ति । द्वितीयो हरेर्वामनावतारे विक्रमः पादनिक्षेपस्तेन निस्तमस्कं पापरहितं शोकरहितं च । 'तमोऽन्धकारे स्वर्भानौ पापे शोके गुणान्तरे' इति हैमः । तदुक्तं वामनपुराणे—'क्रमत्रये तोयमवेक्ष्य दत्तं महासुरेन्द्रेण विभुर्यशस्वी । चक्रे ततो लङ्घयितुं त्रिलोकं त्रिविक्रमं रूपमनन्तशक्तिः ॥ कृत्वानुरूपं दितिजांश्च हत्वा प्रणम्य चर्षीन्प्रथमक्रमेण । महीं महीध्रैः सहितां महार्णवां जहार रत्नाकररत्नैर्युताम् ॥ भुवं सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिनन्दितं नभः । देवो द्वितीयेन जहार वेगात्क्रमेण देवप्रियमीप्सुरीश्वरः ॥' इति । अङ्गभूतमहापुरुषचरितवर्णनादुदात्तालंकारः । अनुप्रासश्च । वसन्ततिलकं वृत्तम् ॥ ६ ॥ अतः पूर्वोक्तप्रवहवायुस्कन्धसंचारतः । सबाह्यकरणो बाह्येन्द्रियसहितः । **अयमिति** । सीकरैरम्बुकणैः क्लिन्ना आर्द्रा नेमिश्चक्रप्रान्तो यस्य स तेऽयं रथः । अराणि चक्राङ्गानि तेषां विवरेभ्यश्छिद्रेभ्यः । 'अरं शीघ्रे च चक्राङ्गे' इति विश्वः । निष्पतद्भिर्निर्गच्छद्भिश्चातकैः पक्षिविशेषैः कृत्वाचिरभासां विद्युतां तेजसानुलिप्तैः पीतैर्हरिभी रथाश्वैश्च कृत्वा वारिगर्भाण्युदराणि येषां ते तादृशाम् । अनेन संपूर्णजलभरितत्वं ध्वनितम् । गर्भोदरयोरन्यतरोपादाने तु संबन्धमात्रप्रतीतेः । घनानामुपरि गतं गमनं पिशुनयति सूचयति । 'पिशुनौ खलसूचकौ' इत्यमरः ।

१ सबाह्यक०. २ शङ्के मेघ०.

विच्छित्तिशेषैः सुरसुन्दरीणां वर्णैरमी कल्पलतांशुकेषु ।
विचिन्त्य गीतक्षममर्थजातं दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

राजा—मातले असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता मया न लक्षितः स्वर्गमार्गः । कतमस्मिन्मरुतां पथि वर्तामहे ।

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च प्रविभक्तरश्मिः ।
तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

दृष्टान्तालंकारः । अनुप्रासश्च । किंवेति निपातसमुदायः कथमर्थे । वसन्ततिलकं वृत्तम् ॥ ४ ॥ सदृशमेवैतत् । तवेत्यर्थः । तेनतादृशमेव वक्तुमुचितमिति भावः । स्तोकमल्पमन्तरमवकाशमतीत्यातिक्रम्येति कविवचनम् । मातलिः पुनस्तस्यैव स्तुतिं विवक्षन्नाह—आयुष्मन्निति । नाकपृष्ठे स्वर्गतले प्रतिष्ठितस्य सदा स्थिरत्वेन प्रतिष्ठां प्राप्तस्य । विच्छित्तीति । सुरसुन्दरीणां न तु सुरयोषितां विच्छित्तिशेषैरङ्गरागावशेषैर्यक्षकर्दमादिभिः । 'विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपि' इति विश्वः । तैः स्वहस्तेन तासामङ्गरागं कृत्वावशेषितैरित्यनेन त्वच्चरितानामतिप्रियत्वमासूचितम् । वर्णैर्वर्णकैः सितपीतादिभिरमी दिवौकसः कल्पलतांशुकेषु कल्पवल्लीवस्त्रेषु । एतेनैतदेवाधिकरणं तल्लिखनयोग्यमिति ध्वन्यते । त्वच्चरितं त्वदवदानं लिखन्ति चरितस्यालेखनासंभवादाह । गीतक्षमं गातुं योग्यमर्थजातमर्थसमूहं विचिन्त्य विचार्य त्वदीयचरितानि गीतनिबद्धानि कृत्वा लिखन्तीत्यर्थः । क्वचित् 'अर्थतत्त्वम्' इति पाठः । एवंविशिष्टकर्तृविशिष्टकरणविशिष्टाधिकरणनिर्देशेन चरितलेखनस्य वर्णितत्वादुदात्तालंकारः । तेन तेषामेवंविधसदाशृङ्गाररसोपभोग्यस्थितिस्त्वत्प्रसादादिति वस्तु ध्वनितम् । अत्र विच्छित्तिशेषस्य यक्षकर्दमादेर्वर्णकत्वेन निरूपणात्तस्य च प्रकृतोपयोगित्वाच्च परिणामालंकारश्च । श्रुतिवृत्त्यनुप्रासौ च । अष्टम्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः ॥ ५ ॥ महापुरुषत्वादस्य स्वस्तुतिश्रवणं लज्जाकरमसावपि तत्स्तुतेर्न विरमतीति राजा तस्य विषयान्तरसंचारं करोति । असुराणां दैत्यानां संप्रहार उत्सुकेन पूर्वेद्युर्दिवं स्वर्गं प्रत्यधिरोहता स्वर्गमार्गो न लक्षितः । किं तु कुत्र वर्तेत इति न ज्ञातमिति भावः । मरुतां पथि वायुस्कन्धे । तत्र सप्त वायुस्कन्धा आवहादयः । तन्मध्ये कतरस्मिन्मरुतां स्कन्धे वर्तामहे । तदुक्तं सिद्धान्तशिरोमणौ—'भूवायुरावह इह प्रवहस्तदूर्ध्वं स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः प्रति (परि) पूर्वकोऽस्माद्बाह्यापरावह इमे पवनाः प्रसिद्धाः ॥' इति । त्रिस्रोतसमिति । यो मार्गो गगने प्रतिष्ठा स्थितिर्यस्या एवंभूतां त्रिस्रोतसं



२ अयंच०. २ ह्यो न लक्षितीय प्रदेशो मया. ३ कतर०. ४ चक्रविभ०. ५ ०रश्मि. ६ तस्य व्यपेतरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरिविक्रमपूत एषः ।.

राजा—मातले अतः खलु सबाह्यान्तःकरणो ममान्तरात्मा प्रसीदति । ( रथाङ्गमवलोक्य । ) मेघपदवीमवतीर्णौ स्वः ।

मातलिः—कथमवगम्यते ।

राजा—

अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते सीकरक्लिन्ननेमिः ॥ ७ ॥

---

गङ्गां वहति । तथा च विष्णुपुराणे—'विष्णोर्विभर्ति यां भक्त्या शिरसाहर्निशं ध्रुवः । ततः सप्तर्षयो यस्यां प्राणायामपरायणाः ॥ तिष्ठन्ति वीचिमालाभिः सिच्यमानजटाजले । वायोर्वै संततैर्यस्याः प्लावितं शशिमण्डलम् ॥ भूयोऽधिकतमां कान्तिं वहत्येतदहःक्षये । मेरुपृष्ठे वहत्युच्चैर्निष्क्रान्ता शशिमण्डलात्' ॥ इति । यो मार्गः । प्रविभक्ता रश्मयोऽर्थाद्वायुरूपा एव यत्र कर्मणि । ज्योतींषि ध्रुवादिनक्षत्रान्तानि वर्तयति परिभ्रमयति । तथा च विष्णुपुराणे—'सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह । वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै' ॥ इति । तथा 'ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः । भ्रमन्त्युचितचारेण मैत्रेयानिलरश्मिभिः ॥' इति । तस्य परिवहस्य परिवहनाम्नो वायोरिमं मार्गं वदन्ति । द्वितीयो हरेर्वामनावतारे विक्रमः पादनिक्षेपस्तेन निस्तमस्कं पापरहितं शोकरहितं च । 'तमोऽन्धकारे स्वर्भानौ पापे शोके गुणान्तरे' इति हैमः । तदुक्तं वामनपुराणे—'क्रमत्रये तोयमवेक्ष्य दत्तं महासुरेन्द्रेण विभुर्यशस्वी । चक्रे ततो लङ्घयितुं त्रिलोकं त्रिविक्रमं रूपमनन्तशक्तिः ॥ कृत्वानुरूपं दितिजांश्च हत्वा प्रणम्य चर्षीन्प्रथमक्रमेण । महीं महीध्रैः सहितां महार्णवां जहार रत्नाकररत्नैर्युताम् ॥ भुवं सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिनन्दितं नभः । देवो द्वितीयेन जहार वेगात्क्रमेण देवप्रियमीप्सुरीश्वरः ॥' इति । अद्भुतमहापुरुषचरितवर्णनादुदात्तालंकारः । अनुप्रासश्च । वसन्ततिलकं वृत्तम् ॥ ६ ॥ अतः पूर्वोक्तप्रवहवायुस्कन्धसंचारतः । सबाह्यकरणो बाह्येन्द्रियसहितः । अयमिति । सीकरैरम्बुकणैः क्लिन्ना आर्द्रा नेमिश्चक्रप्रान्तो यस्य स तेऽयं रथः । अराणि चक्राङ्गानि तेषां विवरेभ्यश्छिद्रेभ्यः । 'अरं शीघ्रे च चक्राङ्गे' इति विश्वः । निष्पतद्भिर्निर्गच्छद्भिश्चातकैः पक्षिविशेषैः कृत्वाचिरभासां विद्युतां तेजसानुलिप्तैः परीतैर्हरिभी रथाश्वैश्च कृत्वा वारिगर्भाण्युदराणि येषां ते तादृशाम् । अनेन संपूर्णजलभरितत्वं ध्वनितम् । गर्भोदरयोरन्यतरोपादाने तु संबन्धमात्रप्रतीतेः । घनानामुपरि गतं गमनं पिशुनयति सूचयति । 'पिशुनौ खलसूचकौ' इत्यमरः ।

---

१ सबाह्यक०. २ शङ्के मेघ०.

मातलिः—क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते ।

राजा—( अधोऽवलोक्य । ) मातले वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथा हि ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णाभ्यन्तरलीनतां विजहाति स्कन्धोदयात्पादपाः ।
संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

मातलिः—साधु दृष्टम् । ( सबहुमानमवलोक्य । ) अहो उदाररमणीया पृथिवी ।

---

अत्र वारिगर्भोदराणामित्यस्य हेतुद्वयं प्रत्यार्थं हेतुत्वं बोद्धव्यम् । तेन हेतुकाव्यलिङ्गयोरङ्गाङ्गिभावलक्षणः संकरः । वारिगर्भोदरत्वं प्रति रथविशेषणस्यार्थे हेतुत्वं बोध्यम् । रेभ्यरिभिरभेति छेकवृत्त्यनुप्रासौ । मालिनी वृत्तम् ॥ ७ ॥ क्षणादिति रथवेगसूचनम् । स्वस्याधिकारो यस्यां सा स्वाधिकारा । सा चासौ भूमिश्च तस्याम् । **शैलानामिति** । उन्मज्जतां प्रकटीभवताम् । अत्रोन्मज्जनेन कारणेन प्राकट्यं कार्यं लक्षयता तद्गतमल्पत्वं ध्वनितम् । यत्र धर्मी लक्ष्यते तत्र तद्गता धर्मा व्यङ्ग्याः । यथा तीरे लक्षिते तद्गतपावनत्वादयः । यत्र धर्मो लक्ष्यते तत्र धर्मान्तराभावात्तद्गतो विशेष एव व्यङ्ग्यः । यथा विकासेन प्रसृतत्वे लक्षिते तद्गतातिशयित्वादीति आकर एव स्थितम् । शैलानां पर्वतानां शिखरादग्रभागात् । जात्येकवचनम् । मेदिन्यवरोहतीवाधो यातीवेत्युत्प्रेक्षा । पादपा वृक्षाः । स्कन्धानां प्रकाण्डानामुदयात्प्राकट्यात् । ‘ अस्त्री प्रकाण्डः स्कन्धः स्यात् ’ इत्यमरः । अत्रोदयशब्दः प्राकट्यं लक्षयंस्तदतिशयं ध्वनति । पर्णानां स्वतिशयेन यदन्तरं मध्यं तत्र विलीनतां तदाकारतां जहति । प्रकटीभवन्तीत्यर्थः । तनोर्भावस्तनुत्वं तेन नष्टमदृश्यं सलिलं यासां ता आपगा नद्यः संतानैर्विस्तारैः । अर्थाद्दृष्टैरित्यर्थः । ‘ संतानो विस्तृतौ देववृक्षे चापत्यगोत्रयोः ’ इति धरणिः । व्यक्तिं प्रकटतां यान्ति । पश्येति वाक्यार्थस्य कर्मत्वम् । उत्क्षिपतोर्ध्वीकुर्वतेत्युत्प्रेक्षा । केनापि भुवनं मत्पार्श्वे सन्निकटमानीयत इवेति गम्योत्प्रेक्षा । स्वभावोक्तिकाव्यलिङ्गोत्प्रेक्षयोः संसृष्टिः । तानैस्तन्विति छेकवृत्तिश्रुत्यनुप्रासाः । शार्दूलविक्रीडितं वृत्तम् । अत्र ‘ कार्श्यानाकलिताम्भसः पृथुतया व्यक्तिम् ’ इति पठित्वा स्थानस्य पदलक्षणो दोषः परिहरणीयः । एतेन संतानशब्देऽप्रयुक्तत्वं निहतार्थत्वं वा नष्टशब्दे नामप्रकटलक्षणार्थानभिधानात्तत्रावाचकत्वं च परिहृतं भवति । हेतूनामार्थत्वशाब्दत्वे भिन्नवाक्यत्वेन परिहरणीये । महावाक्यत्वेनैकवाक्यत्वेऽपि ‘ उन्मज्जनात् ’ इति पठित्वा परिहर्तव्ये ।

---

१ पर्णस्वान्तर. २ संधानं तनुभाग०; संधानै... लिङ्ग्यक्त्या व्रज०. ३ मत्पार्श्व०. ४ आयुष्मन् साधु. ५ विलोकय. ६ उदग्र.

राजा—मातले कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिस्यन्दी सांध्य इव मेघपरिघः सानुमानालोक्यते ।

मातलिः—आयुष्मन् एष खलु हेमकूटो नाम किंपुरुषपर्वतस्तपःसंसिद्धिक्षेत्रम् । पश्य ।

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥

राजा—तेन ह्यनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि ।

मातलिः—प्रथमः कल्पः ।

( नाटयेनावतीर्णौ । )

राजा—( सविस्मयम् । )

उपोढशब्दा न रथाङ्गनेमयः प्रवर्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतयाऽनिरुद्धतस्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १० ॥

'स्कन्धोदयाः' इति पाठे तु 'पृथुतराः' इति पठित्वा परिहरणीये ॥ ८ ॥ पश्येत्यस्योत्तरं साधु दृष्टमिति । सबहुमानमवलोक्येति तत्क्रियानुवादकं कविवाक्यम् । अहो आश्चर्ये । उदारा महती रमणीया च । तत्स्थानस्थित्यैकदैव सर्वस्या दृग्गोचरत्वादेवमुक्तिः । पूर्वापरसमुद्रयोरवगाढः संबद्धः । सांध्यः सायंकालीनो मेघोऽर्गल इव सानुमान्पर्वतः । अर्गलेनौपम्यं दैर्घ्यज्ञापनार्थम् । तच्च विष्णुपुराणे 'हिमवान्हेमकूटश्च निषधस्तस्य दक्षिणे । नीलश्वेतश्च भृङ्गी च उत्तरे वर्षपर्वताः । लक्ष्यमाणौ द्वौ मध्यौ' इति । जम्बुद्वीपस्यापि लक्षयोजनत्वात्पूर्वापरसमुद्रावगाढत्वं संभवत्येव । किंपुरुषेति । तदुक्तं विष्णुपुराणे—'भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम् । हरिवर्णं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥' इति । तपःसंसिद्धिक्षेत्रमित्यनेन मारीचस्य सूचनम् । स्वायंभुवादिति । [ स्वयंभुवः अपत्यं पुमान् स्वायंभुवस्तस्मात् ] स्वायंभुवाद्ब्रह्मसंबन्धिनो मरीचेर्यः प्रजापतिः कश्यपो बभूव । सुरासुरगुरुरित्यनेनावश्यं नमस्करणीयत्वं सूचयति । सपत्नीक इत्यनेन तवापि पत्नीयोगोऽत्र भावीति ध्वनितम् । छेकवृत्त्यनुप्रासौ ॥ ९ ॥ प्रथमः कल्प उत्तमः पक्षः । नाटयेनावतीर्णाविति रथावतरणमेवैतयोरारोपितं कविना । कविवाक्यं चेदम् । रथावतरणे यानि चिह्नानि तेषामजातत्वात्तदेवाह—उपोढेति । अभूतलस्पर्शतया भूमिस्पर्शाभावेन रथाङ्गनेमयश्चक्रप्रधय उपोढशब्दाः कृतस्वना न । रजश्च नेम्युद्धतं प्रवर्तमानं न दृश्यते । अनिरुद्धतोऽनिरोधात् । यतो भूतलस्पर्शे सत्यवतरणे रश्मिनिरोधो भवति । अत्र तदभावात् । अत एवाभूतलेति त्रिष्वपि हेतुत्वेन योज्यम् । तव रथोऽवतीर्णोऽपि न लक्ष्यत इति न अपि तु लक्ष्यत एव ।

१ तपसः संसिद्धिक्षेत्रम्; परं तपस्विनां क्षेत्रं-सिद्धिक्षेत्रम्. २ ( अवतरणं नाटयित्वा ) एतावतीर्णौ स्वः. ३ [illegible] निरुद्धतिः. ४ ०र्णो न.

मातलिः—एतावानेवं शतक्रतोरायुष्मतश्च विशेषः ।

राजा—मातले कतमस्मिन्प्रदेशे मारीचाश्रमः ।

मातलिः—( हस्तेन दर्शयन् । )

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

राजा—नमस्ते[3] कष्टतपसे ।

मातलिः—( संयतप्रग्रहं रथं कृत्वा । ) [4]एतौ अदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

राजा—स्वर्गादधिकतरं निर्वृतिस्थानम् । अमृतह्रदमिवावगाढोऽस्मि ।

---

तवावतीर्णोऽपि इति क्वचित्पाठः । तत्र काक्वा व्याख्येयम् । अत्र रथावतरणे कारणे सति तत्कार्याणां नेमिशब्दादीनामभावादुक्तनिमित्तकापि विशेषोक्तिः । श्रुत्यनुप्रासश्च । अवतीर्णोऽपि न लक्ष्यत इति विरोधाभासोऽपि । वंशस्थं वृत्तम् ॥ १० ॥ एतावानेवेति व्यतिरेकालंकारः । हस्तेनेत्युत्तानितेन पताकेन । वल्मीकेति । वल्मीकस्य पिपीलिकाकृतमृत्पुञ्जस्याग्रं प्रान्तस्तत्र निमग्ना मूर्तिः शरीरं यस्य सः । 'अग्रमालम्बने प्राते' इति विश्वः । 'मूर्तिः काठिन्यकाययोः' इत्यमरः । अनेनानेककालतपश्चरणमुक्तम् । संदष्टाः सर्पत्वचो यत्र तेनोरसोपलक्षितः । अनेन सर्वजन्तुसाधारणत्वमुक्तम् । कण्ठे । जीर्णेत्यनेन स्थूलत्वं बहुशाखत्वं ध्वनितम् । लताप्रतानं वल्लीसमूहः स वलय इव कण्ठरोमाणीवेत्युपमितसमासः । संपीडनस्य साधकत्वात् । 'वलयः कण्ठरोम्णि स्याद्वलयं कङ्कणेऽपि च' इति विश्वः । तेनात्यर्थसंपीडितः । अनेनापकारिण्यप्युपकारकत्वमुक्तम् । अंसयोर्व्याप्नोति तदंसव्यापि । अनेन महत्त्वमुक्तम् । शकुन्तानां पक्षिणां नीडं स्थानं तेन निचितं व्याप्तम् । 'स्थाने कुले चयः' इति विश्वः । जटानां मण्डलं समूहं बिभ्रत् । अनेन परनिमित्तसंपद्वत्त्वं द्योत्यते । स्थाणुरिवाचलो निश्चलः । स्थाणुपक्षेऽपि विशेषणानि योज्यानि । उरसा मध्येन । कण्ठ उपकण्ठे । समीप इति यावत् । अंसः स्कन्धः । जटा प्ररोहरूपा । असौ मुनिरर्कबिम्बमभि लक्ष्यीकृत्य । कर्मप्रवचनीयत्वेन तद्योगे द्वितीया । यत्र स्थितः स मारीचाश्रम इत्यन्वयः । परिकरश्लेषोपमानुप्रासाः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥ संयता नियमिताः प्रग्रहा रश्मिरज्जवो यत्र तत् । रथमित्यार्थम् । कृत्वेति कविवचनम् । रथस्य भूमिस्पृष्टत्वादिति कृत्वा मातलिर्वदतीत्यन्वयः । किमुक्तं तत्राह—एतावाश्रमं प्रविष्टौ स्व इति । अदिति-



१ °वाग्र. २ उरगत्वग्ब्रह्मसूत्रान्तरः. ३ नमोऽस्मै. ४ महाराज एतौ.

मातलिः—( रथं स्थापयित्वा । ) अवतरत्वायुष्मान् ।

राजा—( अवतीर्य । ) मातले भवान्कथमिदानीम् ।

मातलिः—संयन्त्रितो मया रथः । वयमप्यवतरामः । ( तथा कृत्वा । ) इतः आयुष्मन् । ( परिक्रम्य । ) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

राजा—ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ १२ ॥

मातलिः—उत्सर्पिणी खलु महतां प्रार्थना । ( परिक्रम्य । आकाशे । ) अये वृद्धशाकल्य किमनुतिष्ठति भगवान्मारीचः । किं ब्रवीषि । दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति ।

---

स्तत्पत्नी तया परिवर्धिता मन्दारवृक्षा यत्र । स्वर्गादधिकतरं निर्वृतिस्थानं सुखस्थानमिति भिन्नं वाक्यम् । अमृतेति । ज्ञानामृतहृदावगाहन इवेत्युत्प्रेक्षा । अत्र पूर्ववाक्यं हेतुत्वेन ज्ञेयम् । कथमिति प्रश्ने । किं करिष्यसीत्यर्थः । प्राणानामिति । सत्कल्पवृक्षेऽपि वन उचितावश्यकर्तव्या प्राणानां वृत्तिः प्राणधारणक्रियानिलेन वायुना न तु कल्पवृक्षदत्तवस्तुना । काञ्चनपद्मरेणुभिः कपिशे पिङ्गलवर्णे तोये जले धर्मार्थं न तु भोगार्थमभिषेकक्रिया स्नानविधिः । रत्नशिलातलेषु ध्यानम् । आधारमात्रपर्यवसितत्वात् । न तु रत्नशिलातलत्वेन तत्र क्रीडादि । विबुधस्त्रीसंनिधौ देवयोषिदभ्याशे संयमः । अन्यसंनिधावेव स नियमो न सिध्यति विशेषतः स्त्रीसंनिधौ ततोऽपि देवस्त्रीसंनिधावित्यर्थः । अत्र कल्पवृक्षादीनां कारणानां सद्भावे सति तत्कार्याभावे वक्तव्ये तद्विरुद्धानिलप्राणवृत्तित्वाद्युक्तेरुक्तनिमित्ता मालाविशेषोक्तिः । एतया चैतन्निवासिनां तपस्विनां धैर्यातिशयो व्यज्यते । अन्यमुनयो भूमिष्ठास्तपस्विनो यत्स्थानं तपोभिः काङ्क्षन्ति तपःफलेनेच्छन्ति तस्मिन्स्थानेऽमी तपस्यन्ति तपश्चरन्ति । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ् । 'तपसः परस्मैपदं च' इति परस्मैपदम् । तपोतप इति न्यनयेति स्तस्तेति छेकश्रुतिवृत्त्यनुप्रासाः । हेत्वलंकारो व्यङ्ग्यः । वृत्तमनन्तरोक्तम् ॥ १२ ॥ खलु यस्मादुत्सर्पिण्युपर्युपरि धावन्ती महतां प्रार्थनेति

---

१ साभिनयमव०. २ इत इत आयुष्मान्. ३ हैमसहस्रपत्रसुभगे नक्तंदिवं सद्व्रतम्.
४ पुण्या. ५ ०गृहेषु. ६ उत्कर्षिणी.

**राजा**—( कर्णं दत्वा । ) अये प्रतिपाल्यावसरः खलु प्रस्तावः ।

**मातलिः**—( राजानमवलोक्य । ) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान् यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

**राजा**—यथा भवान्मन्यते । ( इति स्थितः । )

**मातलिः**—आयुष्मन् साधयाम्यहम् । ( इति निष्क्रान्तः । )

**राजा**—( निमित्तं सूचयित्वा । )

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥

( नेपथ्ये । )

मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् । ( क )

**राजा**—( कर्णं दत्वा । ) अभूमिरियमविनयस्य । को नु खल्वेष[3] निषिध्यते । ( शब्दानुसारेणावलोक्य । सविस्मयम् । ) अये को नु खल्वयमनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ १४ ॥

---

( क ) मा क्खु चावलं करेहि । कहं गदो एव्व अत्तणो पकिदिं ।

---

पूर्वार्धस्य समर्थकत्वादर्थान्तरन्यासः । अयं प्रस्तावः पतिव्रताधर्मकथनलक्षणः । खलु निश्चितम् । प्रतिपाल्योऽवसरः समयो यस्य सः । पुनरुक्तवदाभासोऽलंकारः । अशोकवृक्षेत्यनेनात्रोपविष्टस्य शोकराहित्यं भविष्यतीति ध्वनितम् । अन्तरं मध्यमन्वेष्टुं शीलं यस्य सः । निमित्तं दक्षिणबाहुस्फुरणम् । मन इति । हे बाहो वृथा किं स्पन्दसे स्फुरसि । वृथात्वं कुत इत्याह—मनोरथाय शकुन्तलारूपाय नाशंसे । मम तु मनोरथाशंसापि नास्ति प्राप्तिस्तु दूरतो निरस्तेति भावः । मनोरथायेति विषयस्य निगरणादतिशयोक्तिः । पूर्वमवधीरितं तिरस्कृतं न तु त्यक्तं श्रेयः कल्याणं दुःखं यथा स्यात्तथा परिवर्तते व्यावर्तते । अर्थान्तरन्यासः । वृत्त्यनुप्रासोऽपि ॥ १३ ॥ कथं गत एवात्मनः प्रकृतिम् । स्वभावचापलं कृतवानेवेत्यर्थः । अभूमिरस्थानम् । अबालस्येव सत्त्वं बलं यस्य सः। अर्धेति । को नु खलु बालः केवलं कर्षणेनानायान्तं सिंहशिशुं बलात्कारेण कर्षतीति चूर्णिकया सहान्वयः । किं कर्तुम् । प्रक्रीडितुं क्रीडां कर्तुम् । मनोविनोदनार्थमिति भावः । एतेनावश्यकार्यार्थे साहसमपि क्रियेत । क्रीडार्थे तत्कारित्वे मानातिशयबलदर्पतया जगत्तृणवन्मन्यत इति ध्वन्यते । कीदृशम् । मातुरर्धपीत-

---

१ ०सरः खलु [illegible] २ सुधा. ३ खल्वविनय नि०. ४ मा क्खु मा क्खु.

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

बालः—जृम्भस्व सिंह दन्तांस्ते गणयिष्ये । ( क )

प्रथमा—अविनीत किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि । हन्त वर्धते ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृत-नामधेयोऽसि । ( ख )

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

द्वितीया—एषा खलु केसरिणी त्वां लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि । ( ग )

बालः—( सस्मितम् । ) अहो बलीयः खलु भीतोऽस्मि । ( इत्यधरं दर्शयति । ) ( घ )

राजा—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥ १५ ॥

( क ) जिम्भ सिङ्घ दन्ताइं दे गणइस्सं ।
( ख ) अविणीद किं णो अपच्चणिव्विसेसाणि सत्ताणि विप्पअरेसि । हन्त वड्ढइ दे संरम्भो । ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामहेओ सि ।
( ग ) एसा क्खु केसरिणी तुमं लङ्घेदि जइ से पुत्तअं ण मुञ्चेसि ।
( घ ) अह्महे वलिअं क्खु भीदो ह्मि ।

स्तनम् । शिशुनान्यत्कर्षणमेव दुष्करम् तत्रापि सिंहशिशुकर्षणम् तत्राप्यन्यस्मात् तत्रापि मातुः क्रोडात् तत्रापि स्तनंधयन्तमिति सर्वोत्कर्षो व्यज्यते । पुनः कीदृशम् । आमर्देनाकर्षणेनावेगेन क्लिष्टा विसंष्ठुलाः केसराः स्कन्धवाला यस्य तम् । स्वभावोक्तिः । उदात्तमनुप्रासश्च ॥ १४ ॥ यथानिर्दिष्टं सिंहबालकाकर्षणरूपं कर्म यस्य सः । तपस्विनीभ्यामिति सहार्थे तृतीया । सत्त्वानि प्राणिनो विप्रकरोषि । हन्तेति खेदे । केसरिणी सिंही त्वां लङ्घयति तवोपद्रवं किंचित्करिष्यति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति वर्तमानप्रयोगः । अह्महे आश्चर्ये । त्वद्वचनाद्वलिअं अधिकं भीतोऽस्मीति सोल्लुण्ठम् । अधरं विसृष्टं तस्यैव तत्र विनियोगात् । तदुक्तं संगीतसुधानिधौ—'विनिष्क्रान्तो विसृष्टः स्यादधरोऽलक्तकादिना । रञ्जने बालकानां च चेष्टाभेदे नियुज्यते । स्त्रीणां विलासविब्बोकहर्षादिषु च कीर्तितः ॥' इति । **महत इति** । अयं बालो महतस्तेजसो बीजं मूलम् । बाल्यान्महन्निगूढं तेजोऽस्मिन्वर्तत इत्यर्थः । स्फुलिङ्गावस्थया [ स्फुलिङ्गोऽग्निकणस्तदवस्थया ] स्थितो वह्निरिव । महतस्तेजसो बीजमित्यस्य प्रतिबिम्बमेधापेक्ष इति । उपमानुप्रासौ ॥ १५ ॥

१ एधोपेक्ष. २ तुमं केस०.

प्रथमा—वत्स एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि । ( क )

बालः—कुत्र । देह्येतत् । ( इति हस्तं प्रसारयति । ) ( ख )

राजा—कथं चक्रवर्तिलक्षणमप्यनेन धार्यते । तथा ह्यस्य

प्रलोभ्यवस्तुप्रणयप्रसारितो विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया नवोषसा भिन्नमिवैकपङ्कजम् ॥ १६ ॥

द्वितीया—सुव्रते न शक्य एष वाचामात्रेण विरमयितुम् । गच्छ त्वम् । मदीय उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति । तमस्योपहर । ( ग )

प्रथमा—तथा । ( इति निष्क्रान्ता । ) ( घ )

बालः—अनेनैव तावत्क्रीडिष्यामि । ( इति तापसीं विलोक्य हसति । ) ( ङ )

राजा—स्पृहयामि खलु दुर्ललितायास्मै ।

---

( क ) वच्छ एदं बालमिइन्दअं मुञ्च । अवरं दे कीलणअं दाइस्सं । ( ख ) कहिं । देहि णं । ( ग ) सुव्वदे ण सक्को एसो वाआमेत्तेण विरमाविदुं । गच्छ तुमं । ममकेरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि । तं से उवहर । ( घ ) तह । ( ङ ) इमिणा एव्व दाव कीलिस्सं ।

---

प्रलोभ्येति । प्रलोभ्यं प्रलोभकारकं यद्वस्तु तत्र यः प्रणयो याच्ञा प्रीतिर्वा तेन प्रसारित इति स्वभावाख्यानम् । तेन विना दर्शनासंभवात् । करो विभाति । जालवद्ग्रथिताः [ संश्लिष्टाः ] अङ्गुलयो यस्य सः । उक्तं च पुरुषलक्षणे सामुद्रे—'अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः । चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद् ध्रुवम् ॥' इति । एकं मुख्यं पङ्कजमिव । तत्प्रथमविकासित्वान्मुख्यत्वम् । कीदृक् । इद्धः समृद्धो रागो लौहित्यं यस्यास्तया । अनेनैतस्या विकाससामर्थ्यं ध्वनितम् । नवोषसा नूतनप्रातःकालेन । नूतनत्वमजरठीभावः । 'उषा रात्रौ तदन्ते स्यादत्रानव्ययमप्युषा ।' इति विश्वः । तेन भिन्नं भेदं प्राप्तम् । न तु सम्यग्विकसितम् । अत एवालक्ष्याणि पत्राणामन्तराणि संधिविभागा यस्य तत् । काव्यलिङ्गोपमे । प्रप्रेति त्रान्तरेति छेकश्रुतिवृत्त्यनुप्रासाः । अत्र बिम्बप्रतिबिम्बभावेनौपम्यादुपमाया भिन्नलिङ्गत्वं न सहृदयोद्वेगकरम् । प्रसारितमित्यस्य प्रतिबिम्बत्वेन भिन्नमित्युपात्तम् । तत्र बालककरत्वात्सम्यग्विकासो नोक्तः । वंशस्थं वृत्तम् ॥ १६ ॥ सुव्रते इति तापस्याः संबुद्धिः । वर्णै रक्तपी-

---

१ अस्मादनन्तरं निःश्वस्य.

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १७ ॥

तापसी—भवतु । न मामयं गणयति । ( पार्श्वमवलोक्य । ) कोऽत्र ऋषिकुमाराणाम् । ( राजानमवलोक्य । ) भद्रमुख एहि तावत् । मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् । ( क )

राजा—( उपगम्य । सस्मितम् । ) अयि भो महर्षिपुत्र ।

एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते कृष्णसर्पशिशुनेव चन्दनः ॥ १८ ॥

( क ) होदु । ण मं अअं गणेदि । को एत्थ इसिकुमाराणं । भद्दमुह एहि दाव । मोएहि इमिणा दुम्मोअहत्थग्गहेण डिम्भलीलाए वाहीअमाणं बालमिइन्दअं ।

तादिभिः । अस्मै इति 'स्पृहेरीप्सितः' इति संप्रदानत्वे चतुर्थी । आलक्ष्येति । अनिमित्तहासैरकारणहासैर्दन्ता मुकुला इवेत्युपमासमासः । हासानां साधकत्वात् । आ ईषल्लक्ष्या दृश्या दन्तमुकुला येषां ते तान् । अव्यक्ता वर्णा यासु ता अत एव रमणीया वचःप्रवृत्तयो वाग्व्यापारा येषां तानिति बहुव्रीहिगर्भो बहुव्रीहिः । अङ्के क्रोडे य आश्रयः स्थितिस्तत्र प्रणयो याच्ञा प्रीतिर्वा येषाम् । बालानामङ्गरजसा मलिनीभवन्ति । अत एतद्बालेत्यादिविशेषे प्रस्तुते सामान्यवचनादप्रस्तुतप्रशंसा । तया चाहमधन्य इति व्यज्यते । णीयणयीति स्तस्तेति नयान्येति छेकवृत्तिश्रुत्यनुप्रासाः । वसन्ततिलका वृत्तम् ॥ १७ ॥ दुर्मोकहस्तग्रहेण दुर्मोको मोचयितुमशक्यो हस्तेन ग्रहो यस्यार्थादस्माभिस्तेन । डिम्भलीलया बालक्रीडया बाध्यमानं बालमृगेन्द्रं मोचयेति संबन्धः । एवमिति । आश्रमस्य विरुद्धा वृत्तिर्यस्य तेन त्वया । सत्त्वानां जन्तूनां संश्रयः । सुखयतीति सुखः । सत्त्वसंश्रयश्चासौ सुखश्च । सोऽपि संयमः सम्यग्यमोऽहिंसादिः । जन्मतो जन्मारभ्य । एवं सत्त्वोपद्रवादिना किमिति दूष्यत इति संबन्धः । कृष्णसर्पशिशुना यथा चन्दनं दूष्यते । उपमानुप्रासौ । अत्रापि सामान्यधर्मस्योभयत्र यथास्थितत्वेनान्वयान्न विलिङ्गत्वं दोषः । अथ वा ' चन्दनोऽस्त्रियाम् ' इति कोशाच्चन्दन इति पठनीयम् । तदा सत्त्वसंश्रयसुख इति विशेषणमत्रापि योज्यम् । पूर्वत्रपक्षेऽपि विभक्तिविपरिणामेन योज्यम् । आश्रमेत्यादिविशिष्टस्यैवोपमेयत्वान्न न्यूनोपमात्मम् । रथोद्धता वृत्तम् ॥ १८ ॥

१ पुरुषी०. २ अवलोकयति. ३ संयमी. ४ जन्मनः; जन्मदः. ५ गुणः. ६ चन्दनम्. ७ भो णं मां गणेसि. ८ ण उण. ९ दुम्मोक्ख ( दुर्मोक्ष ). १० ग्गाहेण.

तापसी—भद्रमुख न खल्वयमृषिकुमारः । ( क )

राजा—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य । आत्मगतम् । )

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्यस्यायमङ्कात्कृतिनः प्ररूढः ॥ १९ ॥

तापसी—( उभौ निर्वर्ण्य । ) आश्चर्यमाश्चर्यम् । ( ख )

राजा—आर्ये किमिव ।

तापसी—अस्य बालकस्य तेऽपि संवादिन्याकृतिरिति विस्मितास्मि । अपरिचितस्यापि तेऽप्रतिलोमः संवृत्त इति । ( ग )

राजा—( बालकमुपलालयन् । ) नचेन्मुनिकुमारोऽयमथ कोऽस्य व्यपदेशः ।

तापसी—पुरुवंशः । ( घ )

राजा—( आत्मगतम् । ) कथमेकान्वयो मम । अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

---

( क ) भद्दमुह ण हु अअं इसिकुमारओ । ( ख ) अच्छरिअं अच्छरिअं । ( ग ) इमस्स बालअस्स दे वि संवादिणी आकिदि त्ति विह्मिदह्मि । अपरिइदस्स वि दे अप्पडिलोमो संवुत्तो त्ति । ( घ ) पुरुवंसो ।

---

आकारेति । आकारश्चेष्टितम् । ऋषिकुमारोऽयं न भवतीति कथयतीत्यर्थः । स्थानप्रत्ययात्स्थानविश्वासात् । यथाभ्यर्थितं बालमृगेन्द्रमोचनमनुतिष्ठन्कुर्वन् । अनेनेति । कस्याप्यज्ञायमानस्याथ वा वाचा वर्णयितुमशक्यस्य कुलेऽङ्कुरेणाल्पदिनजातत्वकोमलत्वमनोहरत्वादिनाङ्कुररूपेणानेन गात्रेषु द्वित्रेष्ववयवेषु स्पृष्टस्य न तु सर्वाङ्गस्पृष्टस्य ममैवं वक्तुमशक्यमनुभवैकगम्यं विगलितवेद्यान्तरं यदि तदा कृतिनः । अयमेव कृतीत्यर्थः । यस्याङ्कादुत्सङ्गादयं प्ररूढो वृद्धिं प्राप्तस्तस्य चेतसि कां निर्वृतिं किं सुखं कुर्यादिति न ज्ञायत इति भावः । तस्य सुखानुभवे प्राकरणिकेनार्थेन तत्पित्रादेः सुखातिशयस्यार्थादापतनादर्थापत्तिरलंकारः । रूपकम् । तसितस्येति कात्कृतीति छेकवृत्तिश्रुत्यनुप्रासाः । इन्द्रवज्रोपेन्द्रवज्रयोः प्रथमोपजातिः ॥ १९ ॥ उभौ बालदुष्यन्तौ । निर्वर्ण्य दृष्ट्वा । अस्य बालस्य तव च संबन्धेन संवादिनी सदृश्याकृतिरिति विस्मापितास्मि । अपरिचितस्यापि तेऽप्रतिलोमोऽनुकूलः संवृत्त इति विस्मापितास्मीत्यनुषज्यते । कोऽस्य व्यपदेशः किं कुलम् । पुरुवंशः । अन्त्यं

---

१ अज्ञात्...प्रसूतः. २ ०योऽयमस्माकम्. ३ ०स्स रूवसंवादिणी दे ( ते ) आ०. ४ विह्मिदह्मि ( विस्मिता ). ५ पोरवो त्ति.

भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चात्तरुमूलानि गृहीभवन्ति तेषाम् ॥ २० ॥

( प्रकाशम् । ) न पुनरात्मगत्या मानुषाणामेष विषयः ।

तापसी—यथा भद्रमुखो भणति । अप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता । ( क )

राजा—( अपवार्य । ) हन्त द्वितीयमिदमाशाजननम् । ( प्रकाशम् । ) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ।

तापसी—कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति । ( ख )

राजा—( स्वगतम् । ) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि । अथ वानार्यः परदारव्यवहारः ।

( प्रविश्य मृन्मयूरहस्ता । )

---

( क ) जह भद्दमुहो भणादि । अच्छरासंबन्धेण इमस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा । ( ख ) को तस्स धम्मदारपरिच्चाइणो णाम संकीतिदुं चिन्तिस्सदि ।

---

दानप्रस्थाश्रमविषयम् । भवनेष्विति । पूर्वं यौवने ये राजानः । रसो रागः शृङ्गारादिश्च मधुरादिश्चास्वादश्च । एते अधिका येषु । एतैर्वाधिकान्युत्तमानि तेषु । 'रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे ॥' इति विश्वः । भवनेषु गृहेषु । क्षितिरक्षार्थं पृथ्वीरक्षणाय । निवासं स्थितिमुशन्ति वाञ्छन्ति । 'वश कान्तौ' इति धातुः । 'कान्तिरिच्छा' इति क्षीरतरंगिणीकारः । तत्र केवलं महीरक्षार्थे स्थितिवाञ्छैव । न तत्त्वतः स्थितिरिति भावः । पश्चाद्वार्द्धके । तेषां राज्ञां तरुमूलानि गृहीभवन्ति वानप्रस्थाश्रमं विधायाश्रमे निवसन्तीत्यर्थः । कीदृशानि तरुमूलानि नियमयुक्ता तपःसंतोषादियुतैका केवला पतिव्रता धर्मपत्नी येषु तानि । एतेन तत्पुत्रजन्मादिसंभावनापाकृता । रूपकानुप्रासौ । मालभारिणी वृत्तम् ॥ २० ॥ आत्मगत्या स्वभावगत्या । मानुषस्वरूपेणेति यावत् । एष देशो मानुषाणां विषयो न पुनरिति संबन्धः । एवमुभयथात्मस्पर्शित्वमेवाभिव्यक्तम् । यथा भद्रमुखो भणति । तत्तथैवेत्यार्थम् । अप्सरःसंबन्धेनास्य बालस्य जनन्यत्र देवगुरोः कश्यपस्य तपोवने प्रसूता । हन्तेति हर्षे । एको वंश एकमिदमिति द्वितीयम् । कस्तस्य इति । संकीर्तनार्थं हृदि चिन्तनेऽपि दोषः । संकीर्तने पुनः किं वक्तव्यमिति भावः । 'अस्त्येतत्पौरवाणाम्' इत्यादिना 'परदारव्यवहारः' इत्य-

---

१ सुधासितेषु. २ पतिः मुनि. ३ आत्मगतं. ४ अन्याय्यः; अन्यायः.

तापसी—सर्वदमन शकुन्तलावण्यं प्रेक्षस्व । ( क )

बालः—( सदृष्टिक्षेपम् । ) कुत्र वा मम माता । ( ख )

उभे—नामसादृश्येन वञ्चितो मातृवत्सलः । ( ग )

द्वितीया—वत्स अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि । ( घ )

राजा—( आत्मगतम् । ) किं वा शकुन्तलेत्यस्य मातुराख्या । सन्ति पुनर्नामधेयसादृश्यानि । अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ।

बालः—मातः रोचते म एष भद्रमयूरः । ( इति क्रीडनकमादत्ते । ) ( ङ )

प्रथमा—( विलोक्य । सोद्वेगम् । ) अहो रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते । ( च )

राजा—अलमावेगेन । नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम् । ( इत्यादातुमिच्छति । )

उभे—मा खल्वेतदवलम्ब्य—कथं गृहीतमनेन । ( इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः । ) ( छ )

---

( क ) सव्वदमण सउन्दलावण्णं पेक्ख । ( ख ) कहिं वा मे अज्जू ।
( ग ) णामसारिस्सेण वञ्चिदो माउवच्छलो ।
( घ ) वच्छ इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्ख त्ति भणिदो सि ।
( ङ ) अज्जुए रोअदि मे एसो भद्दमोरओ ।
( च ) अह्मेहे रक्खाकरण्डअं से मणिबन्धे ण दीसदि ।
( छ ) मा क्खु एदं अवलम्बिअ—कहं गहीदं णेण ।

---

न्तेन विबोधनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'कार्यस्यान्वेषणं युक्त्या विबोधः परिकीर्तितः' इति । शकुन्तस्य पक्षिणो लावण्यम् । अथ शकुन्तलाया वर्णं पश्येति श्लेषवक्रोक्त्यलंकारः । 'राजा—यदि तावदस्य' इत्यादिना 'मातुराख्या' इत्यन्तेनाक्षरसंघातकं नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'वाक्यमक्षरसंघातो भिन्नार्थश्लिष्टवर्णकम्' इति । अपि नामेति । यथा मृगतृष्णिका विषादाय कल्पते तद्वन्नाममात्रप्रस्ताव इत्यर्थः । अत्र सन्ति पुनर्नामधेयसादृश्यानीति हेतुत्वेन योज्यम् । अह्मेहे इति खेदे । रक्षाकरण्डकं रक्षावीटिका । उरोनिहितहस्ते इति विस्मयाभिनयः । अनेन अद्भुतरसो व्यज्यते । उक्तं च आदिभरतेन—'निर्वहणे



१ विषादाय. २ अलमल. ३ आत्तप. ४ मा क्खु मा क्खु.

राजा—किमर्थं प्रतिषिद्धाः स्मः।[1]

प्रथमा—शृणोतु महाराजः। एषापराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता। एतां किल मातापितरावात्मानं च वर्जयित्वापरो भूमिपतितां न गृह्णाति। (क)

राजा—अथ गृह्णाति।

प्रथमा—ततस्तं सर्पो भूत्वा दशति। (ख)

राजा—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया।

उभे—अनेकशः। (ग)

राजा—( सहर्षम्। आत्मगतम्। ) कथमिवं संपूर्णमपि मे मनोरथं[2] नाभिनन्दामि। ( इति बालं परिष्वजते। )

द्वितीया—सुव्रते एहि। इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः। (घ)

( इति निष्क्रान्ते। )

बालः—मुञ्च माम्। यावन्मातुः सकाशं गमिष्यामि।[3] (ङ)

राजा—पुत्रक मया सहैव मातरमभिनन्दिष्यसि।

बालः—मम खलु तातो दुष्यन्तः। न त्वम्। (च)

राजा—( सस्मितम्। ) एष विवाद एव प्रत्याययति।

( ततः प्रविशत्येकवेणीधरा शकुन्तला। )

---

(क) सुणादु महाराओ। एसा अवराजिदा णाम ओसही इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा। एदं किल मादापिदरो अप्पाणं च वज्जिए अवरो भूमिपडिदं ण गेण्हादि।

(ख) तदो तं सप्पो भविअ दंसइ। (ग) अणेएसो।

(घ) सुव्वदे एहि। इमं वुत्तन्तं णिअमव्वावुडाए सउन्दलाए णिवेदेह्म।

(ङ) मुञ्च मं। जाव अज्जूए सआसं गमिस्सं।

(च) मम क्खु तादो दुस्सन्दो। ण तुमं।

---

कर्तव्यो नित्यं हि रसोऽद्भुतः कविभिः' इति। अनेनोपगूहनलक्षणमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'अद्भुतस्य तु या प्राप्तिर्भवेत्तदुपगूहनम्' इति। भगवता मारीचेन काश्यपेन दत्ता। 'प्रथमा—सुणादु महाराओ' इत्यादिना 'अणेअसो' इत्यन्तेन पूर्वभावनामकमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—'पूर्वभावस्तु विज्ञेयो यथार्थोक्तोपदेशकः' इति। नियमव्यापृतायै। अनेनाद्यापि त्वत्प्राप्त्यर्थं नियमकारित्वमुक्तम्। प्रत्याय-

---

१ भवतीभ्यां प्रतिषिद्धोऽस्मि. २ कथमिमं पूर्णं म०; तत्किं खलु इदानीं पूर्णमात्मनो मनो०. ३ गच्छामि.

शकुन्तला—विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशासीदात्मनो भागधेयेषु । अथ वा यथा सानुमत्याख्यातं तथा संभाव्यत एतत् । ( क )

राजा—( शकुन्तलां विलोक्य । ) अये सेयमत्रभवती शकुन्तला यैषा

वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

शकुन्तला—( पश्चात्तापविवर्णं राजानं दृष्ट्वा । ) न खल्वार्यपुत्र इव । ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति । ( ख )

बालः—( मातरमुपेत्य । ) मातः एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति । ( ग )

राजा—प्रिये क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तं यदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

---

( क ) विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु । अह वा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं ।

( ख ) ण क्खु अज्जउत्तो विअ । तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ।

( ग ) अज्जुए एसो को वि पुरिसो मं पुत्त त्ति आलिङ्गदि ।

---

यतीत्येतावत्पर्यन्तं प्रत्ययो नोत्पन्न एवेति भावः । विकारकालेऽपि–संभाव्यत एतत् । अनेन समयाख्यमङ्गमुपक्षिप्तम् । तल्लक्षणम्—' दुःखस्यापगमो यस्तु समयः स निगद्यते ' इति । वसने इति । परितः सर्वतो धूसरे नोज्ज्वले । इदमेव विधेयम् । वसने अन्तरीयसंव्याने वसाना । नियमेन तपआदिना क्षामं कृशं मुखं यस्याः सा । अत्रापावृतमुख्या मुखस्यैव दर्शनात्क्षाममुखीत्युक्तिः । अनेन नाभिग्रहस्थितावप्यतिशयलज्जालुत्वं व्यज्यते । मुखापवरणं तु चिरतरकालतद्दर्शनोत्कण्ठया तदर्थमेव च प्रवृत्तेरिति नानौचित्यम् । धृतैका वेणिर्यस्याः सा । यत एतादृश्यत एव शुद्धशीला शुद्धस्वभावा । अतिनिष्करुणस्यातिशयकृपाहीनस्य मम मत्संबन्धिनं दीर्घं बहुकालीनं विरहव्रतं बिभर्ति । काव्यलिङ्गस्वभावोक्ती । वसवसेति सनेसानेति छेकानुप्रासवृत्त्यनुप्रासौ । वृत्तमनन्तरोक्तम् ॥ २१ ॥ ' राजा—' इत्यादिनैतदन्तेन संधिर्नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—' मुखबीजोपगमनं संधिरित्यभिधीयते ' इति । न खल्वार्यपुत्र इव । पश्चात्तापविवर्णत्वं हेतुत्वेन योज्यम् । अनुकूलः परिणामः परिपाको यस्य तत् । त्वं



१ दृष्ट्वा. २ दधाना. ३ दुःख. ४ तद्...त्मानमिच्छामि. ५ सङ्गेण. ६ परकेरओ.

शकुन्तला—( आत्मगतम् । ) हृदय समाश्वसिहि समाश्वसिहि । परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन । आर्यपुत्रः खल्वेषः । ( क )

राजा—प्रिये ।

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिनः[१] समुपगता[२] रोहिणी योगम् ॥ २२ ॥

शकुन्तला—जयतु जयत्वार्यपुत्रः । ( इत्यर्धोक्ते बाष्पकण्ठी[३] विरमति ) । ( ख )

राजा—सुन्दरि ।

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ २३ ॥

( क ) हिअअ समस्सस समस्सस । परिच्चत्तमच्छरेण अणुअम्पिआह्मि देव्वेण अज्जउत्तो क्खु एसो । ( ख ) जेदु जेदु अज्जउत्तो ।

यदागतासि तदा मया न प्रत्यभिज्ञातासि । मयि पुनरागते त्वया प्रत्यभिज्ञात इत्यनुकूलपरिणामता । 'हृदय'—अनेनानन्दनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'समागमस्तु योऽर्थानामानन्दः स तु कीर्त्यते ।' इति । स्मृतीति । मोहस्तमो राहुरिव मोहतमः । अनेनोपमानेन राज्ञा तस्य गाढत्वमुक्तम् । 'तमस्तु राहुः स्वर्भानुः' इत्यमरः । उपमासाधकमनन्तरमेव वक्ष्यामः । स्मृत्या भिन्नं दूरीकृतं मोहतमो यस्य । मे मम प्रमुखे संमुखे दिष्ट्या दैवेन हे सुमुखि स्थितासि । सुमुखीति साभिप्रायम् । सुमुखस्यैव संमुखे स्थातुं योग्यत्वात् । उपरागान्ते ग्रहान्ते । शशिनश्चन्द्रस्य रोहिणी नक्षत्रविशेषो योगं संवन्धं समुपगता । अत्र मुखेमुखीति सिमेसम्विति छेकानुप्रासः । संदेहसंकरः । बहूनां सकारादीनां दन्त्याक्षराणां मकारादीनामोष्ठ्याक्षराणां सत्त्वाच्छ्रुत्यनुप्रासः । अर्थाभ्यां यत्तद्भ्यामेकवाक्यत्वात्संभवद्वस्तुसंवन्धान्निदर्शनम् । मोहतम इत्येकदेशविवर्तिन्युपमाने तत्स्मृतेर्नियतत्वमप्युपमितम् । ततश्च विशेषणत्वेनापि योज्यम् । नियत्याभिन्नं मोहवत्तमो राहुर्यस्येत्युपमासाधिका चात्र निदर्शनैव । अन्ये तु दृष्टान्तमेवाहुः । अन्ये साधकबाधकप्रमाणाभावादुभयोः संदेहसंकरमाहुः ॥ २२ ॥ बाष्पेणेति । बाष्पेणाश्रुप्रारम्भेण । एतेन चातिविरहक्लान्तत्वं व्यज्यते । [ जयशब्दे जयत्वार्यपुत्र इति शब्दे प्रतिषिद्धे निरुद्धेऽपि मया जितम् । यद्यस्माद् असंस्कारात्संस्काराभावात् पाटलमीषद्रक्तं ओष्ठयोः पुटं यस्य ] एतादृशं ते मुखं दृष्टमिति विशिष्टं विधेयम् । विशिष्टमुखदर्शनेन च विरहनाशः । अत एव जय इत्यवधातव्यम् । जयशब्दे प्रतिषिद्धेऽपि जितमिति विरोधाभासः । जितं प्रत्युत्तरार्धस्य हेतुत्वेनोपादानात्काव्यलिङ्गमपि । श्रुतिवृत्त्यनुप्रासौ ॥ २३ ॥

१ शशिना. २ गतो रोहिणीयोगः. ३ बाष्पसन्न°.

बालः—मातः क एषः । ( क )

शकुन्तला—वत्स ते भागधेयानि पृच्छ । ( ख )

राजा—( शकुन्तलायाः पादयोः प्रणिपत्य । )

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

शकुन्तला—उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः । ( ग )

---

( क ) अज्जुए को एसो । ( ख ) वच्छ दे भाअहेआइं पुच्छेहि ।

( ग ) उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणामाहिमुहं आसि जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो ।

---

वत्स ते भागधेयानि पृच्छ । क्वचित्पुस्तके 'पुच्छेहि' इति नास्ति। तस्मिन्पाठे रूपकम्। सुतन्विति । कृतनावप्रीतिर्न सुतनाविति संबोधनं हे सुतन्विति । तव हृदयात्प्रत्यादेशव्यलीकं निराकरणाप्रियमपैतु दूरीभवतु । 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः। अप्रियस्य हृदयात्त्यागेऽर्थतः सिद्धेऽपि पुनस्तद्ग्रहणं विप्रियं मया त्यक्तमिति वाङ्मात्रेण न त्यागः, अपि तु तत्संस्कारोन्मूलनपूर्वकं त्यागः, इति ध्वनति । किमर्थमप्रियं कृतं तत्राह । किमपीषन्मनो यस्यासौ किमपिमनास्तस्य किमपिमनसो मे मम तदा त्वद्दर्शनसमये बलवानधिकः । संमोहोऽज्ञानमभूदिति विशिष्टं विधेयम् । तेन संमोहेन मन्मनःसमुन्मूलनं जातमित्यर्थः । तेन चित्ताभावात्कृतमिदं क्षन्तव्यमिति भावः । संमोहान्मनःसमुन्मूलनं जातमित्यस्य शाब्दे विधेयत्वे वक्तव्ये पदार्थविधेयत्वं तत्संमोहस्य प्राधान्यद्योतनाय । तेन संमोहस्य मनोधर्मत्वान्मनसः संमोहो जात इत्यार्थे पौनरुक्त्यं निरस्तम् । प्रबलेति । प्रबलतमसामधिकसंमोहानाम् । अत्र प्रबलतमःशब्देनाधिकशोक उच्यते । तज्जन्यः संमोहो लक्ष्यते । तदतिशयो व्यज्यते । अतएवोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गो नाशङ्कनीयः । 'तमः शोके गुणान्तरे' इति विश्वः। शुभेषु कार्येषु । एवंप्रायाः शुभत्यागरूपाः प्रवृत्तयो भवन्ति । इत्यर्थान्तरन्यासः। दृष्टान्तमप्याह—स्रजमिति । अन्धः शिरःस्थापितां स्रजं मालामप्यहिशङ्कया सर्पशङ्कया धुनोति तिरस्करोति । अहिशङ्कयेति भ्रान्तिमान् । काव्यलिङ्गश्रुत्यनुप्रासौ।

---

१ मनु० २ असत्व० ३ [illegible]मसुहं.

( राजोत्तिष्ठति । )

शकुन्तला—अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः । ( क ).

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो बद्धविन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

( इति यथोक्तमनुतिष्ठति ।

---

( क ) अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।

---

क्रमक्रिमेति मपैमपीति बलबलेति छेकानुप्रासः । हरिणी वृत्तम् ॥ २४ ॥ 'राजा शकुन्तलायाः पादयोः प्रणिपत्य' इत्यादिनानुनयो नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः ।' इति । नूनं निश्चितं पुराकृतं कर्मेत्यर्थः । तेषु दिवसेषु परिणाममुखं परिपाकोन्मुखमासीद्येन सानुक्रोशोऽपि सकृपोऽप्यार्यपुत्रो मयि विरसो विरागः संवृतः । उद्धृतविषादशल्य इत्युपमा । इह श्लोके शोकस्य वक्ष्यमाणत्वाद् अतिखेदत्वं व्यङ्ग्यम् । मोहादिति । हे सुतनु मया परमविवेकिना धर्मभीरुणा परमविदग्धेन दुष्यन्तेनेत्यर्थान्तरसंक्रान्तम् । मोहादज्ञानात्ते तव । बाष्पबिन्दुः जात्येकवचनम् । उपेक्षितो न मार्जितोऽत एवाधरं परितः सर्वतो बाधमानः स्थित इति शेषः । अनेन बिन्दूनामनवरतपातिता स्थूलतोष्णताऽव्ययावस्थितिश्च ध्वनिता । तेन मार्जनकारणसामग्र्यां सत्यामपि यत्तदनुपत्तिः सा विशेषोक्तिः । मोहादिति निमित्तस्योक्तत्वादुक्तनिमित्तता । तावदादावादित्वकथनापेक्षया ते बाष्पं प्रमृज्य प्रोञ्छ्य विगतानुशयो गतपश्चात्तापो भवेयम् । आशंसायां लिङ् । कीदृशम् । आ ईषत्कुटिलं यत्पक्ष्म तत्र विलग्नं संबद्धम् । अनेनास्य बाष्पस्य बिन्दुत्वाभावस्तदभावेनाधरपीडनाभावश्च ध्वनितः । ननु तस्य बाष्पस्यातीतत्वात्तमिति तच्छेषनिर्देशः कथमिति चेदुच्यते । यतश्चिरानुभूतान्यपि बन्धुदर्शनाज्जनस्य दुःखानि नवीभवन्तीत्युक्तदिशा एनं दृष्ट्वा तस्याः पूर्वदुःखस्मरणेन यो बाष्प उत्पन्नः स तच्छब्देन राज्ञा परामृष्टः दुःखहेतुत्वादुभयोः । आकुटिलेति व्यतिरेकः । यतस्तदा शोकावेगवशाद्बिन्दुरूप एवोत्पन्नः । अधुना क्रमिकत्वात्तदवस्थस्य भाव इति बोद्धव्यम् । अत एतत्प्रमार्जनेन विगतानुशयत्वम् । इदमेवोद्धृतविषादशल्यत्वम् । यतोऽपराधादिनानुशयो हि विषादः । श्रुतिवृत्त्यनुप्रासौ । वसन्ततिलकं वृत्तम् ॥२५॥ यथोक्तमनुतिष्ठति बाष्पमार्जनं करोतीत्यर्थः । अनेन कथयिष्यामीति यदुक्तं तत्प्रसङ्गोऽप्युपदर्शितः ।

---

१ बाष्प० २ परिबाध० ३ कान्ते०

**बालः**—मातः क एषः । ( क )

**शकुन्तला**—वत्स ते भागधेयानि पृच्छ । ( ख )

**राजा**—( शकुन्तलायाः पादयोः प्रणिपत्य । )

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ २४ ॥

**शकुन्तला**—उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः । ( ग )

---

( क ) अज्जुए को एसो । ( ख ) वच्छ दे भाअहेआइं पुच्छेहि ।

( ग ) उट्ठेदु अज्जउत्तो । णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणामाहिमुहं आसि जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो ।

---

वत्स ते भागधेयानि पृच्छ । क्वचित्पुस्तके 'पुच्छेहि' इति नास्ति । तस्मिन्पाठे रूपकम् । **सुतन्विति** । कृतनावप्रीतिर्न सुतनाविति संबोधनं हे सुतन्विति । तव हृदयात्प्रत्यादेशव्यलीकं निराकरणाप्रियमपैतु दूरीभवतु । 'व्यलीकं त्वप्रियेऽनृते' इत्यमरः । अप्रियस्य हृदयात्त्यागेऽर्थतः सिद्धेऽपि पुनस्तद्ग्रहणं विप्रियं मया त्यक्तमिति वाङ्मात्रेण न त्यागः, अपि तु तत्संस्कारोन्मूलनपूर्वकं त्यागः, इति ध्वनति । किमर्थमप्रियं कृतं तत्राह । किमपीषन्मनो यस्यासौ किमपिमनास्तस्य किमपिमनसो मे मम तदा त्वद्दर्शनसमये बलवानधिकः । संमोहोऽज्ञानमभूदिति विशिष्टं विधेयम् । तेन संमोहेन मन्मनःसमुन्मूलनं जातमित्यर्थः । तेन चित्ताभावात्कृतमिदं क्षन्तव्यमिति भावः । संमोहान्मनःसमुन्मूलनं जातमित्यस्य शाब्दे विधेयत्वे वक्तव्ये पदार्थविधेयत्वं तत्संमोहस्य प्राधान्यद्योतनाय । तेन संमोहस्य मनोधर्मत्वान्मनसः संमोहो जात इत्यार्थे पौनरुक्त्यं निरस्तम् । प्रबलेति । प्रबलतमसामधिकसंमोहानाम् । अत्र प्रबलतमःशब्देनाधिकशोक उच्यते । तज्जन्यः संमोहो लक्ष्यते । तदतिशयो व्यज्यते । अतएवोद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गो नाशङ्कनीयः । 'तमः शोके गुणान्तरे' इति विश्वः । शुभेषु कार्येषु । एवंप्रायाः शुभत्यागरूपाः प्रवृत्तयो भवन्ति । इत्यर्थान्तरन्यासः । दृष्टान्तमप्याह—स्रजमिति । अन्धः शिरःस्थापितां स्रजं मालामप्यहिशङ्कया सर्पशङ्कया धुनोति तिरस्करोति । अहिशङ्कयेति भ्रान्तिमान् । काव्यलिङ्गश्रुत्यनुप्रासौ ।

---

१ प्रवृ० २ अप्र० ३ ०णाममुखं.

( राजोत्तिष्ठति । )

शकुन्तला—अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः । ( क ).

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु पूर्वमुपेक्षितस्ते
यो वद्धविन्दुरधरं परिवाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
वाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥ २५ ॥

( इति यथोक्तमनुतिष्ठति ।

---

( क ) अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ।

---

क्रमकिमेति मपैमपीति वलवलेति छेकानुप्रासः । हरिणी वृत्तम् ॥ २४ ॥ 'राजा शकुन्तलायाः पादयोः प्रणिपत्य' इत्यादिनानुनयो नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—'अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः ।' इति । नूनं निश्चितं पुराकृतं कर्मेत्यर्थः । तेषु दिवसेषु परिणाममुखं परिपाकोन्मुखमासीद्येन सानुक्रोशोऽपि सकृपोऽप्यार्यपुत्रो मयि विरसो विरागः संवृतः । उद्धृतविषादशल्य इत्युपमा । इह श्लोके शोकस्य वक्ष्यमाणत्वाद् अतिखेदत्वं व्यङ्ग्यम् । मोहादिति । हे सुतनु मया परमविवेकिना धर्मभीरुणा परमविदग्धेन दुष्यन्तेनेत्यर्थान्तरसंक्रान्तम् । मोहादज्ञानात्ते तव । वाष्पविन्दुः जात्येकवचनम् । उपेक्षितो न मार्जितोऽत एवाधरं परितः सर्वतो वाधमानः स्थित इति शेषः । अनेन विन्दूनामनवरतपातिता स्थूलतोष्णताऽव्ययावस्थितिश्च ध्वनिता । तेन मार्जनकारणसामग्र्यां सत्यामपि यत्तदनुपत्तिः सा विशेषोक्तिः । मोहादिति निमित्तस्योक्तत्वादुक्तनिमित्तता । तावदादावादित्वकथनापेक्षया ते वाष्पं प्रमृज्य प्रोञ्छ्य विगतानुशयो गतपश्चात्तापो भवेयम् । आशंसायां लिङ् । कीदृशम् । आ ईषत्कुटिलं यत्पक्ष्म तत्र विलग्नं संवद्धम् । अनेनास्य वाष्पस्य विन्दुत्वाभावस्तदभावेनाधरपीडनाभावश्च ध्वनितः । ननु तस्य वाष्पस्यातीतत्वात्तमिति तच्छेषनिर्देशः कथमिति चेदुच्यते । यतश्चिरानुभूतान्यपि वन्धुदर्शनाज्जनस्य दुःखानि नवीभवन्तीत्युक्तदिशा एनं दृष्ट्वा तस्याः पूर्वदुःखस्मरणेन यो वाष्प उत्पन्नः स तच्छब्देन राज्ञा परामृष्टः दुःखहेतुत्वादुभयोः । आकुटिलेति व्यतिरेकः । यतस्तदा शोकावेगवशाद्विन्दुरूप एवोत्पन्नः । अधुना क्रमिकत्वात्तदवस्थस्य भाव इति वोद्धव्यम् । अत एतत्प्रमार्जनेन विगतानुशयत्वम् । इदमेवोद्धृतविषादशल्यत्वम् । यतोऽपराधादिनानुशयो हि विषादः । श्रुतिवृत्त्यनुप्रासौ । वसन्ततिलकं वृत्तम् ॥२५॥ यथोक्तमनुतिष्ठति वाष्पमार्जनं करोतीत्यर्थः । अनेन कथयिष्यामीति यदुक्तं तत्प्रसङ्गोऽप्युपदर्शितः ।

---

१ वाष्प. २ परिवाध०. ३ काले.

**शकुन्तला**—( नाममुद्रां दृष्ट्वा । ) आर्यपुत्र इदं तदङ्गुलीयकम् । ( क )

**राजा**—अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।

**शकुन्तला**—विषमं कृतमनेन यत्तदार्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् । ( ख )

**राजा**—तेन हि ऋतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

**शकुन्तला**—नास्य विश्वसिमि । आर्यपुत्र एवैनद्धारयतु । ( ग )

( ततः प्रविशति मातलिः । )

**मातलिः**—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ।

**राजा**—अभूत्संपादितस्वादुफलो मे मनोरथः । मातले न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् ।

**मातलिः**—( सस्मितम् । ) किमीश्वराणां परोक्षम् । एत्वायुष्मान् । भगवान्मारीचस्ते दर्शनं वितराति ।

**राजा**—शकुन्तले अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

**शकुन्तला**—जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् । ( घ )

**राजा**—अप्याचरितव्यमभ्युदयकालेषु । एह्येहि ।

( सर्वे परिक्रामन्ति । )

( ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः । )

---

( क ) अज्जउत्त एदं तं अङ्गुलीअअं ।
( ख ) विसमं किदं णेण जं तदा अज्जउत्तस्स पच्चअकाले दुल्लहं आसि ।
( ग ) ण से विस्ससामि । अज्जउत्तो एव्व णं धारेदु ।
( घ ) हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

---

अङ्गुलीयस्योपलम्भः प्राप्तिस्तस्मात् । तेन कारणेन हि निश्चितं लता कर्त्री ऋतोः समवायः संबन्धस्तस्य चिह्नं कुसुमं प्रतिपद्यताम् । अत्र त्वयाङ्गुलीयकं धारणीयमिति प्रस्तुते यल्लताकुसुमवृत्तान्तोऽन्यः प्रस्तुत उक्तः सादृश्येन साप्रस्तुतप्रशंसा । 'राजा—प्रिये, स्मृतिभिन्न—' इत्यादिनैतदन्तेन परिभाषणं नामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'मिथः संजल्पनं यत्स्यात्तदाहुः परिभाषणम् ।' इति । 'राजा—अभूत्संपादितस्वादुफलो मे मनोरथः ।' इत्यनेन प्रहर्षनामा नाट्यालंकार उपाक्षिप्तः । तल्लक्षणं तु—'प्रहर्षः प्रमदाद्वाक्यम्' इति । अभ्युदयकालेषु मङ्गलो-

---

१ मद्दृष्टबाष्पाऽङ्गुलीयकं विलोक्य. २ अथ किम् । अस्मा०. ३ खलु मया. ४ सुहृत्संपादितत्वात्साधुतरफलः. ५ एह्यायुष्मन्. ६ भग० मारीचं. ७ अयि...काले. ८ इदं-एवं ते. ९ [illegible]

मारीचः—( राजानमवलोक्य । ) दाक्षायणि ।

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥ २६ ॥

अदितिः—संभावनीयानुभावास्याकृतिः । ( क )

मातलिः—आयुष्मन् एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः । तावुपसर्प ।

राजा—मातले ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥ २७ ॥

---

( क ) संभावणीआणुभावा से आकिदी ।

---

त्सवादिसमयेष्विदमाचरितव्यमेव । दाक्षायणि दक्षपुत्रि । पुत्रस्येति । अयं दुष्यन्त इत्यभिहितः इति नामपरामर्शाच्छब्दपरो निर्देशः । तेन दुष्यन्तनामधेयक इत्यर्थः । भुवनस्य भर्ता भूमण्डलस्य पालकः । ते तव पुत्रस्येन्द्रस्य रणशिरस्यग्रयाय्यग्रेसरः । इदमेव विधेयम् । यस्य चापेन धनुषा विनिवर्तितकर्म समापितकार्यं कोटिमदित्यकुण्ठकोटिमदित्यर्थः । तेन युद्धक्षमत्वं ध्वन्यते । एतादृगपि मघोनः कुलिशं वज्रमाभरणं जातम् । वीर्यलक्षणस्य वस्तुनोऽतिशयितत्वेन वर्णनादुदात्तं रूपकं च । स्यस्येति ययायीति छेकवृत्त्यनुप्रासौ च । वसन्ततिलकं वृत्तम् ॥ २६ ॥ संभावनीयोऽनुभावः प्रभावो यस्याः सा । पुत्रप्रीतिपिशुनेन पुत्रस्नेहसूचकेन । 'पिशुनौ खलसूचकौ' इत्यमरः । इन्द्रोऽनयोः पुत्रस्तस्य त्वं मित्रम् । अतस्त्वमपि पुत्रप्रायः । पुत्रस्नेह इत्यर्थः । दिवौकसां देवानां पितरावदितिकश्यपौ । प्राहुरिति । मुनयो व्यासादयः । इत्यनेनैषां विप्रलम्भकरणपाटवादिराहित्यं ध्वन्यते । तेन च तदुक्तेर्वेदानुमानेन प्रामाण्यम् । द्वादशधा स्थितस्य द्वादशसु मासेषु द्वादशमूर्तिधरस्य तेजसः सूर्यस्य यत्कारणं निदानमामनन्ति । जगत्प्रदीपस्य विश्वाशेषक्रियाकलापकारणभूतस्योत्पादकत्वेन तेजोराशित्वं ध्वनितम् । तथा च विष्णुपुराणे—'तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि । अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥ विवस्वान्सविता चैव मित्रो वरुण एव च । अंशुर्भगश्चादितिजा आदित्या द्वादश स्मृताः ॥ चाक्षुषस्यान्तरे पूर्वमासे ये तुषिताः सुराः । वैवस्वतेऽन्तरे ते वै आदित्या द्वादश स्मृताः ॥'

---

१ आहुः. २ आत्मसुवः. ३ ब्रह्मानन्तरविश्वयोनिसहितं द्वंद्वं तदेतद्वशि ।.

मातलिः—अथ किम् ।

राजा—( उपगम्य । ) उभाभ्यामपि वासवनियोज्यो दुष्यन्तः प्रणमति ।

मारीचः—वत्स चिरं जीव । पृथिवीं पालय ।

अदितिः—वत्स अप्रतिरथो भव । ( क )

शकुन्तला—दारकसहिता वां पादवन्दनं करोमि । ( ख )

( क ) वच्छ अप्पडिरहो होहि । ( ख ) दारअसहिदा वो पादवन्दणं करेमि ।

इति । अथ वा द्वादशधास्थितस्य द्वादशकलात्मकस्य । तदुक्तमाचार्यैः—'तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः । सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ कभाद्या वसुधाः सौर्याठण्डान्ता द्वादशेरिताः ।' इति । यद्भुवनत्रयस्य भूर्भुवःस्वर्लक्षणस्य भर्तारं पोषकत्वेन धारणसमर्थम् । स्वामिनमिति यावत् । यज्ञस्य भागो विद्यते येषां ते यज्ञभागा देवास्तेषामीश्वरम् । इन्द्रमित्यर्थः । सुषुवे जनयामास । यज्ञभागेश्वरं न सुरेश्वरम् । न भुवनस्य भर्तारम् अपि तु त्रयस्येति तस्योत्कर्षं वदता पदसमुदायेन तदुत्पादकत्वात्तस्य कोऽप्यतिशयो ध्वनितः । तस्मिन्द्वन्द्वे आत्मना भवतीत्यात्मभवः स्वयंभूः परः पुरुषो विष्णुर्भवाय जन्मन आस्पदं स्थानं चक्रे । विष्णुपुराणे—'मन्वन्तरे च संप्राप्ते तथा वैवस्वते द्विज । वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह ॥' इति । इदं च द्वन्द्वं मिथुनम् । दक्षः प्रजापतिस्तत्संभवाऽदितिः । मरीचिसंभवः कश्यपः । अत एव स्रष्टुर्ब्रह्मण एको मरीच्यादिरन्तरं यस्य सः । अनेन ब्रह्मतुल्यत्वं ध्वनितम् । 'अङ्गभूतमहापुरुषचरितवर्णनमुदात्तम् ।' इति तल्लक्षणादत्र पादत्रये मालोदात्तालंकारः । आत्मभवो भवायेति विरोधाभासोऽपि । भवोभत्रेति द्वन्द्वेति छेकानुप्रासवृत्त्यनुप्रासौ । यज्ञभागेश्वरमिति विशेष्यम् । परः पुरुष इति विशेषणप्रक्रमभङ्गो न शङ्कनीयः । समुदायेन संज्ञिप्रतिपादकत्वमवयवार्थेन च व्यञ्जकत्वं कपालिपदवन्न विरुद्धम् । कारणं सुषुवे भवायास्पदं चक्र इति पर्यायैरेकस्यैवार्थस्य ग्रहणादर्थावृत्तिलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ तदुक्तं विष्णुपुराणे—'अथान्यान्मानसान्पुत्रान्सदृशानात्मनोऽसृजत् । भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा ॥ मरीचिं दक्षमत्रिं च मानसान् ॥' इति । तथा 'भृगोः ख्यातिर्भवेत्सत्यं संसृतिश्च मरीचयः ।' इति । तथा 'षष्टिं दक्षोऽसृजत्कन्या दारिण्यामिति नः श्रुतम् । ददौ सदृशधर्माय कश्यपाय त्रयोदश ॥' इति । तथा 'मारीचात्कश्यपाज्जातास्ते दैत्या दक्षकन्ययोः ।' इति । इयं च सृष्टिर्वैवस्वतमन्वन्तरे । नन्वयं प्राचेतसः पृथुवंशसमुद्भवो दक्षस्तस्य स्रष्टुरेकान्तरत्वं कथमिति चेदुच्यते—'स एव दक्षस्तत्रत्यः' इत्यदोषः । तथा च विष्णुपुराणम्—'दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः । जज्ञे दक्षो महाभागो यः पूर्वं ब्राह्मणोऽभवत् ॥' इति ॥ २७ ॥

१ प्रणिपत्य. २ °वानयो°. ३ पुत्रसहिता [illegible] पादयोः पतति.

मारीचः—वत्से ।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीसदृशी भव ॥ २८ ॥

अदितिः—जाते भर्तुर्बहुमता भव । अयं च दीर्घायुर्वत्सक उभयकुलनन्दनो भवतु । उपविशत । ( क )

( सर्वे प्रजापतिमभित उपविशन्ति । )

मारीचः—( एकैकं निर्दिशन् । )

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥ २९ ॥

राजा—भगवन् प्रागभिप्रेतसिद्धिः । पश्चाद्दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः । कुतः ।

उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु संपदः ॥ ३० ॥

( क ) जादे भत्तुणो वहुमदा होहि । अअं च दीहाऊ वच्छओ उहअकुलणन्दणो होदु । उवविसह ।

आखण्डलेति । ते तव भर्ताखण्डलस्य सम इन्द्रतुल्यः । सुतो जयन्तेन समः जयन्तप्रतिम इन्द्रपुत्रतुल्यः । अतः कारणात्ते तवान्याशीर्योग्या [ अनुरूपा ] न । तृतीयचरणार्थे पूर्वार्धं हेतुत्वेन योज्यम् । पौलोम्याः शच्याः सदृशी भवेतीयमेव युक्ता आशीरित्यर्थः । काव्यलिङ्गोपमे । अनुप्रासश्च ॥ २८ ॥ दिष्ट्येति । साध्वी शकुन्तला । इदं सदपत्यम् । भवानित्यर्थान्तरसंक्रमितवाच्यम् । तेन तत्तद्गुणगरिष्ठो भवानित्यनेन विशेषणप्रक्रमभङ्गः परिहृतः । श्रद्धा वित्तं विधिश्चेति त्रितयं समागतं तद्दिष्ट्येति संबन्धः । निदर्शना । श्रद्धादिभिरौपम्यस्य कल्पितत्वात् । 'त्रितयं वः समागतम्' इति पाठ एकैकं निर्दिशन्निति योजना । तेनाभिरूपसमागमात्समालंकारः । त्रितयपदेन समागमं प्रति प्रत्येकं कर्तृत्वं बोधयता स्त्रीबालावित्यनयोरवज्ञा न कार्येति भावः ॥ २९ ॥ 'देवानामपि ये देवा महात्मानो महर्षयः । भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥' इति भरतोक्तेर्भगवन्निति संबुद्धिः । उदेतीति । कुसुमं पूर्वमुदेति ततः फलमुदेतीत्येव । घनोदयो मेघोद्गमः प्रागुदेतीत्येव तदनन्तरं पयो जलमुदेतीत्येव । आदिक्रियादीपकम् । निमित्तनैमित्तिकयोः कार्यकारणयोरयं पूर्वोक्तः क्रमः । प्राकरणिकत्वेन प्राकरणिकार्थापातान्मालार्थापत्तिः । व्यतिरेकमाह–तव प्रसादस्य पुरः पूर्वं संपद इति कार्यकारणविपर्ययादतिशयोक्तिः । मम शकुन्तलापुत्रलाभ इति प्रस्तुतस्य विशेषस्य गम्यत्वे संपद इत्यप्रस्तुतप्रशंसा । निमिनैमीति निमित्तनैमित्तीति

१ ० म्या; ०मीमङ्गला. २ प्रजापत्यभिमतमासनम् ।. ३ इत्यपूर्वः खलु तवानुग्रहः ; पश्यतु भवान् ।. ४ विधिः. ५ अहिमदा. ६ अवस्सं.

मातलिः—एवं विधातारः प्रसीदन्ति ।

राजा—भगवन् इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य[1] कण्वस्य । पश्चादङ्गुलीयकदर्शनादूढपूर्वां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति ।

यथा गजो नेति समक्षरूपे तस्मिन्नपक्रामति[2] संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीतिस्तथाविधो मे मनसो विकारः ॥ ३१ ॥

मारीचः—वत्स अलमात्मापराधशङ्कया[3] । संमोहोऽपि त्वय्यनुपपन्नः[4] । श्रूयताम्[5] ।

राजा—अवहितोऽस्मि ।

मारीचः—यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां[6] शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि[7] दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी त्वया प्रत्यादिष्टा नान्यथेति[8] । स चायमङ्गुलीयकदर्शनावसानः[9] ।

राजा—(सोच्छ्वासम्[10] ।) एष वचनीयान्मुक्तोऽस्मि ।

शकुन्तला—(स्वगतम् ।) दिट्टिआकारणप्रत्यादेशी नार्यपुत्रः । न पुनः शप्तमात्मानं स्मरामि । अथ वा प्राप्तो मया स हि शापो विर-

---

छेकवृत्त्यनुप्रासौ । वंशस्थं वृत्तम् ॥ ३० ॥ अनेन मधुरं नाम भूषणमुपक्षिप्तम् । विधातारः स्रष्टारः । व आज्ञाकरीमित्यनेनं विनयोक्तिः । उपयम्य विवाह्य । स्मृतिशैथिल्यान्न तत्त्वतः स्मृतेरभावः । स्थायिन्या रतेरविच्छेदात् । प्रत्यादिशन्निराकुर्वन् । तत्रभवतः पूज्यस्य । यथेति । समक्षरूपे गजेऽयं गजो न वेति संशयः स्यात् । तस्मिन्नपक्रामति गच्छति सति पदानि भूमौ चरणचिह्नानि दृष्ट्वा यथा प्रतीतिर्निश्चयबुद्धिर्भवति गज एवायमिति । तथाविधस्तादृशो मे मनसो विकार आसीत् । निदर्शनानुप्रासश्च । द्वादश्युपजातिरिन्द्रवज्रोपेन्द्रवज्रयोः ॥ ३१ ॥ अलमिति निषेधे । आत्मनोऽपराधस्तच्छङ्कयालमिति समन्वयः । दाक्षायणीमदितिम् । ध्यानादवगतं ज्ञानं विद्यते यस्मिन्नित्यवगतोऽस्मि ज्ञानवानस्मि । 'मारीचः—वत्स अलमात्मा—' इत्यादिना 'दर्शनावसानः' इत्यन्तेन निर्णयनामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—'अनुभूतार्थकथनं निर्णयः समुदाहृतः ।' इति । वचनीयाल्लोकापवादात् । दिष्ट्या दैवेन । अकारणप्रत्यादेशी नार्यपुत्रः ।

---

१ युष्मद्गो. २ अतिक्राम०; यथा गजे साधु समक्षरूपे कस्मिन्नपि क्रामति. ३ ०पचार. ४ त्वय्युप०. ५ ०तां तावत्. ६ प्रत्याख्यान–प्रत्नय–प्रत्यग्र–वै०. ७ ०वगतार्थो. ८ ०तेति. ९ ०सानः. १० [illegible]

हृशून्यहृदयया न विदितः । अतः सखीभ्यां संदिष्टास्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति । ( क )

मारीचः—वत्से चरितार्थासि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कार्यः । पश्य ।

शापादसि प्रतिहता स्मृतिरोधरूक्षे भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा ३२

राजा—यथाह भगवान् ।

मारीचः—वत्स कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः ।

राजा—भगवन् अत्र खलु मे वंशप्रतिष्ठा । (इति बालं हस्तेन गृह्णाति)

मारीचः—तथाभाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य ।

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।

( क ) दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो ण उणँ सत्तं अत्ताणं सुमरेमि । अह वा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । अदो सहीहिं संदिट्ठ ह्मि भत्तुणो अङ्गुलीअअं दंसइदव्वं त्ति ।

चरितार्था कृतार्थासि । सहधर्मचारिणं प्रति । पश्येति । वाक्यार्थस्य कर्मत्वम् । शापादिति । शापात्त्वं प्रतिहतासि तिरस्कृतासि । अर्थाद्भर्त्रेत्यर्थः । शापादित्यनेन तस्य दोषाभाव उक्तः । पूर्वं स्मृतेः स्मरणस्य रोधेन रूक्षे निःस्नेह इव । अत्रापि शापादित्यनुषज्यते । अधुनापेतं दूरीभूतं तमः शापलक्षणं यस्मादेवंभूते भर्तरि तवैव प्रभुता । असंबन्धे संबन्धातिशयोक्तिरियं भर्तृसंबद्धायाः प्रभुतायाः प्रसिद्धत्वात् । अथ च यो भर्ता स प्रभुः या वनिता सा गुणभूता इति शास्त्रस्थितौ भर्तृत्वं तस्मिन्प्रभुता चास्यामित्यसंगतिश्च । अतिशयोक्त्या सहाङ्गाङ्गिभावः । मलेनागन्तुकेन दोषेणोपहतो दूरीकृतः प्रसादो यस्य तस्मिन्दर्पणतल आदर्शे छाया प्रतिबिम्बं न मूर्च्छति न प्रसरति । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपे ।' इत्यमरः । सा छाया शुद्धे निर्मले दर्पणतले सुलभावकाशा । अत्यन्तं व्यक्ता दृश्यत इत्यर्थः । हेतुदृष्टान्तौ । ततताततेति तमतिमेति छेकवृत्त्यनुप्रासौ । वसन्ततिलकं वृत्तम् ॥ ३२ ॥ रथेनेति । न विद्यते प्रतिद्वन्द्वी रथो यस्य सोऽप्रतिरथोऽयम् । अनुद्घाताऽस्खलितात एव स्तिमिता निश्चला गतिर्यस्य तेनेति स्वभावोक्तिः । जले स्खलनासंभवात् । एवंभूतेन तीर्णजलधिरुत्तीर्णसमुद्रः । सप्त कुशक्रौञ्चादीनि द्वीपानि यस्याः सा सप्तद्वीपा तां वसुधां पुरा जयति जेष्यति । 'यावत्पुरानिपातयोर्लट्' । अत्र भाविकालंकारः । 'प्रत्यक्षा इव यत्रार्थाः क्रियन्ते भूतभाविनः । तद्भाविकम्' इति तल्लक्षणात् ।

१ विदिता०. २ कर्मादिक्रियः. ३ अयं. ४ महती वंश०. ५ दर्शयति. ६ दिट्ठिआ का०. ७ हु (खलु). ८ धुवं पत्तो. ९ अच्चादरेण सं०.

इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३ ॥

राजा—भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

अदितिः—भगवन् अस्या दुहितृमनोरथसंपत्तेः कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति । (क)

शकुन्तला—( आत्मगतम् । ) मनोरथः खलु मे भणितो भगवत्या । ( ख )

मारीचः—तपःप्रभावात्प्रत्यक्षं सर्वमेवं तत्रभवतः ।

राजा—अतः खलु मम नातिक्रुद्धो मुनिः ।

मारीचः—तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ।

( प्रविश्य । )

शिष्यः—भगवन् अयमस्मि ।

मारीचः—गालव इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

शिष्यः—यदाज्ञापयति भगवान् । ( इति निष्क्रान्तः । )

मारीचः—वत्स त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

राजा—यदाज्ञापयति भगवान् ।

मारीचः—अपि च ।

---

( क ) भअवं इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुँदवित्थारो करीअदु । दुहिर्दुवच्छला मेणआ इह एव्व उपचरन्ती चिट्ठदि ।

( ख ) मणोरहो क्खु मे भणिदो भअवदीए ।

---

अत एव जेष्यतीति वक्तव्ये पुरायोगे लडित्यवधेयम् । इहाश्रमे सत्त्वानां प्राणिनां प्रसभं हठेन दमनात्सर्वदमन इत्याख्यामभिधां यातः । पुनर्लोकस्य जनस्य भुवनस्य वा भरणाद्रक्षणात्पोषणाद्वा भरत इत्याख्यां यास्यति । 'लोकस्तु भुवने जने' इत्यमरः । छेकवृत्त्यनुप्रासौ । काव्यलिङ्गं च । शिखरिणी वृत्तम् ॥ ३३ ॥ 'मारीचः—वत्से चरितार्थासि' इत्यादिना 'आशास्महे' इत्यन्तेन प्रसादलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु 'शुश्रूषाद्युपसंपन्ना प्रसादस्तु प्रसन्नता ।' इति । मनोरथः खलु इत्यनेन

---

१ ०मेतत् तत्र० कण्वस्य. २ ममानति०; न मामति० गुरुः. ३ दुहितुः सपुत्रायाः पत्या परिग्रह०. ४ राप्रष्टव्यः; श्रावयितव्यः; प्रापयितव्यः. ५ वैहायस्या गत्या. ६ सापत्यदारः—०दारसहितः; ते राज०—स्वराज०. ७ सुहृशो. ८ सुदव०. ९ परिच०; म परि. १ मणोगद मे...भणिद—.

तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु
त्वमपि विततयज्ञो वज्रिणं प्रीणयस्व ।
युगशतपरिवर्तानेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः ॥ ३४ ॥

राजा—भगवन् यथाशक्ति श्रेयसे यतिष्ये ।

मारीचः—वत्स किं ते भूयः प्रियमुपकरोमि ।

राजा—अतः परमपि प्रियमस्ति । यदिह भगवान्प्रियं कर्तु-मिच्छति तर्हीदमस्तु । ( भरतवाक्यम् । )

प्रवर्ततां प्रकृतिहिताय पार्थिवः
सरस्वती श्रुतमहतां महीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥ ३५ ॥

( निष्क्रान्ताः सर्वे । )

इति सप्तमोऽङ्कः ।

## समाप्तमिदमभिज्ञानशकुन्तलं नाम नाटकम् ।

---

कृतिर्नामाङ्गमुपक्षिप्तं । तल्लक्षणं–'लब्धस्यार्थस्य शमनं कृतिरित्यभिधीयते।' इति । [ तवेति—बिडौजा इन्द्रः तत्र प्रजासु प्राज्या प्रभूता वृष्टिः यस्य स तथा भवतु। समये प्रभूतजलवर्षणेन भूलोकं पुष्यतु इत्यर्थः । विततयज्ञ आहृतयज्ञसंभारः। उक्तं च दण्डनीतौ—' राजा त्वर्थान्समाहृत्य कुर्यादिन्द्रमहोत्सवम् । प्रीणितो मेघवाहस्तु महतीं वृष्टिमावहेत् ॥ ' इति । युगानां शतानि तेषां परिवर्ताः परिवृत्तयस्तान् । उभयोर्लोकयोर्द्यावापृथिव्योरनुग्रहेण श्लाघनीयैः प्रशंसनीयैः । मालिनीवृत्तम् ॥ ३४ ॥ ] किं ते भूयः प्रियमुपकरोमि ' इत्यनेन काव्यसंहारलक्षणमङ्गमुपक्षिप्तम् । तल्लक्षणं तु–' वरप्रदानसंप्राप्तिः काव्यसंहारः ' इति । भरतवाक्यं नटवाक्यम् । नाटकाभिनयसमाप्तौ सामाजिकेभ्यो नटेनाशीर्दीयत इत्यर्थः । प्रस्तावनानन्तरं नटवाक्याभावादत्र भरतवाक्यमित्युक्तिः । **प्रवर्ततामिति** । प्रकृतिहिताय पौरश्रेणिहिताय पार्थिवः प्रवर्तताम् । श्रुतेन शास्त्रश्रवणेन महतां गरिष्ठानां महीयसामुत्कृष्टानामुत्कृष्टशक्तिमतां कवीनाम् । विशेषणेनैव विशेष्यप्रतिपत्तेर्न विशेष्योपादानम् । सरस्वती प्रवर्ततामित्यनुषज्यते । आदिक्रियादीपकम् । नीललोहितो महादेवो मम पुनर्भवं जन्मान्तरं क्षपयतु नाशयतु । कीदृङ् नीललोहितः । आत्मना भवतीत्यात्मभूः । परितो गता व्याप्ता शक्तिः सामर्थ्यमस्येत्यनेन तत्तच्छक्तित्वं व्यज्यते । क्रियासमुच्चयः । तमतामेति महमहीति छेकवृत्त्यनुप्रासौ । रुचिरा वृत्तम् ॥ तल्लक्षणं तु—' चतुर्ग्रहैरिह रुचिरा जभौ सजौ गः ।' इति ॥ ३५ ॥ अनेन प्रशस्तिनामकमङ्गमुपक्षिप्तम् । तल्लक्षणमादिभरते—' देवद्विजनृपादीनां प्रशस्तिः स्यात्प्रशंसनम् । ' इति ॥ इति श्रीमदभिज्ञानशकुन्तलटीकायामर्थद्योतनिकायां सप्तमोऽङ्कः समाप्तः ।

---

१ स्वर्गिणः. २ ०यालम्. ३ ०वृत्तैरे. ४ उपहरामि. ५ तथाप्येतदस्तु; यदीह, यदि भगवान् प्रसन्नः. ६ श्रुति०; श्रुतिमहती. ७ महीयसां, महीय्यतां, न हीयताम्.

अथ प्रबन्धे रसो निरूप्यते—तत्र संभोगश्रृङ्गारोऽङ्गी । भयानकादयोऽङ्गभूताः । तत्र 'असंशयं क्षत्रपरिग्रहक्षमा' इत्यत्र राज्ञो भावोदयः । ततः 'शकुन्तला—हिअअ मा उत्तम्म । एसा तुए चिन्तिदानि' इत्येतदादिः 'भूयिष्ठमन्यविषया न तु दृष्टिरस्याः' इत्यन्तमुद्‌बुद्धाया रतेर्भावत्वमेव । 'उद्‌बुद्धमात्रः स्थायीभाव इत्यभिधीयते' इत्युक्तेस्तत्र 'नैकरूपस्थिरास्वाद शर्करावद्भवेदसौ ।' इति । 'न विना विप्रलम्भेन श्रृङ्गारः पुष्टिमश्नुते । कषायिते हि वस्त्रादौ भूयान्रागः प्रवर्धते ॥' इति चोक्तेः । विप्रलम्भेन विना संभोगपरितोषाभावात् । 'ततः प्रविशति यथानिर्दिष्टपरिवारो राजा' इत्यादिनानङ्गलेखान्तः पूर्वानुरागविप्रलम्भः । तत्र विप्रलम्भलक्षणम् । 'अयुक्तयोस्तरुणयोरनुरागः परस्परम् । अभीष्टालिङ्गनादीनामनवाप्तौ प्रकृष्यते । स विप्रलम्भो विज्ञेयः' इति । अनुरागविप्रलम्भलक्षणं यथा—'यत्प्रेम संगमात्पूर्वं दर्शनश्रवणादिभिः । भवेत्पूर्वानुरागोऽयं संकल्पात्मा प्रवर्तते ॥ सोऽयं पूर्वानुरागाख्यो विप्रलम्भ इतीरितः । पारतन्त्र्यादयं द्वेधा दैवमानुषकल्पनात् ॥' इति । अत्र मानुषकल्पितं पारतन्त्र्यम् । 'अत्र संचारिणो ग्लानिः शङ्कासूया श्रमो भयम् । निर्वेदौत्सुक्यदैन्यानि चिन्तानिद्रे प्रबुद्धता । विषादो जडतोन्मादौ मोहो मरणमेव च ॥' इति । एते च व्यभिचारिणो यथास्थानं तत्र तत्रोहनीयाः । तत्र 'क्षामक्षाम—' इति तद्गता ग्लानिः । तल्लक्षणम्—'आधिव्याधिजरातृष्णाव्यापारसुरतादिभिः । निष्प्राणता ग्लानिरत्र क्षामाङ्गवचनक्रिया ॥' इति । अत्राधिना 'जाने तपसो वीर्यम्' इति वागारम्भेण शङ्कमानता । 'तव कुसुमशरत्वम्' इति राजकर्तृकासूया । 'गुणेऽपि दोषारोपः स्यादसूया' इति तल्लक्षणात् । 'श्रमक्लान्तमात्मानं विनोदयामि' इति राज्ञः प्रश्नः । 'अण्णहा अवस्सं सिञ्चध मे तिलोदअम् ।' इति निर्वेदः । 'निर्वेदः स्वावमानना' इति तल्लक्षणात् । 'न खलु मे प्रियादर्शनात्' इत्यादिना राज्ञ औत्सुक्यम् । 'आतपलङ्घनाद्बलवदस्वस्था' इत्यनेन तद्गतदैन्यम् । 'हृत्तापदुर्गतत्वादेरनौचित्यं हि दुर्गता ।' इति तल्लक्षणात् । 'किं वीअअन्ति मं सहीओ' इति जडता । 'तुज्झ न आणे' इत्यत्र मदुक्तव्याख्याने शकुन्तलागत उन्मादः । एवमन्यदप्यनुसंधेयम् । तत्र 'अभिलाषचिन्तनानुस्मृतिगुणसंकीर्तनोद्वेगाः । सविलापा उन्मादा व्याधिर्जडता मृतिश्च ताः क्रमशः ॥' इति । एताश्चावस्था व्याख्यानावसरे तत्र तत्र मदुक्त्या अनुसंधेयाः । 'राजा—सहसोपसृत्य' इत्यादिना 'शकुन्तला नाट्येन परिहरति' इत्यन्तेन संभोगः । तल्लक्षणं यथा—स्पर्शनालिङ्गनादीनामानुकूल्यान्निषेवणम् । घटते यत्र यूनोस्तु स संभोगः प्रकीर्तितः ॥' इति । तत्रापि संक्षिप्तसंभोगोऽयम् । तल्लक्षणं तु यथा—'युवानौ यत्र संक्षिप्तान्साध्वसव्रीडितादिभिः । उपचारान्निषेवन्ते स संक्षिप्त इतीरितः ॥' इति । 'शकुन्तला—(आत्मगतम् ।) पढमं एव्व' इत्यादिना शून्यादपि' इत्यन्तेन कार्यप्रवासविप्रलम्भः । तल्लक्षणं तु—पू-

वैसंगतयोर्यूनोर्भवेद्देशान्तरादिभिः । चरणव्यवधानं यत्स प्रवास इतीरितः ॥ शृङ्गारयोगाः सर्वेऽपि प्रवासे व्यभिचारिणः । कार्यतः संभ्रमाच्छापात्स त्रेधा परिकीर्तितः ॥' इति । ततो दुर्वाससः शापात्ताद्रूप्येण शापविप्रलम्भः । शापस्य राज्ञाज्ञातत्वात्प्रभावाद्रतेरनुसंधानात् 'अङ्गिनो न तु संधानम्' इति प्रबन्धदूषणं स्यात् । तत्परिहारार्थम् 'राजा—(आत्मगतम् ।) किं नु खलु गीतार्थमाकर्ण्येष्टजन-विरहादृते बलवदुत्कण्ठितोऽस्मि' इत्यादिषु स्थानेषु मदुक्तव्याख्यानुसाराद्रतेर-नुसंधानं ज्ञेयम् । यदुक्तं राजानकानन्दवर्धनैः सहृदयहृदयालोके—'रसस्वारस्य-विश्रान्तेरनुसंधानसाङ्गिनः । प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥' इति । मुद्रिकादर्शनानन्तरं संभ्रमात्प्रवासविप्रलम्भः । संभ्रमलक्षणं तु—'आवेगः संभ्रमः सोऽपि नैकधो दिव्यादिभेदतः' इति । 'अङ्गेष्वसौष्ठवम्' इत्यादिप्र-वासविप्रलम्भकामदशा मदुक्तास्तत्र तत्र स्थानेष्वनुसंधेयाः । 'राजा—प्रिये क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामम्' इत्यादिना संभोग एव । उक्तं च दशरूपके—'अनुकूलौ निषेवेते यत्रान्योन्यं विलासिनौ । दर्शनस्पर्शनादीनि स संभोगो मुदान्वितः ॥' इति । एवमयमेव सर्वस्मिन्प्रबन्धे गीयतेऽत एव 'अनौचि-त्यादृते नान्यद्रसभङ्गस्य कारणम् ।' इत्युक्तिः । नायिकाया बालं गृहीत्वा स्वयं तद्गृहागमने धृष्टतयानौचित्यम् । कुलाङ्गनाया गान्धर्वविवाहः स्वयं निष्पाद्यः, तस्य महापुरुषस्य कारणं विना संमोहः सोऽप्यनुचित एवेत्यनेन कविना कण्वेन तपस्विभिः सह प्रस्थापनं दुर्वाससः शापोऽप्यनाकरजोऽपि निबद्धः ; तदुक्तं ध्वनिकृता—'इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम् । उत्प्रे-क्षाप्यन्तराभीष्टरसोचितकथोन्नये ॥' इति । अत एव प्रतिमुखसंध्यादौ केषांचिद-ङ्गानां त्यागः । तदुक्तं राजानकानन्दवर्धनैः—'संधिसंध्यङ्गघटनारसादिव्यक्त्य-पेक्षया । न तु केवलया शास्त्रस्थितिसंपादनेच्छया ॥' इति । अन्यच्च । मध्ये विच्छेदो मध्य उद्दीपनं पुनर्मध्ये विच्छेदः पुनरुद्दीपनमिति यत्तदपि प्रबन्धाङ्गि-रसपरिपोषापेक्षयैव । तदुक्तं सहृदयहृदयालोके—'उद्दीपनप्रशमने यथावसरम-न्तरा । प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥' इति । दशरूपकेऽपि—'अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः । गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ॥ न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् । रसं वा न तिरो-दध्याद्वस्त्वलंकारलक्षणैः ॥ एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा । अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥' इति । अत्रान्ये भयानकहास्ययुद्धवीरक-रुणाद्भुतरौद्रबीभत्सा अङ्गत्वेनोपनिबद्धास्ते तत्र तत्र प्रयुक्तलक्षणा अनुसंधेया इति शिवम् ॥

नाट्यालंकृतिशास्त्रतत्त्वविदुषाऽभिज्ञानशाकुन्तल-
व्याख्येयं सरसा निशातमतिना श्रीराघवेण स्फुटा ।
अर्थद्योतनिकाभिधा ध्वनितदर्थालंक्रियानिर्भरा
श्रीविश्वेश्वरपत्तने विरचिता तद्भक्तियुक्तात्मना ॥
सहृदयहृदयाः सुजना निपुणा नित्यं विलोकयन्त्वेनाम् ।
स्यात्प्रवृत्तिरेव हि नहि नववस्तुकृतिविद्वेषतोऽन्येषाम् ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणभट्टश्रीपृथ्वीधरात्मजश्रीमत्पदवाक्यप्रमाणपारावारीणसाहित्यरत्नाकरसकलकलाशास्त्रप्रवीणभट्टश्रीराघवविरचिताभिज्ञानशाकुन्तलव्याख्याऽर्थद्योतनिकाभिधा संपूर्णा ॥

---

# श्लोकसूची ।

## ADDITIONAL READINGS FOUND IN THE CALCUTTA EDITIONS.

*N. B.* For the sake of convenience, in the case of Pra'krit passages their Sanskrit renderings only are given.

### ACT I.

**P. 19. वृक्षसेचनं रूपयति**—After this—**द्वितीया**—सखि शकुन्तले उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षकाः ( ०गुल्मकाः )। इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः। तेनानभिसंधिगुरुको[1] धर्मो भविष्यति। शकु०—हला प्रियंवदे रमणीयं मन्त्रयसे। ( इति भूयो वृक्षसेचनं नाटयति। )

**P. 20.** After s'l. 1[2]—कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं न मनसि रुचिभङ्गं[3] स्वल्पमप्यादधाति। विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठं[4] निजमिव कमलिन्याः कर्कशं वृन्तजालम् ॥

**P. 24.** After s'l. 20—लोलां दृष्टिमितस्ततो विभजते सभ्रूलताविभ्रमां[5] माभुग्नेन विवर्तते वलिमता मध्येन कैम्रस्तनी[6]। हस्ताग्रं विधुनोति पल्लवनिभं सीत्कारभिन्नाधरा[7] जातेयं भ्रमराभिलङ्घनभिया ( ०रावलम्बनवशाद्[8] ) वाद्यैर्विना नर्तकी॥

**P. 37. संनिहिताः**—तपोवनसंनिहितसत्त्वरक्षायै सज्जीभवन्तु भवन्तः। अवहितास्तपोवने सत्त्वरक्षायै०—।

**P. 39. राजा**—मा मैवम् &c.—पुरस्कृतोस्मि। After this—उभे—अनुसूये अभिनवकुशसूच्या परिक्षितं मे चरणं कुरवकशाखापरिलग्नं च वल्कलम्। हला शकुन्तले एहि शीघ्रतरम्। आकुला आर्या गौतमी भविष्यति। शाकु—( सव्याजविलम्बं कृत्वा। आत्मगतम्। ) हा धिक्। ऊरुस्तम्भेन विकलास्मि[9] संवृत्ता।

---

१ Great because done without any object in view, disinterestedly. २ This verse is evidently an interpolation. It is quite out of place after s'l.17. Besides, what is the propriety of कान्तरूप ( if it is कठिन )? ३ Loss of liking. ४ With its neck ( the pedicle ) slightly released. ५ With the graceful movements of her arching eyebrows. ६ Beautiful. ७ With lips parted by the hissing sound escaping through them. ८ Alighting of ( not a good variant ). Taken by itself this is a good s'l. and good poetry. There is nothing in it that is unlike Kâlidâsa's poetry. There are many such s'lokas along with many more that are spurious, found in the Bengâli Recension. If these are real interpolations, they bespeak no ordinary power of poetic composition on the part of the writer. ९ Helpless.

राजा—स्वैरं स्वैरं गच्छन्तु भवत्यः । वयमावेगमाश्रमस्योपनेष्यामः । श०—(सव्याजविलम्बितं कृत्वा परिक्रम्य सखीभ्याम् &c.). राजा—मन्दौत्सुक्यो॰—निःश्वस्य । गताः सर्वाः । भवतु । अहमपि गच्छामि शकुन्तलादर्शनादेव मन्दौ॰

---

## ACT II.

P. 62. After s'l. 18—विदूषकः—एवमिदम् । राजा—माधव्य त्वमपि स्वनियोगमनुतिष्ठ । अहमपि तपोवनरक्षणार्थं तत्रैव गच्छामि ।

---

## ACT III.

P. 68. बलवान्खलु ते संतापः । After this—राजा—वक्तव्यमेव ।

शशिकरविशदान्यस्यास्तथा हि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि ॥

P. 74. After s'l. 12—अपि च ।

अयं स यस्मात्प्रणयावधीरणामशङ्कनीयां करभोरु मन्यसे ।
उपस्थितस्त्वां प्रणयोत्सुको जनो न रत्नमन्विष्यति मृग्यते हि तत् ॥

P. 77. शकुन्तला अभ्युत्थातुं &c.—शकुन्तला—(ससाध्वससमात्मगतम् ।) हृदय तथा उत्तम्येदानीं न किमपि प्रतिपद्यसे । राजा—उपविशति । राजा (उपविश्य ।) कच्चित्सखीं वो नातिबाधते (शरीर) संतापः । प्रियंवदा—(सख्या सहोपविश्य ।) लब्धौषधः सांप्रतमुपशमं गमिष्यति । Another MS.—लब्धौषध उपशमं गमिष्यति कालेन । अनसूया—(जनान्तिकम् ।) प्रियंवदे कालेनेति किम् । पश्य मेघनादाहतामिव मयूरीं निमेषान्तरेण प्रत्यागतां प्रियसखीम् । शकुन्तला—(हर्षं सूचयति ।) प्रियंवदा—(जनान्तिकम् ।) अनसूये पश्य पश्य । मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम् ।

P. 79. After निर्वृते स्वः—शकुन्तला—हला मर्षयतं लोकपालं यदस्माभिर्विश्रब्धप्रलापिनीभिरुपचारातिक्रमेण भणितम् । सख्यौ—(सस्मितम् ।)

---

१ Agitation, disturbance. २ White like. ३ Heat. ४ The colour of which is changed to black. ५ A bad compound. ६ Kum. V. 45. This s'l. is evidently an imitation. ७ Ask his forgiveness. ८ Setting aside the usual formalities.

येन तन्मन्त्रितं सा एव मर्षयतु । अन्यस्य कोऽत्ययः । शकुन्तला—अर्हति खलु महाराज इदं विसोढुम् । परोक्षं वा न किं को मन्त्रयते । राजा—( सस्मितम् । )

**अपराधमिमं ततः सहिष्ये यदि रम्भोरु तवाङ्गसङ्गमृष्टे ।**
**कुसुमास्तरणे क्लमापहेऽत्र स्वजनत्वादनुमन्यसेऽवकाशम् ॥**

[ ०सङ्गमृष्टे-रेचितार्धे; क्लमापहेऽत्र-क्लमापहं मे; स्वज०-सुजनत्वात्. ]

प्रियंवदा—ननु एतावन्मात्रेण पुनस्ते तुष्टिर्भवेत् । शकुन्तला—( सरोषमिव । ) विरम दुर्ललिते, एतावदवस्थां गतयापि मया क्रीडसि ।

P. 81. After s'l. 20—शकुन्तला—सखीमात्रशरणा किमिदानीमत्र करिष्यामि । राजा—इदानीं-धिक्-व्रीडितोऽस्मि । श०—न खलु महाराजं ( आर्यं ) ( भणामि ) दैवमुपालभे । रा०—अनुकूलकारि दैवं कथमुपालभ्यते ।

श०—कथमिदानीं नोपालप्स्ये यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति ।

राजा—( स्वगतम् । )

**अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः**
**काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।**
**आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वा-**
**दाबाधन्ते मनसिजमपि क्षिप्तकाला[2]ः कुमार्यः ॥**

श०—(प्रस्थिता-गच्छति-एव । ) राजा—( स्वगतम् । ) कथमात्मनः प्रियं न करिष्ये । ( उत्थाय उपसृत्य पटान्तमवलम्बते । )

P. 82. शकुन्तला—क्रदा । After this—राजा—यदा सुरतज्ञो भविष्यामि । शकुन्तला—मदनावस्थोऽपि नात्मनः कन्यकाजनः प्रभवति । भूयोऽपि तावत्सखीजनमनुमानयिष्यामि । राजा—मुहूर्तमुपविश्य ततो मोक्ष्यामि । शकु०—( कृतककोपा । ) पौरव रक्ष विनयम् । इत ऋषयः संचरन्ति । राजा—( दिशोऽवलोक्य । ) कथं प्रकाशमस्मि निर्गतः—०शं गतोऽस्मि । ( इति शकुन्तलां मुक्त्वा तैरेव पदैः पुनः प्रतिनिवर्तते । ). शकु०—( पदान्तरे निवृत्य, साङ्गभङ्गम् । ) पौरव अनिच्छापूरकोऽपि संभाषणमात्रपरिचितोऽयं जनो न विस्मर्तव्यः ।

---

१ Transgression. २ Who allow the proper time to slip off. This s'l. is faulty in several respects. काङ्क्षन्त्योऽपि व्यति० is simply a repetition of अप्यौत्सुक्ये महति. Some such word as किं तु or तु is wanted before आबाधन्ते. Again, the same word मदन ought to have been repeated in the fourth line instead of मनसिज to make the identity of the oppressor and the oppressed more prominent. ३ In sham or feigned anger.

राजा—सुन्दरि ।

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिनावसानच्छायेव पुरो मूलं वनस्पतेः ॥

शकु०-( स्तोकमिव-मन्तरं-गत्वा आत्मगतम् । ) हा धिक् हा धिक् । इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरतः । भवतु । एभिः पर्यन्तकुरबकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम् । ( तथा कृत्वा स्थिता । ) राजा-प्रिये कथमनुरागैकरसं मामुपेक्ष्य निरपेक्षेव कामं गतासि ।

अनिर्दयोपभोग (ग्य)स्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम् ॥

शकु०-एतत् श्रुत्वा न मेऽस्ति विभवो गन्तुम् । राजा-संप्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि । ( अग्रतोऽवलोक्य । ) हन्त व्याहतं मे गमनम् ।

मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः ॥

सादरं [ सबहुमानं ] आदत्ते ।

शकु०-( हस्तं विलोक्य । ) अहो दौर्बल्यशिथिलतया परिभ्रष्टमिदं मृणालवलयं न मया परिज्ञातम् । राजा-( मृणालवलयमुरसि निक्षिप्य । ) अहो सुखस्पर्शः ।

अनेन लीलाभरणेन ते प्रिये विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभागचेतनेनापि सता न तु त्वया ॥

शकु०-अतः परं न समर्थास्मि विलम्बितुम् । भवतु । एतेनैवापदेशेनात्मानं दर्शयिष्यामि । ( इत्युपसर्पति । ). राजा-अये जीवितेश्वरी मे प्राप्ता । परिदेवनानन्तरं प्रसादेनोपकर्तव्योऽस्मि खलु दैवस्य ।

पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥

शकु०-( राज्ञः संमुखे स्थित्वा । ) आर्य ( अङ्ग ) अर्धपथे स्मृत्वैतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्तास्मि । कथितं मे हृदयेन त्वया गृहीतमिति । तन्निक्षिपेदं मा मामात्मानं च मुनिजनेषु प्रकाशयिष्यसि ।

राजा—एकेनाभिसंधिनां प्रत्यर्पयेयम् । नान्यथा । शकु०-केन । राजा-यदीदमहमेव यथास्थानं निवेशयेयम् । शकु०-( स्वगतम् । ) का गतिः । ( प्रकाशम् । ) भवत्वेवं तावत् । राजा-इदं शिलातलमेव-इतः शिलापट्टैकदेशं-संश्रयावः । ( इत्युभौ परिक्रम्योपविष्टौ । ). राजा-( शकुन्तलाया हस्तमादाय । ) अहो स्पर्शः ।

१ The Kurabaka plants lining the bower. २ Solely in the power of love. ३ Gently. ४ A chain. ५ Condition.

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः संभृतो भूयः किंस्वित्कामतरोरयम् ॥

शकु०—( हर्षरोमाञ्चं रूपयन्ती स्पर्शं रूपयित्वा । ) त्वरतां त्वरतामार्यपुत्रः ।

राजा—( सहर्षमात्मगतम् । ) इदानीमस्मि विश्वस्तः । यतो भर्तुराभाषणपदमेतत् । ( प्रकाशम् । ) सुन्दरि नातिश्लिष्टः संधिरस्य मृणालवलयस्य । यदि तेऽभिमतं तदन्यथा घटयिष्यामि । शकु०–( स्मितं कृत्वा । ) यथा ते रोचते ।

राजा—( सव्याजं विलम्ब्य । प्रतिमुच्य । ) सुन्दरि दृश्यताम् ।

अयं स ते श्यामलतामनोहरो(रं) विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः करं समेत्योभयकोटिमाश्रितः ॥

शकु०—न तावत्प्रेक्षे । पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः ।

राजा—( सस्मितम् । ) यद्यनुमन्यसेऽहमेनां वदनमारुतेन विशदां करिष्ये ।

शकु०—तदानुकम्पिता भवेयम् । न पुनस्ते विश्वसिमि । राजा–मा मैवम् । नवो हि परिजनः सेव्यानामादेशात्परं न वर्तते । शकु०–अयमेवात्यादरोऽविश्वासजनकः । राजा–नाहमेवं रमणीयमात्मनः सेवाकालं ( अव-काशं-सरं ) शिथिलयिष्ये । ( इति मुखमुन्नमयितुं प्रवृत्तः । ).

शकु०—(कामप्रतिवन्धं प्रतिषेधं रूपयन्ती विरमति । ). राजा—अयि मदिरेक्षणे अलमस्मदविनयाशङ्कया । शकुन्तला—( किंचिद् दृष्ट्वा व्रीडावनतमुखी तिष्ठति । ) राजा—( अङ्गुलिभ्यां मुखमुन्नमय्य । आत्मगतम् । )

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः ॥

शकु०—प्रत्यभिज्ञानमन्थर इवार्यपुत्रः । राजा—कर्णोत्पलसंनिकर्षादीक्षणस्य सादृश्यमूढोऽस्मि । ( इति मुखमारुतेन चक्षुः सेवते । ) शकु०—भवतु प्रकृतिस्थास्मि–०तिस्थदर्शनास्मि–संवृत्ता । लज्जे पुनरनुपकारिणी प्रियकारिण आर्यपुत्रस्य ।

राजा—सुन्दरि किमन्यत् ।

इदमप्युपकृतिपक्षे (–कृतमवले ) सुरभि मुखं ते मया यदाघ्रातम् ।
ननु कमलस्य मधुकरः संतुष्यति गन्धमात्रेण ॥

शकु०—असंतोषेण किं करिष्यसि–असंतोषे पुनः किं करोति । राजा–इदम्–( इति व्यवसितो वक्त्रं ढौकयति ।–व्यवसितः । ). ( शकु०–वक्त्रं ढौकते । ).

---

१ Revived. २ Very close or compact. ३ (1) Dark shoot; (2) darkish hue. ४ The sky. ५ Slow to recognize. ६ Regarded as a favour.

P. 84. After s'l. 24. हा हा धिक् न सम्यगाचेष्टितं मया प्रियामासाद्य कालहरणं कुर्वता । इदानीम्; (विचिन्त्य ।) अहो धिगसम्यक्चेष्टितं प्रियां समासाद्य काल० कुर्वता मया । तदिदानीम् ।

रहः प्रत्यासत्ति[1] यदि सुवदना यास्यति पुनः
न कालं हास्यामि प्रकृति(प्रणयि)दुरवापा हि विषयाः ।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढहृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिदम् (-मिव) ॥

P. 85. After s'l. 25. राजा—भो भोस्तपस्विनः मा भैष्ट मा भैष्ट । अत्र &c.

---

## ACT IV.

P. 87. यथाहं पश्यामि०—यथा मां पृच्छसि तथा तातस्यानुमतं प्रियं च ।.

P. 89. प्रकृतिवक्रः०—शरीरबद्धः कोप इव, शरीरी इव कोपः । कस्य० ।

P. 91. After तथा हि ।

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसंध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात्खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणो गात्रमायच्छमानः[2] ॥

अपि च ।

पादन्यासं[3] क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।

---

१ Nearness. २ Tr.—The early dawn is imparting a reddish hue to the dew upon the *Karkandhu* plants. The peacock, (now) risen from sleep, is leaving the cottage-roof thatched with the *Darbha* grass. And this antelope, getting up from the altar-ground which he had scratched with his hoofs, is forthwith stretching forth his body, (thus) becoming tall in his hinder part. ३ Tr.—That moon, who, placing his foot on the head of Sumeru, the lord of mountains, had occupied Vishṇu's central abode (*i. e.*, the sky), after dispelling the darkness,—that moon is now falling (down) from the sky, with a few rays lingering therein. Too great a rise (*or*, arrogant excess), even in the case of the great, ends (*i. e.*, results) in their downfall.

सोऽयं सोमः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा ॥

[ ०र्दूरारोही......निष्ठः ॥ ]

तत्सत्यं यतः सूर्याचन्द्रमसौ जगतोऽस्य संपद्विपत्त्योरनित्यत्वं दर्शयत इव। तथा च।

P. 98. **प्रियंवदा**–हला कोटरसंभवापि मधुकरी पुष्करमध्वेवाभिलषति। **गौतमी**–जाते अनयाभ्युपपत्त्या &c.

P. 107. **शकुन्तला**—&c......साहयति. **अनसूया**—सखि, आश्रमपदे नास्ति कोऽपि चित्तवान् यस्त्वया विरह्यमाणो न ताम्यतीति। प्रेक्षस्व।

पुटकिनीपत्रान्तरितां व्याहृतोऽपि न व्याहरति प्रियाम्।
मुख उद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्राह्वः ॥

P. 110. After s'l. 19—अपि चेदमवधारय।

यदा शरीरस्य शरीरिणश्च पृथक्त्वमेकान्तत एव भावि।
आहार्ययोगेन विभज्यमानः परेण को नाम भवेद्विषादी ॥

---

## ACT V.

P. 113. The whole passage from कर्णं दत्वा......इति पर्याकुलस्तिष्ठति is put after पुनर्नवीकृताः स्मः &c. ( p. 120 ) in the Calc. Ed. तुमं–भवं ( भवान् ).

P. 116. ततः प्रवि०–The Calc. Edd. put the entrance of Kañch. at the commencement of the Act, introducing it thus—कं०—अये अन्यासत्तो–व्यासक्तचित्तो–देवः। तदवसरं प्रतिपालयामि। ( इति एकान्ते स्थितः। ) ( आत्मानं विलोक्य। निःश्वस्य। ) अहो बत कीदृशीं वयोवस्थां–ईदृशीं वयःसमवस्थां–आपन्नोऽस्मि। After s'l. 3—( संस्मृत्य। ) यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं निवेदयामि। ( स्तोकमन्तरं द्वे पदे गत्वा। ) किं पुनस्तत्। ( विचिन्त्य। ) आं ज्ञातम्। कण्वशिष्यास्तपोधनाः –तपस्विनः–देवं द्रष्टुमिच्छन्ति। भोश्चित्रमिदम्।

---

१ A lotus-plant. २ Borne, seized. ३ Artificial (opp. to natural).

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥

( परिक्रम्याकाशे । ) मौद्गल्य धर्म॰ पात्यं तद्देवस्य तदावेदयितुमिच्छामि । किं ब्रवीषि नन्विदानीमेव धर्मासनादुत्थितः पुनरुपरुध्यते देव इति । नन्वीदृशो लोकतन्त्राधिकारः । पश्य ।

P. 121. सुचरिताभि॰—देवस्य भुजदण्डनिर्वृते आश्रमपदे कुत एवम् किं तु सुचरि॰ ।

P. 126. After l. 2. राजा—आर्ये कथ्यताम् । नापेक्षितो॰—॰जनस्त्वयाऽनया न पृष्टा बन्धवः । एकैकमेव चरिते भणामि किमेकमेकस्मै ॥. पावकः खलु– हा धिक् हा धिक् सावलेपोऽस्य वचनाक्षेपः ।

P. 130. आत्मे॰–आत्मेदानीं मे शोधनीयो भवतीति किंचिद्वदिष्यामि ।

P. 131. न पुनस्ते–न सोऽपरिचितस्य ते हस्तादुदकं पातुमुपगतः ।

P. 132. आत्मकार्य॰—आभिस्तावदात्मकार्यप्रवर्तिनीभिर्मधुराभिरनृतवाग्भिरा॰,–र्यैनिर्वहणीनां योषितामावर्धितानृतवादमधुराभिर्वाग्भिरा॰.

P. 133. After आत्मगतम्–वनवासादविभ्रमः पुनरस्याः कोपो लक्ष्यते । तथा हि—

न तिर्यगवलोकितं भवति ( स्फुरति ) चक्षुरालोहितं
V. l. न तिर्यगवलोकि चक्षुरतिलोहितं केवलम् ॥
वचोपि परुषाक्षरं न च पदेषु संगच्छते ।
हिमार्त इव वेपते सकल एव ( मधुर एष ) विम्बाधरः
प्रकाम(स्वभाव)विनते भ्रुवौ युगपदेव (दत्र) भेदं गते ॥

अपि च ।

शकु॰—सुष्ठु तावत् &c.–before this Calc. Edd. have

यूयमेव प्रमाणं जानीथ धर्मस्थितिं च लोकस्य ।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः ॥

P. 135. शारद्व॰—भो राजन् किमुत्तरोत्तरैः । अनुष्ठितगुरुनिदेशाः स्मः । संप्रति प्रतिनिवर्तामहे वयम् ।

---

१ Is overpowerved, obscured. २ About to pass off. ३ Full of arrogance. ४ Plainly displayed. ५ knit.

## ACT VI.

P. 141. अस्य वधार्थं०-इमं ग्रन्थिच्छेदकं व्यापादयितुम्। गृध्रबलि०-स्वकुल्यानां मुखं प्रेक्षतामथ वा गृध्रशृगालानां बलिर्भवतु।

P. 142. अथ कीदृशो &c.—तव क्रीतकं मे जीवितम्। स्वं-कटकम्।

P. 144. One MS. reads the whole thus-चूतं हर्षितपिङ्कं जीवितसदृशं वसन्तमासस्य। षट्चरणभग्नमृतुमङ्गलमिव पश्यामि।

P. 151 After s'l. 8

उपहितस्मृतिरङ्गुलिमुद्रया प्रियतमामनिमित्तनिराकृताम्।
अनुशयादनुरोदिमि चोत्सुकः सुरभिमाससुखं समुपस्थितम्॥

०सुखं समु०—समुपैति च; ०मुखं च पुरःस्थितम्।

ननु आसन्न० &c.—ननु भवता आसन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा माधवीलतागृहे०.

P. 157. गृहीतोनेन०—( सस्मितम्। ) अहमपि तावदेतद्दण्डकाष्ठमुपालप्स्ये कथमृजुकस्य कुटिलं त्वमसीति। After s'l. 13-मिश्रकेशी-स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा।.

P. 158. After Chaturikâ's speech—

राजा—विलोक्य अहो रूपमालेख्यगताया अपि प्रियायाः। तथा हि।

दीर्घापाङ्गविसारि नेत्रयुगलं लीलाञ्चितंभ्रूलतं।
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम्।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं।
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम्॥

विदू०—After the foot-note.

तथाहि—

अस्यातुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि।
अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं
प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम्॥

---

१ His relatives. २ Cuckoos. ३ Affected by longing. ४ Supply च ( and at the same time ) after this. ५ straight forward. ६ Decked with. ७ Odd in number ( three ) and lofty. ८ The backgrownd ( of the picture ).

P. 164. After—ईदृशवर्ण इव संवृत्तः—राजा-निवार्यमाणोपि कथं स्थित एव । मिश्र०—अहो धीरमपि जनं रसो विकारयति ।

P. 166. मेहपडिच्छन्देम०—मेहच्छण्णप्पासादे सद्दाविस्ससि एदं च तहिं गोवाएमि जहिं पारावदं उज्झिअ अण्णो-जत्थ पारावदीं वज्जिअ अवरो-कोवि ण पेक्खिस्सदि ।

P. 167. राजा--अनुवाच्य--वाचयति । विदितमस्तु देवपादानां यथा धनवृद्धिर्नाम ( धनवृद्ध इति यथार्थनामा ) वणिग्वारिपथोपजीवी नौव्यसने विपन्नः । स चानपत्यः । तस्य चानेककोटिसंख्याकं ( कोटिशतसंख्यातं ) वसु । तदिदानीं राजस्वतां ( राजार्थं )[1] आपद्यते । श्रुत्वा देवः प्रमाणम् । इति । सविषादं &c.

P. 169. After s'l. 25 मिश्र०—हा धिक् हा धिक् । सति खलु दीपे व्यवधानदोषेणान्धकारमनुभवति राजर्षिः ।. चेटी-भर्तः । अलं संतापितेन । वयःस्थ एव प्रभुरपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो[2] भविष्यति । ( आत्मगतम् । ) न मे वचनं प्रतीच्छति । अथ वानुरूपमेव औषधमातङ्कं निवारयति । राजा—( शोकावेगनाटितकेन । )

आमूलशुद्धसंतति कुलमेतत्पौरवं प्रजावन्ध्ये ।
मध्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः[3] ॥

इति मोहमुपगतः ।

P. 170. After माधव्यस्येवार्तस्वरः—चेटी-न नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिश्चेटिकाभिश्चित्रफलकहस्तः प्राप्तो भवेत् । [ लिपिकरी-तपस्वी पिङ्गलिकामिश्राणां मुखे पतितो भविष्यति । ] राजा-चतुरिके गच्छ मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व । चेटी-निष्क्रान्ता । नेपथ्ये ( भूयः स एव शब्दः । ) राजा-परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः । कः कोत्र भोः । ( प्रविश्य । ) कञ्चुकी-आज्ञापयतु देवः । राजा-निरूप्यतां किमेवं माधव्यब्राह्मणः क्रन्दतीति । कञ्चु० -यावदवलोकयामि । ( इति निष्क्रम्य ससंभ्रमं प्रविष्टः । ) राजा—पार्वतायन न खलु किंचिदस्याहितम् । कञ्चु०—नैवम् । राजा०—ततः कुतोयं वेपथुः । तथा हि

प्रागेव जरसा कम्पः सविशेषस्तु संप्रति ।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः ॥

---

१ The king's property. २ Will discharge the debt due to his ancestors. ३ One of the seven sacred rivers, (now) called Sarsati which falling from the Himalayas is lost in the desert.

कञ्चु०-परित्रायतां सुहृदं महाराजः । राजा-कस्मात्परित्रातव्यः । कञ्चु०-महतः कृच्छ्रात् । राजा-अये भिन्नार्थ[ अनिर्भिन्नार्थ-निर्भि० ]मभिधीयताम् । कञ्चु०—योसौ [ अभ्रंलिहो ] दिगवलोकनप्रासादो मेघच्छन्नो नाम । राजा-किं तत्र । कञ्चु०—

तस्याग्रभागाद्गृ ( ग्रभूमेर्गृ ) हनीलकण्ठै—
रनेकविश्राम[विश्रान्ति]विलङ्घ्यशृङ्गात्[ङ्गम्] ।
सखा प्रकाशेतरमूर्तिना ते
सत्त्वेन केनापि निगृह्य नीतः ॥

राजा—उत्थाय । मा तावत् &c.

---

## ACT VII.

P. 188. अस्य बालस्य &c.—अस्य बालकस्यासंबद्धेपि भद्रमुख-संवादिनी आकृतिरिति विस्मितास्मि । अपि च वामशीलोपि भूत्वाऽपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः ।

P. 203. तव भवतु-For this some read—

क्रतुभिरुचितभागांस्त्वं सुरान्भावयालं
सुरपतिरपि वृष्ट्या त्वत्प्रजार्थं विधत्ताम् ।
इति समसुपकारव्यञ्जितश्रीमहिम्नो-
र्व्रजतु बहुतिथो वां सौहृदय्येव कालः ॥

*V. l.* क्रतुविरचितभागैस्त्वं—
.........वर्षं त्वत्प्रजास्वातनोतु ।
अविरतमुपकारव्यञ्जकं स्वे महिम्नि
.........सौहृदेनैव कालः ॥

---

१ Entitled to a share of the sacrificial food. २ The desired object of your subjects. ३ Full of-indicative of friendship.

# NOTES.

## ACT I.

P. 1. अथ—is invariably used at the beginning of Sanskrit works as इति is used to mark their close. It has the additional sense of auspiciousness, as having first emanated from the throat of Brahmá along with the sacred syllable *Om*. *Cf*. ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

अभिज्ञानशकुन्तलम्—शकुन्तैः लाता शकुन्तला। घञर्थे कः। अभिज्ञायते अनेन इति अभिज्ञानं a sign of recognition; here, the token-ring. अभिज्ञानेन स्मृता (or ज्ञाता) शकुन्तला अभिज्ञानशकुन्तला Mad. Tat.; तामधिकृत्य कृतं नाटकमभेदोपचारात् अभिज्ञानशकुन्तलम्. Here neither छ (ईय) nor अण् (अ) is affixed. The word is therefore to be explained like शारीरकं भाष्यं or रघुवंशः (see our note on this) &c.; see Bhaṭṭoji on Páṇ. IV. 3. 87. The reading ०शाकुन्तलं may also be defended—शकुन्तलामधिकृत्य कृतं नाटकं शाकुन्तलं by affixing अण् by 'अधिकृत्य कृते ग्रन्थे'; अभिज्ञानप्रधानं शाकुन्तलं अभि०.

The play opens with a Benediction in which S'iva is invoked to protect the audience. For, rhetoricians lay down—'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्'—Every poetic composition should begin with a benediction (आशीः, as here), salutation (नमस्क्रिया, as in Ragh.), or hinting of the subject-matter (वस्तुनिर्देश as in Kum. or Megh.).

या सृष्टिः &c.—Kâli. has probably based the idea of this s'l. on the following from the Bhav. P., which mentions the eight different manifestations of S'iva with their respective types or representatives in the eight visible forms mentioned here:—शर्वाय क्षितिमूर्तये नमः। भवाय जलमूर्तये नमः। रुद्रायाग्निमूर्तये नमः। उग्राय वायुमूर्तये नमः। भीमायाकाशमूर्तये नमः। पशुपतये यजमानमूर्तये नमः। महादेवाय सोममूर्तये नमः। ईशानाय सूर्यमूर्तये नमः। मूर्तयोऽष्टौ शिवस्यैताः।. He refers to these eight forms elsewhere also; अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः Mâl. I. 1; Ragh. II. 35 (पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः॥ Yâdava, as quoted by Malli. on *Ibid.*); Kum. I. 57, VI. 76.

आद्या—Comp. Manu. I. 8 सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव &c. quoted by the Com. The genesis of the world given in the Upanishads is different from this. We have in the Tait. Up. तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायो-

कञ्चु०–परित्रायतां सुहृदं महाराजः। राजा–कस्मात्परित्रातव्यः। कञ्चु०–महतः कृच्छ्रात्। राजा–अये भिन्नार्थं[ अनिर्भिन्नार्थं–निर्भि० ]मभिधीयताम्। कञ्चु०—योसौ [ अभ्रंलिहो ] दिगवलोकनप्रासादो मेघच्छन्नो नाम। राजा–किं तत्र। कञ्चु०—

तस्याग्रभागाद्गृ ( ग्रभूमेर्गृ ) हनीलकण्ठै—
रनेकविश्राम[विश्रान्ति]विलङ्घ्यशृङ्गात्[ङ्गम्]।
सखा प्रकाशेतरमूर्तिना ते
सत्त्वेन केनापि निगृह्य नीतः॥

राजा—उत्थाय। मा तावत् &c.

---

## ACT VII.

P. 188. अस्य बालस्य &c.—अस्य बालकस्यासंबद्धेपि भद्रमुखसंवादिनी आकृतिरिति विस्मितास्मि। अपि च वामशीलोपि भूत्वाऽपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः।

P. 203. तव भवतु–For this some read—

क्रतुभिरुचितभागांस्त्वं सुरान्भावयालं
सुरपतिरपि वृष्ट्या त्वत्प्रजार्थं विधत्ताम्।
इति सममुपकारव्याञ्जितश्रीमहिम्नो-
र्व्रजतु बहुतिथो वां सौहृदय्येव कालः॥

*V. l.* क्रतुविरचितभागैस्त्वं—
........वर्षं त्वत्प्रजास्वातनोतु।
अविरतमुपकारव्यञ्जकं स्वे महिम्नि
.........सौहृदेनैव कालः॥

---

१ Entitled to a share of the sacrificial food. २ The desired object of your subjects. ३ Full of—indicative of—friendship.

# NOTES.

## ACT I.

P. 1. अथ—is invariably used at the beginning of Sanskrit works as इति is used to mark their close. It has the additional sense of auspiciousness, as having first emanated from the throat of Brahmá along with the sacred syllable *Om*. *Cf.* ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥

अभिज्ञानशकुन्तलम्—शकुन्तैः लाता शकुन्तला। घञर्थे कः। अभिज्ञायते अनेन इति अभिज्ञानं a sign of recognition; here, the token-ring. अभिज्ञानेन स्मृता ( or ज्ञाता ) शकुन्तला अभिज्ञानशकुन्तला Mad. Tat.; तामधिकृत्य कृतं नाटकमभेदोपचारात् अभिज्ञानशकुन्तलम्. Here neither छ (ईय) nor अण् (अ) is affixed. The word is therefore to be explained like शारीरकं भाष्यं or रघुवंशः ( see our note on this ) &c.; see Bhaṭṭoji on Páṇ. IV. 3. 87. The reading ०शाकुन्तलं may also be defended—शकुन्तलामधिकृत्य कृतं नाटकं शाकुन्तलं by affixing अण् by 'अधिकृत्य कृते ग्रन्थे'; अभिज्ञानप्रधानं शाकुन्तलं अभि०.

The play opens with a Benediction in which S'iva is invoked to protect the audience. For, rhetoricians lay down—'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्'—Every poetic composition should begin with a benediction ( आशीः, as here), salutation (नमस्क्रिया, as in Ragh. ), or hinting of the subject-matter (वस्तुनिर्देश as in Kum. or Megh.).

या सृष्टिः &c.—Kâli. has probably based the idea of this s'l. on the following from the Bhav. P., which mentions the eight different manifestations of S'iva with their respective types or representatives in the eight visible forms mentioned here:—शर्वाय क्षितिमूर्तये नमः। भवाय जलमूर्तये नमः। रुद्रायाग्निमूर्तये नमः। उग्राय वायुमूर्तये नमः। भीमायाकाशमूर्तये नमः। पशुपतये यजमानमूर्तये नमः। महादेवाय सोममूर्तये नमः। ईशानाय सूर्यमूर्तये नमः। मूर्तयोऽष्टौ शिवस्यैताः।. He refers to these eight forms elsewhere also; अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः Mál. I. 1; Ragh. II. 35 (पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्याचन्द्रमसौ सोमयाजी चेत्यष्टमूर्तयः॥ Yâdava, as quoted by Malli. on *Ibid.*); Kum. I. 57, VI. 76. आद्या—Comp. Manu. I. 8 सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव &c. quoted by the Com. The genesis of the world given in the Upanishads is different from this. We have in the Tait. Up. तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायो-

रग्निः । अग्नेरापः । अद्भ्यः पृथिवी &c., which is more scientific. Manu also further on ( I. 78 ) says that water was produced from *tejas*.

वहति—&c.–*i. e.*, वह्नि—lit. 'the carrier of oblations (offered in due from, see Com. ) to the gods', the original conception of fire being that of a mediator between man and the gods. *Cf.* the S'ruti 'जातवेदा देवेभ्यो हव्यं वहतु.' See Kum. I. 57. Fire is sometimes regarded as the mouth or tongue of the gods. विधिहुत—For the force of विधि see com. होत्री—A sacrificer during the performance of the sacrificial rites is regarded as a portion of S'iva. Comp. त्रिलोचनैकांशतया Ragh. III. 66.

कालं विधत्तः—Make, *i.e.*, regulate time; mark by their presence day and night, the most natural divisions of time. *Cf.* the two epithets दिवाकर, अहस्कर and निशाकर or क्षपाकर of the sun and the moon respectively.

Some object to this explanation quoting Manu-Smriti (अहोरात्रे विभजते सूर्यो मानुषदैविके) which says that the sun alone divides time into day and night ( the moon not being necessary for the latter, बहुलपक्षे असत्यपि चन्द्रे रात्रेः संभवात् ) and explain the passage as meaning solar and lunar days—the year as regulated by the courses of the sun and the moon. This explanation is more scientific than natural or poetical. The very names दिवाकर and क्षपाकर however imply what the popular idea is.

श्रुतिविषयगुणा—Whose ( peculiar ) property is S'abda or sound; ( श्रुतिविषय lit. that which is *the object* of or perceptible to the ear ). *Cf.* अथात्मनः शब्दगुणं गुणज्ञः पदम् । Ragh. XIII. I. This is perhaps the only reference to Nyáya philosophy in Kâlidâsa. It is also possible that the poet might have taken the idea from the Sâṃkhya philosophy. व्याप्य स्थिता—Comp. व्याप्य स्थितं रोदसी Vik. I. 1. आकाश is विभु, *i.e.*, all-pervading.

सर्वबीज—( 1 ) सर्वेषां बीजानां seeds or germs प्रकृतिः ( the origin or immediate cause of ); Gen.-Tat.; the manifestation of life, vegetable and animal, being possible when the evolution had reached the state of solidity of matter. प्रकृतिः—The Nom. is used, as the idea of कर्म is expressed by इति; otherwise the cons. would be ०प्रकृतिमाहुः । See com. प्रकृतिः is a philosophic term as विकृति its opposite also is. प्रकृति means 'the original,' the prime cause of a thing, while विकृति means its evolutes or products. The reading 'सर्वभूतप्रकृति॰' is faulty, because water is here said to be the first creation from which all the *Bhûtas* have sprung. It may, however, be defended by

assigning to '*Bhûta*' the same meaning (*viz.*, a secondary product) as in 'अवनिरिव चतुर्विधस्य भूतग्रामस्य' (S'âr. Bh.), the four classes of *Bhûtas* referred to being (1) जरायुज or those born of the womb, viviparous animals, such as man, &c.; (2) अण्डज or those born from eggs, or oviparous, such as birds; (3) स्वेदज or those produced by sweat or warm moisture, such as insects, &c.; and (4) उद्भिज्ज or those germinating from the soil, such as plants. प्राणिनः प्राणवन्तः—The Com. removes the apparent tautology by taking प्राणिनः in the sense of 'creatures that are born', living creatures, and प्राण in प्राणवन्तः in the sense of 'the breath of life', 'strength or vigour. The first excludes all that have no breath; the second refers to all that are not excluded by the first.

प्रत्यक्षाभिः—According to Bhánuji Dîkshit अक्षाणि इन्द्रियाणि प्रतिगताः प्रत्यक्षाः accessible to the senses; प्रादिसमासः. According to the Sid.-Kau. we have first an Avya. fr. प्रति+अक्षि (अक्ष्णोः प्रति) where अक्षि means any इन्द्रिय (सर्वमिन्द्रियं वृत्तिविषये अक्षिशब्दो वक्ति। Kaiyaṭa), the समासान्त अच् being added by the Vártika प्रतिपरसमनुभ्योऽक्ष्णः; and then it is converted into an adj. by adding अ (अच्) by considering it as a word of the अर्शआदि group. प्रपन्नः—'got at by', *i. e.*, possessing. Some understand it in the sense of 'understood', or known from these visible forms. प्रसन्न *v. l.*—means 'S'iva being pleased', but in this case the epithet प्रत्यक्षाभिः has no force. All the forms are not *pratyaksha*; आकाश and वायु are regarded as not *pratyaksha* but *anumeya*. *Váyu*, however, is felt by the skin, and so it may be called प्रत्यक्ष. आकाश also is प्रत्यक्ष according to the Vedânta Philosophy; for शब्द being प्रत्यक्ष to श्रुति, आकाश may also be regarded as such.

Kâlidâsa has addressed almost all his invocations to S'iva, a circumstance which strongly points to his predilection towards that God. He also alludes reverentially to S'iva in his Meghadûta. But from this we are not to infer that he was a bigoted S'aiva. His writings every now and then disclose the Vedântic turn of his mind. In the present S'loka he distinguishes the God S'iva from the Creator. In the opening stanza of the Vik. he describes him as the sole *Purusha*, spoken of in Vedânta, as remaining without space to occupy, after having exceeded the measure of heaven and earth (all space between the worlds above and below). In Kum. II. and Ragh. X. respectively, he describes Brahmâ and Vishṇu with equal veneration, and assigns to them the highest attributes which properly belong to Brahma (neu.), and in Kum. VII. 44 he actually speaks of these three

gods as each identical with the Supreme Brahman. From all this it is clear that Kâlidâsa was a *Vedântin*. Tradition, however, and his name itself, make him a devotee of the goddess Kâlî. Whichever view we accept, it does not militate against his S'aivism in literature. Kâlidâsa did not live in an age of sectarianism.

The commentator S'aṃkara with far-fetched subtlety points out how each type of S'iva corresponds with the circumstances in the life of S'akuntalâ. Thus या सृष्टिः &c. is compared with the sentiment in the verse चित्रे निवेश्य &c., and ये द्वे &c. with the two female friends. (Adapted from Sir M.-Williams.) Râghavabhaṭṭa also with his usual penetration and critical acumen explains how the subject-matter of the play is hinted, as it ought to be (according to the rule 'अर्थतः शब्दतो वापि मनाक्काव्यार्थसूचनम्' D.-R.), in the *Nândi*. See Com.

P. 4. नान्द्यन्ते—नान्दी is the Benedictory stanza, so called because the deities are said to *delight* by it. It serves as a *Maṅgala* which is necessary for the safe completion of a poetic composition (as remarked by Bharata तथाप्यवश्यं कर्तव्या नान्दी विघ्नप्रशान्तये ।. See our introductory note to Mal. I.) The *Nândî* here is technically called *Patrâvalî* (see com.) as it gives a clue to the future plot of the play and consists of eight *padas* according to Râghavabhaṭṭa. The term *pada* is differently interpreted; some take it to mean a line of a s'l.; according to them this Nândî consists of four *padas*; while according to others, who understand by *pada* an inflected form of a noun or a root (सुप्तिङन्तं पदं), the *Nândî* here consists of 35 *padas*. For the origin *cf.* नन्दी वृषः कोऽपि महेश्वरस्य रङ्गत्वमादौ किल खे जगाम । तद्रङ्गमुद्दिश्य कृतां तु पूजां नान्दीति तां नाट्यविदो वदन्ति ॥

नान्द्यन्ते सूत्रधारः—The *Sûtradhâra* is never introduced first in Sanskrit plays. *Nândî*, being the stanza or stanzas of benediction or invocation, must form the first words, and if it were preceded by the word सूत्रधार, it would lose its force of being the first words. [*Cf.* in this respect the Sûtra of Pâṇini वृद्धिरादैच्, which shows the tendency of the writers. The word वृद्धि is here put first, as indicative of prosperity, though the proper order should have been आदैज्वृद्धिः.] The Nândî was recited by the Sûtradhâra in the person of a Brâhmaṇa (as one authorized to give a blessing). The Sûtradhâra or the principal manager was generally a Brâhmaṇa and therefore qualified to repeat the *Nândî* in his own person; he did so, however, as a *Brâhmaṇa* and not in his character as a *Sûtradhâra* which he *did not* assume till he had finished the Nândî.

Hence the words प्रविश्य &c. are not used, the reciter of the verses being already present on the stage. If the manager happened to be a *non-Brâhmaṇa* he seems to have had no right to the title *Su'tradhâra*, nor could he repeat the Nândî. In this case a Brâhmaṇa performed the work of pronouncing the blessing; and the manager then entered, being called a स्थापक (a term also applying to the Bráhmaṇa *Sûtradhára*). See Jagaddhara's remarks in his com. on the Mâl.-Mâd. सूत्रधार—lit. means the *holder of the thread* (which runs through and holds together the various incidents &c. to be represented in a piece), the manager or chief actor who arranges the cast of characters &c. From the literal sense of the word it seems to have been originally applied to an exhibitor of puppets and paper-figures held by strings which he moved as he spoke. It is probable that the drama developed out of such exhibitions.

नेपथ्य—Bhânuji Dîkshit derives this as नि *n.* the eye, or नि *m.* नेता तस्य हितं suitable to, good-looking; some derive it from नृपथ्य or नर्पथ्य 'what is suitable to men or characters;' it means (1) the toilet room behind the curtains; (2) decoration; and (3) dress. Here it has the first two meanings.

P. 5. आर्यपुत्र—Lit. the son of the venerable one (the father-in-law); an honorific title used by a woman in addressing her husband.

अभिरूपभूयिष्ठा—Comp. dissolved as अभिरूपाः भूयिष्ठा यस्यामिति। अभिलक्ष्यं ('worth seeing', on account of their scholarship) रूपं येषां ते अभिरूपाः। The comp. may also be taken as अभिरूपाः भूयिष्ठं (the greatest part) यस्याः; *cf.* उदितभूयिष्ठ एप भगवान् तपनः। Mâl.-Mád. I.; सदश्वभूयिष्ठा द्रविणराशयः। Ragh. IV. 70. Mark the use of the word भूयिष्ठ 'most', and not 'all.' So this is a statement of facts and not a mere compliment addressed to the audience. The play was really popular since it could attract a large number of learned men. ०ग्रथित—comp. the use of the word सूत्र in सूत्रधार. वस्तु the plot of a play. See Introduction. ०लाख्येन—०शकुन्तलमित्याख्या यस्य. नामधेयेन *V. l.*—नाम एव नामधेयं; धेय is attached to रूप, नाम and भाग, स्वार्थे (in their own sense, *i. e.*, without causing change of meaning). उपस्थातव्यमस्माभिः—we should wait upon (with the performance of).

P. 6. सुविहितप्रयोगतया—by reason of your good assignment of parts, *i. e.* your skill in casting characters. Or अस्माकं सुविहित० by reason of our good acting, आयस्य &c. आयस्य

may go with (सुविहित०), or (2) परिहास्यते. परिहास्य ते—Pass. Fut. of हा with परि to abandon.

भूतार्थ—Lit. a thing which has happened; hence, the truth, reality. विज्ञान—The practical knowledge of a thing. बलवत्—Adv. *Cf. infra* बलवदस्वस्था शाकुन्तला III. p. 63; बलवदुत्कण्ठितास्मि V. p. 115; बलवदशरणोस्मि. VI. p. 153. Some take it with मनः but it is absurd. In Sanskrit we never speak of the मनस् being बलवत्.

अप्रत्ययं चेतः—The commentator notices in this verse the fault of अविमृष्टविधेयांशत्व which consists in the predicative portion not being properly considered or treated (विमृष्ट), *i. e.*, wherein the predicate is not mentioned at all, or a subordinate or wrong position is assigned to it. The reading he proposes is free from this fault. For, the adj. अप्रत्ययं is likely to be misunderstood either as a part of the predicate or as an extention of the subject; but the verb (प्रत्येति), when prominently mentioned, cannot be misunderstood. There is the fig. *Arthântaranyâsa* here, for which see Appendix. The student will often meet with this fig. in this work. For the idea here somewhat differently expressed, comp. तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः। हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ Ragh. I. 10. The poet indirectly expresses his modesty here in offering his play to the public.

अनन्तरक०—अविद्यमानमन्तरं delay यस्मिन्कर्मणि तद्यथा तथा करणीयं; a comp. सुप्सुपा; or कर्मधारय, if अनन्तरं be taken as an adj.

P. 7. श्रुतिप्रसादनतः—अन्य governs the abl. by अन्यारादितरर्ते &c. Pâṇ. II. 3. 29. उपभोगक्षम—meet for the enjoyment of such pleasures as besmearing the body with sandal &c.; also of amorous sports (as the season is अचिरप्रवृत्त and the feeling of love, therefore, not yet completely subsided, as elsewhere described by the poet; see below).

सुभग &c.—सुभग lit. 'for which a great effort is made' (on account of the pleasant sensation experienced; Râghav.); hence (so) pleasing (as to lead men to make such efforts), delightful. अवगाह–also वगाह. The अ of the prepositions अव and अपि may be optionally dropped according to the grammarian Bhâguri; *cf.* अवतंस, वतंस, अवलक्ष्य, वलक्ष्य &c. सुलभ—*v. l.* will do, as there is no scarcity of water as yet, the season being अचिरप्रवृत्त. It also explains the उपभोगक्षमत्व of the season. The only objection to this reading is that the word सुलभ occurs again in the 3rd

line. सुरभि—As the idea of fragrance is implied by पाटलसंसर्गि there is a slight पौनरुक्त्य or tautology; to avoid this the Com. explains this word by मनोज्ञ 'pleasant, delightful,' शीतलत्वेन सुखस्पर्शत्वात् सुरभित्वम्. प्रच्छाय—A thickly shaded spot; see com.; if the meaning be 'a thick shade' (a Prâdi Tat.) dissolve प्रकृष्टा छाया प्रच्छायं or प्रच्छाया see p. 29 (notes); सुलभनिद्राः in which sleep gently steals over men. Comp. with this the description of the season in the Ṛitusaṃhára—प्रचण्डसूर्यः स्पृहणीयचन्द्रमाः सदावगाहक्षमवारिसंचयः। दिनान्तरम्योऽभ्युपशान्तमन्मथो निदाघकालोयमुपागतः प्रिये ॥ Here there is no allusion to प्रचण्डसूर्यत्व and अभ्युपशान्तमन्मथत्व of the season, as it has just set in and is therefore favourable to the growth of love.

दिवसाः परिणामरमणीयाः—परिणामे रमणीयाः a comp. सह सुपा. We cannot take it as परिणामो रमणीयो येषां as the comp. then will be रमणीयपरिणामाः. Perhaps here there is an allusion to the plot of the play, wherein also the days are pleasant at the end.

ईषदीषत्—shows that the bees also touched the filaments gently.

सुकुमार०—see com.; or better still, सुकुमाराणि केसराणि शिखा येषाम्. For, as taken by the com., this will mean 'the tips of whose filaments are delicate;' while as a matter of fact it is the filaments that are delicate. So 'crested with delicate filaments' seems to be better. अवतंसयन्ति—अवतंसं कुर्वन्ति; A denom. verb from अवतंस, णिच् (इ) being added in the sense of तत्करोति तदाचष्टे। दयमानाः—taking pity. The ladies are described as प्रमदाs (प्रकृष्टो मदः pride of youth यासां), and as such are likely to handle the tender flowers roughly; but they do not do so owing to their kind-heartedness, and so the epithet is appropriate. This idea is common in Sanskrit literature; *cf.* तेनामरवधूहस्तैः सदयालूनपल्लवाः। Kum. II. 41. Or this may better be taken to mean 'loving', 'amorous', indicating the graceful way in which they placed the flowers on their ears. *Cf.* the word दयित in this sense; in this case the word प्रमदाः also will have better propriety. For this use of these flowers see the quotations from I. 27, VI. 18 given in the com.; also 'चारु कर्णे शिरीषम्' Megh. II. 2; च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात। Ragh. XVI. 48; अमी शिरीषप्रसवावतंसाः। *Ibid.* XVI. 61. Here the poet seems to make some references to the story of the piece; thus the delicate शिरीष refers to S'akuntalâ, and its gentle kissing by the bees to the temporary union of S'akuntalâ and the King.

P. 8. रागबद्ध—better dissolve रागेण बद्धा &c., fixed or chained by the melody. प्रकरणं—is used here in the general sense of 'a play;' it does not refer to the species of रूपक of that name; the word प्रकरण is put in the mouth of the Sûtra. to show that he forgot what he had already told the Naṭî.

आर्यमिश्रैः—"आर्याः सुकुलादिसंपन्नाः । यदाह भरतः–'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता । अद्रोह इति येष्वेतत्तानार्यान्संप्रचक्षते' ॥ मिश्रा वेदान्तवेदिनः।" Jagaddhara on Mál.-Mádh. The term simply means 'your respectable self.' मिश्र is a title of respect, like राव or पंत in Marathi. *Cf.* वाचस्पतिमिश्र &c. 'पूज्ये मिश्रवचनं नित्यं बहुवचनान्तम् । मरीचिमिश्रैर्दक्षेणेति विष्णुपुराणात्' Rangânâtha on Vik. आज्ञप्तम्—does not mean 'commanded,' but 'informed, told'. The verbs आज्ञापय् and विज्ञापय् are technical terms of address between superior and inferior persons, without any idea of actual command or request.

P. 9. तवास्मि &c.—हारिणा—(1) साधु हरतीति हारी powerfully attracting away; bewitching; *cf.* चित्तापहारिणि Bhar. Nît.; (2) drawing or luring away ( from the army). प्रसभम्—प्रगता सभा विचारः ( fr. सभ् originally सह् ) अस्मात् । सभायाः प्रगतः वा, used as an adv.; properly means 'thoughtlessly'; hence, forcibly, violently. हृतः अस्मि; or अस्मि may be taken as an indec. used in the sense of अहम्; 'अस्मीत्यस्मदर्थानुवादेऽहमर्थेपि' इति गणव्याख्याने । 'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये' इति प्रयोगात् । Malli. on आसंसृतेरस्मि जगत्सु जातः Kir. III. 6. सारङ्गः—सारमङ्गमस्य a word of the *S'akandhvâdi* group; there is पररूपसन्धि when the meaning is 'a deer'; otherwise साराङ्ग; see H. G. §21, (*c*). अतिरंहसा—अतिमात्रं रंहः यस्य तेन । दुष्यन्तः—The Calc. Ed. reads. दुष्मन्तः; but दुष्यन्त is the correct name as appears from 'दुष्यन्त इति घुष्यताम्' VI. 23, where घुष्यताम् is intended to give alliteration with दुष्यन्त.

एप राजेव—since the *Sútradhára* thus introduces to the audience the characters about to enter, this Prastâvaná is called a *Prayogátis'aya*; see com.; D.-R. p. 80. Here the Sûtra. is supposed to be a man of those days, or the एषः may refer to the actor entering, assuming the character of Dushyanta.

P. 10. सूतः—The Sútas formed a mixed class of men, being the offspring of a Kshatriya father and a woman of the Bráhmaṇa class and followed the profession of charioteers. क्षत्रियाद्विप्रकन्यायां ( a woman unmarried ) सूतो भवति जातितः । सूतानामश्वसारथ्यं; Manu. X. 11, 47. आयुष्मन्—'O you having long life.' The charioteer is always to address the king thus, and

apparently for these reasons—(1) The charioteer was, in olden days, a much-respected man, being experienced and grown old in the royal household; thus he was generally older than the king; (2) the chariot was used generally in times of war or chase, occasions when the life of the king was in danger; this was therefore the most appropriate blessing and a term of address at the same time.

अधिज्यकार्मुके—अधिरूढा ज्या यत्र, अधिगता ज्या अनेनेति वा Bah.; ज्यामधिगतं ( Tat. ) वा. कर्मणे प्रभवतीति कार्मुकम्; कर्मन्+उकञ् by कर्मण उकञ् Pâṇ. V. 1. 130. पिनाकिन्—S'iva with his bow Pináka. The word S'iva would not have suited, as the idea of the bow would have been excluded. मृगानुसारिणम्—Once Daksha performed a horse-sacrifice to which he invited all the other gods,° but did not invite S'iva, his son-in-law. Highly indignant at this, S'iva, with his wife Satí, suddenly presented himself there, confounded the sacrifice, dispersed the gods, mutilated the horse, and giving chase to *Yajña* that fled through the air in the form of a fleet deer, overtook and decapitated him. According to the Vá. P., S'iva created a manifestation of himself in the shape of a monster named Vîrabhadra who pursued the Sacrifice that was running in the form of a deer. Comp. विद्रुतक्रतुमृगानुसारिणं येन बाणमसृजद् वृषध्वजः। Ragh. XI. 44.

अयं पुनः—पुनः shows that there is no difference in the speed of the deer. Although he has been running so long, he is still running with the same speed.

ग्रीवाभङ्गा०—स्यन्दते goes quickly इति स्यन्दनः; fr. स्यन्द् 1. Â. to run and ल्युः (अन) कर्तरि. So the word is appropriate here. दत्तदृष्टिः—बद्धदृष्टिः *v. l.* is to be rejected; for in the first place the word मुहुः goes against it; secondly it is not possible for the antelope to fix his eyes on the chariot in his hurry. पश्चार्धेन—अपरः अर्धः पश्चार्धस्तेन। By the *Vârtika* 'अपरस्यार्धे पश्चभावो वक्तव्यः' अपर becomes पश्च when followed by अर्ध in a Tat.; some think

---

° According to the Mahâbhârata the gods instituted a sacrifice wherein no portion of the offerings was offered to S'iva. Enraged at this—सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः। ततः साधनमन्विच्छन्धनुरादौ ससर्ज ह॥ ......ततः क्रुद्धो महादेवस्तदुपादाय कार्मुकम्। आजगामाथ तत्रैव यत्र देवाः समीजिरे॥ तमात्तकार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम्। विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे॥......न प्रत्यभाच्च यज्ञः स देवताश्चेसिरे तथा। ततः स यज्ञं विव्याध रौद्रेण हृदि पत्रिणा। अपक्रान्तस्ततो यज्ञो मृगो भूत्वा स पावकः। स तु तेनैव रूपेण दिवं प्राप्य व्यराजत॥ अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले॥ &c. Sauptika Par. 18.

